*dhyāna* and *samādhi*, together referred to as *saṁyama*, the modifications of *saṁyama*; *vibhūtis* like vision of the past and future, cosmic vision, *kāyavyūha* and others, which, while being the fruits of *saṁyama*, act as incentives to the ultimate Yoga that leads to *kaivalya*; the *siddhis* like *indrīyajaya* and lastly the ultimate fruit of Yoga, the discriminatory knowledge called *tāraka*.

The *kaivalyapāda*, drawing its name from the main subject of enquiry, the state of *kaivalya* which, the Yogin, unattached to the multifarious powers conferred by Yoga, reaches through the nullification of everything (*sarvopasaṁhāra*), is devoted to a study of the two forms of *kaivalya*, of the state of the mind that is fit for *kaivalya*; of the other world; of the nature of the self that travels to the higher world; of the self that partakes of pleasure and pain; of the *dharmameghasamādhi* and incidentally of some other connected topics.

*Value of the commentary, Vivaraṇa.*

These ideas which form the subject of the Yogasūtra, consisting on the whole of 195 *sūtras*, are brilliantly expounded by the profound *bhāṣya* of Vedavyāsa in a style of mellifluous sweetness, captivating vigour and enrapturing charm. The Vyāsabhāṣya, such as it is, is beautifully matched by the excellent commentary of Śaṅkara, adorned by a style, characterised at once by sweet lucidity and deep profundity. This commentary expounding brilliantly the ideas of the *bhāṣya* will be of great use to those who seek information on Yoga and is bound to prove a very significant addition to the available literature on Yoga.

Even a mere superficial glance at its pages from the quill of its illustrious author is bound to impress anyone by the ease of its analysis and the beauty of its exposition and convince anyone of its worth. Such as it is, it does not really call for any appreciatory remarks from any. Special mention must however be made here about the searching disquisition on *Īśvara*, where the case for the acceptance of *Īśvara* is established at length by arguments not found in similar tracts while the arguments of the atheistic and nihilistic schools are ably refuted by suitable counter arguments.

*Other works referred to in the commentary.*

The following are the names of other works referred to in the Vivaraṇa.

(1) The ten Upaniṣads.
(2) Bhagavadgītā.
(3) Mokṣadharmaparvan of the Mahābhārata.
(4) Viṣṇusahasranāmastotra.
(5) Manusmṛti.
(6) Gautamadharmasūtra.
(7) Pāṇinisūtra.
(8) Mahābhāṣya.
(9) Śābarabhāṣya.
(10) Ślokavārtika and others.

*Other Commentaries on the Vyāsabhāṣya.*

A piece of interesting information furnished by the Vivaraṇa is the existence of an older commentary on the Vyāsabhāṣya, which is referred to by the words 'अन्येषां व्याख्यानम्'. It may not be unreasonable to surmise from this that an older commentary or commentaries should have been in existence. However the name of either the commentary or of its author is not mentioned.

Among later commentaries may be mentioned the Tattvaviśāradī of Vācaspatimiśra and the Yogavārtika of Vijñānabhikṣu, both hitherto published.

*Commentaries on the Yogasūtra.*

There are also numerous printed commentaries on the Yogasūtra and among them the following deserve mention.

(1) Vṛtti called *Rājamārtaṇḍa* by Bhojadeva.

(2) *Yogasūtradīpikā* by Bhāvagaṇeśa disciple of Vijñānabhikṣu.

(3) Vṛtti of Nāgojibhaṭṭa, which follows (2).

(4) Vṛtti called *Maṇiprabhā* by Ramānandayati.

(5) *Yogasiddhāntacandrikā* by Nārāyaṇatīrtha.

(6) *Sūtrārthabodhinī* by the same author.

(7) Vṛtti called *Yogasudhākara* by Sadāśivabrahmendrayati.

*Manuscript material.*

The present edition of the Yogasūtrabhāṣyavivaraṇa had to be based on the sole available manuscript of the Government Oriental Manuscripts Library, Madras, as our efforts to secure another manuscript for collation yielded no favourable result. And what is worse, even the manuscript on which the present edition is based was extremely defective, and at first sight it appeared almost impossible to present a correct version of the

text with its aid. Owing perhaps to the inadvertence of the scribe, or what is more plausible, to the disorderly and topsy-turvy arrangement of many leaves in the original manuscript, from which the present one was copied, or to some other cause that passes our comprehension, the continuity of the text was seriously disrupted in many places. In all such places, portions of the text that followed certain other parts, had no link whatsoever with the sentences that went before, and as a consequence it was impossible to make any sense out of them. We were really pained at this haphazard state of the manuscript, and at one time, even felt, that the publication, if undertaken, may be merely a thankless task.

It cost us much agonising grief and more herculean effort to bring together the scattered and mutilated parts separated by many pages in between, and insert them at their proper places. It is the sheer grace and blessing of the Bhagavatpāda that guided us to restore properly, by the maxims of सिंहावलोकन and मण्डूकप्लुति later parts of the text to their proper places at some distant earlier stage, and likewise earlier parts of the text in the correct context at some distant later stage. We had to search sentence by sentence, and even letter by letter before finalising such a change. Great indeed was the pleasure that we derived, when we found that after bringing together such parts, the continuity of the text was well maintained and the text yielded good sense. All such changes effected by us have been indicated in separate foot-notes in all the twenty different places, giving full details about the original places in which such sentences were found in the manuscript and the number of pages in the manuscript that separated them.

In spite of the fact that we have thus almost left no stone unturned in arriving at the correct text, it may be that errors have crept in unconsciously and they may have to be duly corrected by *sahṛdayas* in the process of study or of instruction.

We have to express our thanks to Sri V. Venkatachalam, M.A., Vedānta Śiromaṇi, Lecturer in Sanskrit, Vivekananda College, for this free English version of our Sankrit Introduction.

पूज्यान् पतञ्जलिव्यासशङ्करांश्चीन् गुरून् नुमः ।
योगशास्त्रस्य वेदान्तशास्त्रस्यापि प्रवर्तकान् ॥

*Polagam Śri Rāma Sāstrī*
*S. R. Krishnamūrti Śāstrī*

॥ श्रीः ॥

# ॥ प्रास्ताविकम् ॥

स्तुवे पतञ्जलिं व्यासं शङ्करं च मुनित्रयम् ।
कर्तॄ सूत्रस्य भाष्यस्य क्रमाद्विवरणस्य च ॥

इदमिदानीम् इदम्प्रथमतया मुद्रयित्वा प्रकाशपदवीमानीयते **मद्रास्-नगरस्थराजकीयप्राच्यपुस्तकागाराध्यक्षैः श्रीपातञ्जलयोगशास्त्र[सूत्रभाष्य]-विवरणाभिधं ग्रन्थरत्नम्** ॥

अस्य च निर्मातारः **श्रीभगवत्पादा** इति महदिदं प्रमोदस्थानम् ॥

यद्यप्यत्र विवदेयुर्विमर्शकाभिमानिनः—'विवरणस्यास्य प्रणेतारः श्रीभगवत्पादा वा? अन्ये वा?' इति । किमत्र विशेषितेन, यत् एतदीयमूलग्रन्थयोः योगसूत्रतद्भाष्ययोः प्रणेतृविषयेऽपि समस्त्येव विप्रतिपत्तिर्बहूनां ग्रन्थकर्तृकालयोर्विमर्शकानाम्—'किमयं सूत्रकृत् महाभाष्यकर्तैव पतञ्जलिः? उतान्यः? इति, किमयं भाष्यकृत् ब्रह्मसूत्रकृद्वेदव्यास एव? उतान्यः?' इति च । ते यथामतिकौशलं बहूनुल्लेखानुल्लिखन्ति च ॥

अत्र च इत्थं प्रतिभाति—शब्दब्रह्मवित् भगवान् भर्तृहरिः स्वीये वाक्यपदीये ब्रह्मकाण्डे—

"कायवाग्बुद्धिविषया ये मलाः समवस्थिताः ।
चिकित्सालक्षणाध्यात्मशास्त्रैस्तेषां विशुद्धयः ॥"

इति पद्येन यत् शास्त्रत्रयं करणत्रयगतमलत्रयविशोधकम् आवेदयति, तत् शास्त्रत्रयमपि भगवान् पतञ्जलिः प्रणिनायेति प्रतिपादयति प्राचीनपारम्पर्यागतं प्रसिद्धं पद्यमिदम्—

"योगेन चित्तस्य पदेन वाचां
मलं शरीरस्य च वैद्यकेन ।
योऽपाकरोत् तं प्रवरं मुनीनां
पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥" इति ।

पातञ्जलयोगसूत्रवृत्तिकृत् भोजदेवोऽपि—

"वाक्चेतोवपुषां मलः फणभृतां भर्त्रेव येनोद्धृतः"

इति पतञ्जलिमुपमानीकृत्य स्वस्य ग्रन्थत्रयेण मलत्रयोद्धारकत्वमाचष्ट ॥

तच्च शास्त्रत्रयं पातञ्जलम्, महाभाष्यम्, चरकप्रतिसंस्कृतं च इति चरकतन्त्रटीकाकृत् चक्रपाणिदत्त आवेदयति—

"पातञ्जलमहाभाष्यचरकप्रतिसंस्कृतैः ।
मनोवाक्कायदोषाणां हर्त्रेऽहिपतये नमः ॥" इति ॥

अत्र च भगवदात्रेयशिष्येण अग्निवेशेन महर्षिणा प्रणीतमेव वैद्यकतन्त्रं खिलीभूतं चरकनाम्ना पतञ्जलिना प्रतिसंस्कृतत्वात् चरकप्रतिसंस्कृतपदेन व्यपदिश्यते । निरुपपदेन पातञ्जलमिति पदेन च योगसूत्रमुच्यते। अत एव योगसूत्रवृत्तौ भोजः—

"शब्दानामनुशासनं विदधता पातञ्जले कुर्वता
वृत्तिं राजमृगाङ्कसंज्ञकमपि व्यातन्वता वैद्यके ॥"

इति पातञ्जलपदेन निरुपपदेन योगसूत्रं निरदिक्षत् ॥

योगे सूत्रस्य, व्याकरणे भाष्यस्य, वैद्यके वार्तिकस्य च कर्तृत्वात् पतञ्जलिः सूत्रकृत्, भाष्यकृत्, वार्तिककृच्च इति पतञ्जलिचरिते रामभद्रदीक्षितः प्रतिपादयति—

"सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च वार्तिकानि ततः ।
कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिदं त्रातुम् ॥" इति ।

तत्र च पद्ये ततः इति पदं महाभाष्यप्रणयनानन्तरम् इत्यर्थकम् । लघुमञ्जूषायां "तदुक्तं चरके पतञ्जलिना" इति पुनःपुनः चरकवाक्यानि उदाहरन् नागेशभट्टः चरकतन्त्रं पतञ्जलिप्रणीतमवबोधयति । चरकनामकपतञ्जलिकृतस्य ग्रन्थस्यापि चरकमिति व्यपदेशः । कर्तृनाम्ना ग्रन्थव्यपदेशश्च बहुलं दृश्यते ॥

तदित्थं महाभाष्यकर्तैव श्रीशेषावतारभूतः पतञ्जलिः योगसूत्रकर्तेति निर्णयो भवितुमर्हति सहृदयानाम् ॥

एवं ब्रह्मसूत्रकर्तैव च वेदव्यासः योगसूत्रभाष्यकर्तेति निर्णयेऽपि समस्ति प्रमाणम् । यतः—

"ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे ।
ज्ञानशक्त्यवताराय नमो भगवतो हरेः ॥"

इति भामत्याम्,

"नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते ।
संक्षिप्तस्पष्टबह्वर्था भाष्ये व्याख्या विधास्यते॥"

इति योगभाष्यटीकायां तत्त्वविशारद्यां च, ब्रह्मसूत्रकृतं योगभाष्यकृतं च वेदव्यासशब्देन व्यवहरन् श्रीवाचस्पतिमिश्रः ब्रह्मसूत्रकृत् श्रीमन्नारायणावतारः वेदव्यास एव योगभाष्यकृत् इत्यावेदयति ॥

"श्रीपातञ्जलभाष्यदुग्धजलधिर्विज्ञानरत्नाकरः
वेदव्यासमुनीन्द्रबुद्धिखनितो योगीन्द्रपेयामृतः ।"

इति विज्ञानभिक्षुप्रणीतयोगवार्तिकस्थं पद्यमपि अमुमभिप्रायं परिपोषयति ॥

लघुमञ्जूषायाः कलाव्यटीकाकृत् पायगुण्डवैद्यनाथभट्टः (काशीमुद्रितपुस्तके (३२१) पुटे) "योगसूत्रभाष्ये वेदान्तसूत्रकृदुक्तत्वात्" इति वाक्येन स्पष्टमेव योगभाष्यकर्तारमेव ब्रह्मसूत्रकर्तारमवगमयति ॥

इत्थमेव विवरणकर्ताऽपि श्रीपरमेश्वरावतारभूतः भगवत्पाद एवेति निर्णेतुमस्त्यवकाशः । यतः प्रस्थानत्रयभाष्यग्रन्थेष्विव अत्रापि प्रतिपादम् ग्रन्थसमाप्तौ "इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य श्रीशङ्करभगवतः कृतौ श्रीपातञ्जलयोगशास्त्र(सूत्रभाष्य)-विवरणे प्रथमः पादः" इत्यादि स्फुटं विलिखितमादर्शकोशे ॥

यद्यपि योगसूत्रतद्भाष्ययोः ग्रन्थान्तरेषु पतञ्जलिवेदव्यासकर्तृकत्वव्यवहारवत् अत्र विवरणे भगवत्पादकर्तृकत्वव्यवहारः इयदवधि नोपलभ्यते, तथाऽपि ग्रन्थसमाप्तौ भगवत्पादकृतत्वनिर्देश एव परमं प्रमाणं यावद्बाधकानुपलम्भं प्रमाणानां स्वतःप्रामाण्यवादिनामलम् ॥

किञ्च, 'ओमित्येतदक्षरमित्याद्यष्टाध्यायी छान्दोग्योपनिषत् । तस्याः संक्षेपतोऽर्थजिज्ञासुभ्यः ऋजुविवरणमल्पग्रन्थमिदमारभ्यते' इति छान्दोग्योपनिषद्भाष्योपक्रम इव, "अथ 'आध्यात्मिकान् योगान्' इत्याद्यध्यात्मपटलस्य संक्षेपतो विवरणं प्रस्तूयते" इति आपस्तम्बधर्मसूत्रीयप्रथमप्रश्नाष्टमपटलविवरणोपक्रम इव च, अत्रापि 'अथेत्यादिपातञ्जलयोगशास्त्रविवरणमारभ्यते' इति ग्रन्थारम्भशैलीसादृश्यं, ग्रन्थस्य विवरणनाम-

साजात्यं, ब्रह्मसूत्रभाष्ये "स्मरन्ति च" (४-१-१०) इत्यत्र "अत एव पद्मकादीनामासनविशेषाणामुपदेशो योगशास्त्रे" इति, "प्रदीपवदावेशस्तथा हि दर्शयति" (४-४-१५) इत्यत्र "एषैव च योगशास्त्रेषु योगिनामनेकशरीरयोगप्रक्रिया" इति, "एतेन योगः प्रत्युक्तः" (२-१-३) इत्यत्र "योगशास्त्रेऽपि 'अथ तत्त्वदर्शनाभ्युपायो योगः' इति सम्यग्दर्शनाभ्युपायत्वेनैव योगोऽङ्गीक्रियते" इति च बहुषु स्थलेष्विव अत्रापि 'योगशास्त्रविवरणमारभ्यते' इति योगशास्त्रपदेनैव योगग्रन्थनिर्देशः, प्रमेयप्रतिपादनशैलीसाम्यं चेत्यादिकं विमृश्यमानं भगवत्पादप्रणीतत्वं विवरणग्रन्थस्य अभ्यूहितुं कियन्तमित्र अवकाशं ददाति । विमर्शकाभिमानिनः इयतैव च तुष्येरन् ॥

अत्रेयं शङ्का केषाञ्चित् उदियात्—ब्रह्मसूत्रकृत् वेदव्यास एव योगभाष्यकर्ता, ब्रह्मसूत्रभाष्यकृत् भगवत्पाद एव च योगभाष्यविवरणकर्ता इत्यभ्युपगमो न युज्यते, वेदान्तदर्शने "एतेन योगः प्रत्युक्तः" इति योगदर्शननिराकरणात्, अप्रमाणत्वेनाभ्युपगतस्य योगसूत्रस्य निराकर्तृभ्यामेव वेदव्यासभगवत्पादाभ्यां भाष्यतद्विवरणप्रणयनायोगात्—इति ॥

तस्या इत्थं समाधानं प्रतिभाति—योगदर्शनं न तु सर्वथा निराकृतम्, अप्रमाणत्वेनाभ्युपगतं च, ब्रह्मसूत्रतद्भाष्यकृद्भ्याम् । यतः योगप्रत्युक्त्यधिकरण एव वेदव्यासहृदयविदो भगवत्पादाः–'सम्यग्दर्शनाभ्युपायो हि योगो वेदे विहितः–"श्रोतव्यो मन्तव्यो निदिध्यासितव्यः"(बृह.उप.२-४-५-)इति । "त्रिरुन्नतं स्थाप्य समं शरीरम्" (श्वेताश्व. २·८-) इत्यादिना च आसनादिकल्पनापुरस्सरं बहुप्रपञ्चं योगविधानं श्वेताश्वतरोपनिषदि दृश्यते । लिङ्गानि च वैदिकानि योगविषयाणि सहस्रश उपलभ्यन्ते–"तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्" (का.उ.२-६·११) इति, "विद्यामेतां योगविधिं च कृत्स्नम्" इति चैवमादीनि । योगशास्त्रेऽपि—"अथ तत्त्वदर्शनाभ्युपायो योगः" इति सम्यग्दर्शनाभ्युपायत्वेनैव योगोऽङ्गीक्रियते' इत्यादिना वाक्येन योगम् औपनिषदसम्यग्ज्ञानसाधनम् अभ्युपागमन् । 'निराकरणं तु न साङ्ख्यज्ञानेन वेदनिरपेक्षेण योगमार्गेण वा निःश्रेयसमधिगम्यते इति । श्रुतिर्हि वैदिकादात्मैकत्वविज्ञानादन्यन्निःश्रेयससाधनं वारयति—"तमेव विदित्वा अति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय" (श्वे. उ.३·८)इति, 'द्वैतिनो हि ते साङ्ख्या योगाश्च नात्मैकत्वदर्शिनः' 'येन त्वंशेन न विरुध्यते तेनेष्टमेव साङ्ख्ययोगस्मृत्योः सावकाशत्वम्'

तद्यथा—"असंगो ह्ययं पुरुषः" (बृ.उ. ४-३-१६) इत्येवमादिश्रुतिप्रसिद्धमेव पुरुषस्य विशुद्धत्वं निर्गुणपुरुषनिरूपणेन साङ्ख्यैरभ्युपगम्यते । तथा च योगैरपि—"अथ परिव्राद् विवर्णवासा मुण्डोऽपरिग्रहः" (जाबाल. ३-५) इत्येवमादिश्रुतिप्रसिद्धमेव निवृत्तिनिष्ठत्वं प्रव्रज्याद्युपदेशेनानुगम्यते' इत्यादिना च वाक्येन हेयोपादेयविषयविभागेन योगदर्शनस्य ग्राह्यत्वं व्यवस्थापयामासुः ॥

भगवत्पादहृदयवित् भामतीकृदपि तत्रैवाधिकरणे—"नानेन योगशास्त्रस्य हैरण्यगर्भपातञ्जलादेः सर्वथा प्रामाण्यं निराक्रियते । किं तु, जगदुपादानस्वतन्त्रप्रधानतद्विकारमहदहंकारपञ्चतन्मात्रगोचरं प्रामाण्यं नास्तीत्युच्यते । न चैतावता एषामप्रामाण्यं भवितुमर्हति । यत्पराणि हि तानि, तत्राप्रामाण्ये अप्रामाण्यमश्नुवीरन् । न चैतानि प्रधानादिसद्भावपराणि । किं तु, योगस्वरूप-तत्साधन - तदवान्तरफलविभूति - तत्परमफलकैवल्यव्युत्पादनपराणि । तच्च किञ्चित् निमित्तीकृत्य व्युत्पाद्यमिति प्रधानं सविकारं निमित्तीकृतम् । पुराणेष्विव सर्गप्रतिसर्गवंशमन्वन्तरवंशानुचरितं तत्प्रतिपादनपरेषु । न तु तद्विवक्षितम् । अन्यपरादपि चान्यनिमित्तं तत् प्रतीयमानम् अभ्युपेयेत, यदि न मानान्तरेण विरुध्येत । अस्ति हि वेदान्तश्रुतिभिरस्य विरोध इत्युक्तम् । तस्मात् प्रमाणभूतादपि योगशास्त्रात् न प्रधानादिसिद्धिः । अत एव योगशास्त्रं व्युत्पादयिता आह स्म भगवान् वार्षगण्यः—

"गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम् ॥" इति ।

योगं व्युत्पिपादयिषता निमित्तमात्रेण इह गुणा उक्ताः, न तु भावतः, तेषामतात्त्विकत्वात् इत्यर्थः । अलोकसिद्धानामपि प्रधानादीनाम् अनादिपूर्वपक्षन्यायाभासोत्प्रेक्षितानाम् अनुवाद्यत्वमुपपन्नम्' "उपनिषदुपायस्य च तत्त्वज्ञानस्य योगापेक्षा अस्ति । न जातु योगशास्त्रविहितं यमनियमादिबहिरङ्गमुपायमपहाय अन्तरङ्गञ्च धारणादिकमन्तरेण औपनिषदात्मतत्त्वसाक्षात्कार उदेतुमर्हति ।" "यदि प्रधानादिसत्तापरं योगशास्त्रं भवेत्, भवेत् प्रत्यक्षवेदान्तश्रुतिविरोधेनाप्रमाणम् । तथा च तद्विहितेषु यमादिष्वप्यनाश्वासः स्यात् । तस्मात् न प्रधानादिपरं तत् । किं तु तन्निमित्तीकृत्य योगव्युत्पादनपरमित्युक्तम् । न चाविषये अप्रामाण्यं विषयेऽपि प्रामाण्यमुपहन्ति । न हि चक्षू रसादावप्रमाणं रूपेऽप्यप्रमाणं भवितुमर्हति । तस्मात् वेदान्तश्रुतिविरोधात् प्रधानादिरस्याविषयः न त्वप्रामाण्यमिति

परमार्थः ।" "न साङ्ख्यज्ञानेन वेदनिरपेक्षेणेति—प्रधानादि-विषयेणेत्यर्थः । द्वैतिनो हि ते साङ्ख्या योगाश्च—ये प्रधानादिपरतया तत् शास्त्रं व्याचक्षते इत्यर्थः ।" इत्यादिग्रन्थेन भगवत्पादाशयोद्घाटनेन योगशास्त्रस्य प्रामाण्यं प्रत्यतिष्ठिपत् । प्रधानादिपरतया साङ्ख्ययोगशास्त्रं व्याचक्षाणानामेव परमनात्वम्, न योगादिशास्त्राप्रामाण्यम्, इति च स्फुटीचकार ॥

तत्रैव परिमळेऽपि "योगशास्त्रे योगनिरूपणं श्वेताश्वतरोपनिषदाद्युपदिष्ट-योगप्रपञ्चनरूपम्" इत्युक्तम् ॥

इत्थमौपनिषदात्मतत्त्वज्ञानं प्रति शास्त्रान्तरापेक्षया विशिष्योपकारकत्वाति-शयसद्भावादेव च हेतोः वेदान्तदर्शनप्रवर्तको भगवान् वेदव्यासः तद्भाष्यकृत् भगवत्पादश्च उभयेऽपि योगभाष्यं तद्विवरणं च चक्रातुरिति सुदृढं विश्वसिमः ॥

न केवलं भगवान् वेदव्यासो भगवत्पादश्च योगभाष्यतद्विवरणकर्तारौ औपनिषदात्माद्वैतदर्शनावलम्बिनौ, योगसूत्रकृत् भगवान् पतञ्जलिरपि हि तथैव । यतः तेन "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" (यो॰ सू॰ २-२२) इति सूत्रे जगन्मिथ्यात्वं व्यवहृतम् । अस्य च सूत्रस्य जगन्मिथ्यात्वाभिप्रायकत्वं प्रदर्शितं श्रीमाधवाचार्यैः सूतसंहितातात्पर्यदीपिकायां यज्ञवैभवखण्डाष्टमाध्यायविवरणावसरे—'यद्यपि व्यवहारदशायां प्रकृति-प्राकृतलक्षणप्रपञ्चस्य सत्यत्वम् आत्मनानात्वं च व्यवहरन्ति (साङ्ख्यपातञ्जलादयः) तथाऽपि कैवल्यदशायां स्वरूपप्रकाशव्यतिरेकेण तस्य सर्वस्यानवभानं वर्णयन्ति । आत्मयाथात्म्यज्ञानलक्षणायाः प्रकृतिपुरुषविवेकख्यातेर्हि कैवल्यम् । तथाविधज्ञानोत्तरकालं प्रकृतिप्राकृतार्थात्मकं जगत् सर्वथाऽनवभातं चेत् तदस्तित्वं कथं निश्चीयेत? ज्ञेयसिद्धेः ज्ञानाधीनत्वात् । अतः आत्मयाथात्म्य-ज्ञानेन निवर्तितमेव तत् । तस्मात् प्रपञ्चस्यानवभातस्य ज्ञाननिवर्त्यत्वेन मिथ्यात्वमवश्यमभ्युपगन्तव्यम् । ज्ञाननिवर्त्यानां शुक्तिरूप्यादीनां मिथ्यात्व-दर्शनात् ॥

किं च, "कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्" इति पातञ्जलं सूत्रम् । अनेन च प्रकृतिप्राकृतिकात्मकं जगत् मुक्तापेक्षया नष्टं तदितरापेक्षया विद्यमानमेवेति, पुरुषविशेषापेक्षया तस्याभावसद्भावौ प्रतिपाद्येते । एतच्च तन्मिथ्यात्वेऽवकल्पते । पुरुषविशेषमपेक्ष्य एकस्यैव

वस्तुनः सद्भावासद्भावयोः शुक्तिरूप्यादौ दर्शनात् । तत्र हि काचकामलादिदोषदूषितनेत्रः पुरुषः शुक्तौ रूप्यसद्भावं प्रतिपद्यते । तदितरस्तु शुक्तिस्वरूपमेव जानन् तत्र रूप्याभावमवगच्छति । न हि पारमार्थिकं घटादि पुरुषविशेषं प्रति सद्भावासद्भावौ युगपत् प्राप्नोति । तस्मात् स्वरूपज्ञानपर्यन्तमनुवर्तमानस्य तत ऊर्ध्वमप्रतिभासमानस्य प्रपञ्चस्य वेदान्तिनामिव साङ्ख्यादीनामपि अविशेषात् मिथ्यात्वं सिद्धम् । अथापि कस्मात् न व्यवहरन्तीति चेत्—श्रोतुर्बुद्धिसमाधानार्थमिति ब्रूमः । स खलु प्रथमत एव सर्वं मिथ्येत्युक्ते, कथमेतत् घटत इति व्याकुलितमनस्को भवेत्, तन्मा भूदिति सत्यत्वव्यवहार एव केवलम् । आत्मनानात्वस्य जीवेश्वरभेदस्य च मुक्तावनवभातत्वेनैव प्रपञ्चवन्मिथ्यात्वम् । यदि व्यवहारदशायामेक एव आत्मेत्यभिधीयेत, तदा तत्तदुपाधिपरिकल्पनेन जीवेश्वरव्यवस्था सुखदुःखादिव्यवस्था च प्रयाससमर्थनीया स्यादित्यभिप्रायेणैव तन्नानात्ववर्णनम् । मुक्तौ तु वेदान्तिनामिव सांख्यादीनामपि केवलात्मस्वरूपप्रतिभास एव संमत इति परमार्थतोऽद्वितीयत्वमात्मनः सिद्धम्" इति ॥

यद्यपि पातञ्जलसूत्रे 'नष्टम्' इत्यत्र नाशोऽदर्शनम् इत्यर्थो वर्णयितुं शक्यते, व्याख्यातं च तथा व्याख्यातृभिः, तथाऽपि मानाधीनत्वान्मेयसिद्धेः मुक्तदृष्ट्या दर्शनागोचरस्य प्रपञ्चस्यासद्भाव एवेत्यत्र विवादायोगात् नाशः अदर्शनं वाऽस्तु, निवृत्तिर्वाऽस्तु, उभयथाऽपि फलमविशिष्टमिति बोध्यम् ॥

एवं महाभाष्येऽपि पतञ्जलिप्रणीते तृतीयाध्यायप्रथमपादप्रथमाह्निके "धातोः कर्मणः समानकर्तृकादिच्छायां वा" इति पाणिनिसूत्रविवरणावसरे—"सर्वस्य वा चेतनावत्त्वात् (वार्तिकम्) अथवा सर्वं चेतनावत् । एवं हि आह—कंसकाः सर्पन्ति, शिरीषोऽयं स्वपिति, सुवर्चला आदित्यमनुपर्येति, आस्कन्द कपिलकेत्युक्ते तृणमास्कन्दति, अयस्कान्तमयस्संक्रामति, ऋषिः पठति—शृणोत ग्रावाणः इति" इत्युक्तम् । तत्र कैयटेन विवृतम्—"सर्वस्य वेति, आत्माद्वैतदर्शनेनेति भावः । ऋषिरिति—वेदः । सर्वभावानां चैतन्यं प्रतिपादयतीत्यर्थः" इति ॥

एवञ्च आत्माद्वैतं महाभाष्ये स्फुटीकृतम् । एवं तत्रैव स्थलान्तरेष्वपि आत्माद्वैतमाविष्कृतं, विस्तरभिया उपरम्यते ॥

परमार्थसाराभिधायाम् आर्यापञ्चाशीत्यामपि पतञ्जलिना अद्वैतदर्शनं स्फुटीकृतम् ॥

परमार्थसाराभिधश्च ग्रन्थः पतञ्जलिस्वरूपेणावतीर्णादिशेषकृत इति तत्रैव ग्रन्थे अन्तिमश्लोके व्यक्तम्—

"वेदान्तशास्त्रमखिलं विलोक्य शेषस्तु जगत आधारः ।
आर्यापञ्चाशीत्या बबन्ध परमार्थसारमिदम् ॥" इति ॥

तत्र च—

"सत्यमिव जगदसत्यं मूलप्रकृतेरिदं कृतं येन ।
तं प्रणिपत्योपेन्द्रं वक्ष्ये परमार्थसारमिदम् ॥"

इति उपक्रमे एव जगन्मिथ्यात्वं प्रतिज्ञातम् ॥

"मृगतृष्णायामुदकं शुक्तौ रजतं भुजङ्गमो रज्ज्वाम् ।
तैमिरिकचन्द्रयुगवत् भ्रान्तं निखिलं जगद्रूपम् ॥"

इति सदृष्टान्तम् उपपादितं च ॥

"यद्वद्दिनकर एको विभाति सलिलाशयेषु सर्वेषु ।
तद्वत् सकलोपाधिष्ववस्थितो भाति परमात्मा ॥"

इति च आत्माद्वैतमुपवर्णितम् ॥

परमार्थरूपब्रह्मप्राप्तिमार्गभूतसम्यग्ज्ञानसाधनीभूतो योग इति चोक्तं तत्रैव—

"परमार्थमार्गसाधनमारभ्याप्राप्य योगमपि नाम ।
सुरलोकभोगभोगी मुदितमना मोदते सुचिरम् ॥" इति ॥

जीवन्मुक्तिविवेके च विद्यारण्यश्रीचरणैः परमार्थसारान्तर्गतश्लोकद्वयं शेषकृतत्वेनानूदितम्—"एतदेवाभिप्रेत्य भगवान् शेष आह—

"तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन् देहम् ।
ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥" इति ॥

शेषोऽपि स्वकृतार्यापञ्चाशीत्यामिदमाह—

हयमेधशतसहस्राण्यथ कुरुते ब्रह्मघातलक्षाणि ।
परमार्थविन्न पुण्यैर्न च पापैः स्पृश्यते विमलः ॥" इति च ॥

"तदुक्तं परमार्थसारे शेषनागेन" इत्यादिना ग्रन्थेन परमार्थसारं पदे पदे प्रमाणीकरोति लघुमञ्जूषायां भट्टनागेशः । "परमार्थसारविवरणे प्रपञ्चितमस्माभिः" इति परमार्थसारव्याख्यानमपि स्वेन कृतं ब्रवीति । भगवत्पतञ्जलि-

परमभक्तस्य नागेशभट्टस्य 'नागेश' इति तदीयं नामैव वहतः पतञ्जलिप्रणीतत्वादेव परमार्थसारग्रन्थे परमस्समादरः । कलाख्यटीकाकृदपि परमार्थसारकर्तारं पतञ्जलिमेव स्पष्टमाचचक्षे ॥

एवं च पतञ्जलिव्यासशङ्कराख्यं शेषहरिहरावतारभूतं महामहिमशालि मुनित्रयमपि औपनिषदाद्वैततत्त्वपरिनिष्ठितम् एकाभिप्रायम् एकत्र अद्वैतात्मानुभवसाधनीभूतयोगविषये सूत्रतद्भाष्यतद्विवरणकर्तृत्वेन योगमन्वभूत् इति संशीलयतां सहृदयानां महदिदं प्रमोदस्थानम् इत्यलमियता ॥

अस्य च योगशास्त्रस्य प्रथमं प्रवर्तको हिरण्यगर्भः ।

"हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः"

इति योगियाज्ञवल्क्यस्मरणात् । पतञ्जलिः तदनुसारेण पश्चात् योगशास्त्रस्य प्रवर्तकः । अत एव "अथ योगानुशासनम्" इति सूत्रयामास । शिष्टस्य हि शासनम् अनुशासनम् । अत एव माधवाचार्याः प्रोचुः—"ननु हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः इति याज्ञवल्क्यस्मृतेः, पतञ्जलिः कथं योगस्य शासितेति चेत्—अद्धा । अत एव तत्र तत्र पुराणादौ योगस्य विप्रकीर्णतया विशिष्य दुर्ग्राह्यार्थत्वं मन्यमानेन भगवता दयासिन्धुना फणिपतिना सारं सञ्जिघृक्षुणा अनुशासनमारब्धम्, न तु साक्षात् शासनम् ।" इति सर्वदर्शनसंग्रहान्तर्गतपातञ्जलदर्शनसंग्रहे ॥

"पत्युरसामञ्जस्यात्" (२-२-३७) इति ब्रह्मसूत्रभाष्यगतं 'साङ्ख्ययोगव्यपाश्रयाः' इति पदं व्याचक्षाणेन भामतीकृता 'सांख्ययोगव्यपाश्रयाः' हिरण्यगर्भपतञ्जलिप्रभृतयः, इत्युक्तम् ॥

शैवाद्यागमेष्वपि चर्याक्रियायोगज्ञाननिरूपकपादचतुष्टयवत्सु योगपादे योगस्वरूपं सविस्तरमुक्तम् । पुराणेतिहासेष्वपि च प्रपञ्चितम् ॥

इदं च योगशास्त्रं चिकित्साशास्त्रवत् चतुर्व्यूहम् । यथा हि चिकित्साशास्त्रं रोगः, रोगहेतुः, आरोग्यं, भैषज्यं, इति चतुर्व्यूहव्युत्पादनपरं, तद्वदेव इदमपि भवरोगचिकित्साशास्त्ररूपं योगशास्त्रं, हेयः, हेयहेतुः, हानं, हानोपाय इति चतुर्व्यूहव्युत्पादकम् । दुःखप्रचुरः संसारो हेयः, तस्य अविद्यानिमित्तः द्रष्टृदृश्यसंयोगो हेतुः, विवेकख्यातिरविप्लवा हानोपायः, विवेकख्यातौ च सत्यां अविद्यानिवृत्तिः, तन्निवृत्तौ आत्यन्तिको द्रष्टृदृश्यसंयोगोपरमो हानम्, तदेव च कैवल्यम् ॥

तदिदं योगशास्त्रं समाधिसाधनविभूतिकैवल्याख्यपादचतुष्टयविशिष्टम् । तत्र प्रथमे पादे (५१) एकपञ्चाशत्सूत्रोपेते प्राधान्येन समाधिप्रतिपादनात् समाधिपादाभिधे, योगोद्देशः, तल्लक्षणम्, चित्तवृत्तिभेदाः, तन्निरोधोपायभूताभ्यासवैराग्ये, चित्तस्थित्युपायाः केचन, सम्प्रज्ञातासम्प्रज्ञाताभिधो द्विविधो योगः सोपायः सफलः सावान्तरभेदश्च, ईश्वरस्य स्वरूपप्रमाणप्रभाववाचकोपासनतत्फलानि च, इत्यादिकं प्रत्यपादि ॥

द्वितीये (५५) पञ्चपञ्चाशत्सूत्रमण्डिते कैवल्यसाधनसम्यग्दर्शनसाधनयोगसाधनानां प्राधान्येन प्रतिपादनात् साधनपादाभिधे, क्लेशतनूकरणद्वारा योगसाधनीभूतः क्रियायोगः, क्लेशकर्मविपाकाः, तेषां हेयत्वप्रयोजकं दुःखरूपत्वं, हेयतद्धेतुमोक्षतद्धेतवः चत्वारो व्यूहाः, योगं प्रति बहिरङ्गसाधनीभूतं यमादिपञ्चकं सावान्तरफलम्, इत्यादिकं प्रत्यपादि ॥

तृतीये (५५) पञ्चपञ्चाशत्सूत्रालङ्कृते योगसाधनानुष्ठानप्रवृत्तस्य आनुषङ्गिकविभूतेः प्राधान्येन प्रतिपादनात् विभूतिपादाभिधे, धारणादित्रितयं योगं प्रति अन्तरङ्गसाधनीभूतं संयमसंज्ञं, संयमस्य लक्ष्याः परिणामभेदाः, संयमसाध्याः श्रद्धाद्वारा कैवल्यफलकयोगप्रवृत्तिहेतवः अतीतानागतज्ञानभुवनज्ञानकायव्यूहज्ञानादिरूपाः विभूतयः, इन्द्रियजयादिरूपाः साक्षाद्योगाङ्गभूताः सिद्धयः, योगफलभूता तारकसंज्ञितविवेकज्ञानसिद्धिः, इत्यादिकं प्रत्यपादि ॥

चतुर्थे (३४) चतुस्त्रिंशत्सूत्रभूषिते सकलयोगैश्वर्येभ्यो विरक्तस्य सर्वोपसंहारद्वारेण कैवल्यस्य प्राधान्येन प्रतिपादनात् कैवल्यपादाभिधे, द्विविधं कैवल्यस्वरूपं, कैवल्यभागीयं चित्तं, परलोकः, परलोकगामी क्षणिकविज्ञानातिरिक्तात्मा चित्तविकारसुखादिभोक्ता, धर्ममेघाख्यसमाधिः, प्रासङ्गिकं चान्यत् इत्यादिकं प्रत्यपादि ॥

एवं पादचतुष्टयवता(१९५)पञ्चनवत्यधिकशतसूत्रयुजा योगसूत्रेण सूचितं महान्तं प्रमेयराशिं हृदयहारिण्या श्रोत्रपुटपेयया शैल्या विवृण्वतः वेदव्यासभाष्यस्य परमगम्भीरस्यानुरूपं प्रसन्नगम्भीरमिदं विवरणं विशेषतो भाष्याशयमभिव्यञ्जयत् परमोपकारकं योगविजिज्ञासूनाम् । कर्तृगौरवात् विषयविवेचनशैलीरामणीयकाच्च पठनमात्रेण हृदयावर्जकं नातीव विशिष्य वक्तव्यतामावहति ॥

अत्र च ग्रन्थे अनितरसाधारण्येन, ग्रन्थान्तरेष्वचर्चिताभिः बह्वीभिर्युक्तिभिः ईश्वरस्थापनं सविशेषमारचितम् । निरीश्वरवादिभिः प्रतिपक्षैः प्रदर्शिताश्च बह्वयो युक्तयः अनूद्य निरस्ताः ॥

अत्र च उदाहृताः प्राचीनग्रन्थास्त्विमे—१. दशोपनिषदः २. भगवद्गीता ३. महाभारते मोक्षधर्मपर्व ४. विष्णुसहस्रनामस्तोत्रम् ५. मनुस्मृतिः ६. गौतमधर्मसूत्रम् ७. पाणिनिसूत्रम् ८. महाभाष्यम् ९. शाबरभाष्यम् १०. श्लोकवार्तिकम् इत्यादयः ॥

व्यासभाष्यस्य प्राचीनमपि व्याख्यानं विवरणे क्वचित् नामनिर्देशं विना 'अन्येषां व्याख्यानम्' इति अनूदितम् । तेन विवरणात् प्रागपि कानिचित् भाष्यव्याख्यानानि आसन् इति ज्ञायते । पश्चाच्च १. वाचस्पतिमिश्रप्रणीता तत्त्वविशारदीनाम्नी भाष्यटीका २. विज्ञानभिक्षुप्रणीतं योगवार्तिकापराभिधं भाष्यव्याख्यानम् इत्यपरं व्याख्याद्वयं भाष्यस्य मुद्रितमस्ति ॥

योगसूत्रोपरि बह्वयः टीकाः सन्ति मुद्रिताः––१. भोजदेवकृता राजमार्तण्डाभिधा वृत्तिः २. विज्ञानभिक्षुशिष्यभावागणेशकृता योगसूत्रदीपिका ३. तदनुसारिणी नागोजिभट्टीया वृत्तिः । २. ३. उभयमपीदं विज्ञानभिक्षुमार्गानुसारि । ४. श्रीरामानन्दयतिकृता मणिप्रभाख्या वृत्तिः ५. योगसिद्धान्तचन्द्रिका ६. सूत्रार्थबोधिनी, इति श्रीनारायणतीर्थविरचितटीकाद्वयम् ७. योगसुधाकरो नाम श्रीसदाशिवब्रह्मेन्द्रकृता योगसूत्रवृत्तिः इत्याद्याः ॥

तदिदं पातञ्जलयोगसूत्रभाष्यविवरणम् इदंप्रथमतया मुद्रणपदवीमारोपितं मद्रासनगरस्थराजकीयप्राच्यपुस्तकागाराध्यक्षैः । अस्य च मातृका एकैव पुस्तकागारस्था संशोधनाय समासादिता, नान्यत् पुस्तकं अन्वेषणेऽपि लब्धम् । तत्र च आदर्शकोशे लेखकप्रमादाद्वा, लेखकेन लेखनाय निरीक्षितस्य प्राचीनमूलपुस्तकस्य सम्बन्धिनां बहूनां पुटानाम् अधरोत्तरविपर्यासाद्वा, यतःकुतश्चित् अनिर्वचनीयात् हेतोः आदित आरभ्य आऽन्तं विंशतिसङ्ख्याकेषु स्थलेषु सान्तत्येन विलिखितान् मिथोऽनन्वितावयवान् अत एव दुर्बोधार्थान् ग्रन्थभागान् निरीक्ष्य कथमिदं मुद्रणार्हं, मुद्रितेऽपि निष्फलमेव भवेत् इति चिन्ताव्याकुलितमानसानामस्माकं दुर्वचेन महता प्रयासेन बहुपुटव्यवधानतो विशकलितानां विप्रकीर्णानां वाक्यानां मिथोऽन्वययोग्यानाम् अक्षरशो गवेषणेन सिंहावलोकमण्डूकप्लुत्यादिनीतिमनुसृत्य पश्चिमवाक्यस्य

बहुदूरस्थेन पूर्ववाक्येनान्वयः, पूर्ववाक्यस्य बहुदूरस्थेन पश्चिमवाक्येनान्वय इति रीत्या विप्रकीर्णवाक्यानां व्यत्यासेन मिथोयोजने मतिरुदभूत् भगवत्पादानुग्रहवशात् । तथाविधयोजने कृते च मिथोऽन्वययोग्यार्थत्वं वाक्यानामालोच्य प्रमोदभरश्च समजनि । एतादृशानाम् अन्वितार्थानां वाक्यानां मिथो योजनं कुत्र कथं कृतम्? आदर्शकोशे कतिपुटव्यवधानतः तानि लिखितान्यासन्? इत्येतत्, ग्रन्थ एव त्रिंशतिसङ्ख्याकेषु तत्तद्वाक्यमुद्रणस्थलेषु अधः टिप्पण्यां प्रदर्शितम् । तन्निरीक्षणेन च परिशोधनपरिश्रमः कियानभूदिति अवगम्येत सहृदयैः ॥

एवं महता प्रयासेन शोधने कृतेऽपि मानुषशेमुषीस्वभावसिद्धेन प्रमादेन बह्व्यः अशुद्धयः सम्भाव्येरन् । पठनपाठनवशादेव तु ता निरसनीया भवेयुः सूक्ष्मेक्षिकया सहृदयैः, इति सविनयं निवेद्य एतावता उपसंह्रियते ॥

पूज्यान् पतञ्जलिव्यासशंकरांस्त्रीन मुनीन् नुमः ।
योगशास्त्रस्य वेदान्तशास्त्रस्यापि प्रवर्तकान् ॥

इत्थम्
'शास्त्ररत्नाकर' बिरुदभूषितः
पोलकम् - सु. श्रीरामशास्त्री
मद्रपुरसंस्कृतकलाशाला - वेदान्तसाहित्याध्यापकः ।

'न्यायवेदान्तशिरोमणिः'
एस्. आर्. कृष्णमूर्तिशास्त्री
मद्रपुरसंस्कृतकलाशालान्यायवेदान्ताध्यापकः ॥

॥ शुभम् ॥

# ॥ सभाष्यविवरणश्रीपातञ्जलयोगसूत्रविषयानुक्रमणिका ॥

## ॥ प्रथमः समाधिपादः ॥

## ॥ तृतीयो विभूतिपादः ॥

## ॥ चतुर्थः कैवल्यपादः ॥

॥ समाप्तेयं योगसूत्रविषयानुक्रमणिका ॥

श्रीः

श्रीपतञ्जलये नमः

श्रीवेदव्यासाय नमः

श्रीमच्छङ्करभगवत्पादेभ्यो नमः

# ॥ पातञ्जलयोगसूत्रभाष्यविवरणम् ॥

## ॥ श्रीमच्छङ्करभगवत्पादप्रणीतम् ॥

### ॥ समाधिपादः प्रथमः ॥

(पातञ्जलयोगसूत्रम्)

**अथ योगानुशासनम् ॥ १ ॥**

(व्यासभाष्यम्)

अथेत्ययमधिकारार्थः । योगानुशासनं शास्त्रमधिकृतं वेदितव्यम् ॥

(विवरणम्)

यस्मिन्न स्तः कर्मविपाकौ यत आस्तां
क्लेशा यस्मै नालमलब्ध्या निखिलानाम् ।
नावच्छिन्नः कालदशा यः कलयन्त्या
लोकेशस्तं कैटभशत्रुं प्रणमामि ॥ १

यः सर्ववित् सर्वविभूतिशक्तिः
विहीनदोषोपहितक्रियाफलः ।
विश्वोद्भवान्तस्थितिहेतुरीशो
नमोऽस्तु तस्मै गुरवे गुरोरपि ॥ २

अथेत्यादिपातञ्जलयोगशास्त्र[सूत्रभाष्य]विवरणमारभ्यते । तत्रानाख्यात-सम्बन्धप्रयोजनं न पुरुषप्रवृत्तिनिवृत्तिभ्यां पर्याप्नोतीति, सूत्रकाराभिप्रेते पुरुषप्रवृत्तिनिमित्तभूते सम्बन्धप्रयोजने पूर्वं प्रकटीक्रियेते ॥

तत्र प्रयोजनं तावत्—चिकित्साशास्त्रे तच्चतुर्व्यूहत्वप्रदर्शनद्वारेण व्याख्यातम् । तद्यथा—चिकित्साशास्त्रं चतुर्व्यूहं, रोगः, रोगहेतुः, आरोग्यं, भैषज्यम् इति । विधिप्रतिषेधनियमद्वारेण [च तत्] चतुर्व्यूहविषयव्याख्यानपरम् । एवमिहापि "परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः[1]" इत्यारभ्य चतुर्व्यूहत्वं शास्त्रस्य प्रदर्शितम । तद्यथा—दुःखप्रचुरः संसारो हेयः । तस्याविद्यानिमित्तो द्रष्टृदृश्यसंयोगो हेतुः । त्रिवेकख्यातिरविप्लवा हानोपायः । विवेकख्यातौ च सत्यामविद्यानिवृत्तिः, तन्निवृत्तावात्यन्तिको द्रष्टृदृश्यसंयोगोपरमो हानम्, तदेव कैवल्यमिति । आरोग्यस्थानीयकैवल्यप्रयुक्तत्वादस्य तदेव कैवल्यं प्रयोजनम् ॥

ननु च हेयतद्धेतू न प्रस्तोतव्ये, निष्प्रयोजनत्वात् । हानप्रयुक्तं हि शास्त्रं, तदुपायभूता विवेकख्यातिरेव वक्तव्या । न हि कण्टकविद्धचरणतलस्य तदपनयनं मुक्त्वा दुःखतद्धेतू चोद्येते । नैतदेवं—हेयतत्कारणापेक्षत्वाद्धानोपायस्य । यावदिदमनेनोपायेन हातव्यं संसारचक्रम् अस्य चाविद्यानिमित्तो द्रष्टृदृश्यसंयोगो हेतुः इति नाख्यायते, तावन्नाविद्याप्रतिपक्षभूता विवेकख्यातिराख्यातुं शक्यते । हेयतद्धेतुमतो हानोपायार्थिनो रोगिणो भैषज्यार्थित्वदर्शनात् । न हि रोगं रोगहेतुं चानपेक्ष्य चिकित्साशास्त्रमुपदिश्यते ॥

सम्बन्धोऽपि—विवेकख्यातेर्हानमेव फलं साध्यं हानस्यापि विवेकख्यातिरेव साधनमिति साध्यसाधनयोरितरेतरनियम एव, नान्यसंबन्धः । तद्यथा—भैषज्यस्यारोग्यमेव फलम् आरोग्यस्यापि भैषज्यमेव साधनमिति इतरेतरनियमः, स च शास्त्रादिति । तस्मात् ससंबन्धप्रयोजनं योगानुशासनम् ।

ननु च यदि हानं प्रयोजनं तदुपायश्च विवेकख्यातिरिति, तत्र वक्तव्यम् 'अथ विवेकख्यात्यनुशासनम्' इति । किमर्थम् 'अथ योगानुशासनम्' इति सूत्रितम् ?

तदुपायत्वाद्योगस्य । उपाय एव वक्तव्यः स्यात् । उपेयोपप्रदर्शने हि उपेयमुपायं प्रति साकाङ्क्षमेवेत्युपायः साङ्गकलापः पुनरपि वक्तव्यः स्यात् । तस्मिंश्चाभिहिते सर्वमभिहितमिति ।

1. पा. 2. सू. 15.

कथं तदुपायत्वम्? यत आह सूत्रकारः—'योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवे[1]कख्यातेः' इति। 'निर्विचारवैशारद्येऽध्यात्मप्रसादः[2]' 'ऋतंभरा[3] तत्र प्रज्ञा' इति च। तथा भाष्यकारोऽप्याह—'यस्त्वेकाग्रे चेतसि स भूतमर्थं प्रद्योतयति[4]' इति। भूतार्थावगतिश्च विवेकख्यातिः। तस्मायुक्तं तदुपाययोगानुशासनमेवादौ सूत्रितमिति॥

ननु च योगाङ्गानुष्ठानाद्विवेकख्यातिः, तत्र वक्तव्यं 'अथ योगाङ्गानुशासनम्' इति—न—फलेनोपक्रमात्। योगाङ्गानुष्ठानस्य हि फलं योग इति तदुपक्रमो युक्तः॥

यद्येवं हानेनोपक्रम्येत–न–तस्योपेयत्वात्–उपेयमेव हि तत्। योगः पुनः स्वाङ्गानामुपेयश्च, उपायश्च विवेकख्यातेरणिमादिप्राप्तेश्च[लभ्य]र्हिततरः। फलतदुपायरूपत्वात् (फलपयनिमित्तत्वात्)॥

उत्तरसूत्रार्थत्वाच्च। न हि 'अथ योगाङ्गानुशासनम्' इत्युक्ते 'योगश्चित्तवृत्ति[5]निरोधः' इति युक्तं वक्तुम्। तदा हि 'यमनि[6]यमा'दिसूत्रमेव पठितव्यं स्यात्॥

अथ तदेव पठितव्यमिति चेत्–न–योगोपे(पा)याया हानोपायभूताया विवेकख्यातेः, फलस्य च हानस्य, संबन्ध[प्र]दर्शनार्थत्वात् 'योगश्चित्तवृत्ति[7]निरोधः' इत्यस्य॥

(स)कथं पुनरेतत्संबन्धप्रदर्शनार्थम्? यावता निर्बीजसमाधिलक्षणाभिधानमेतत्। सत्यमेवं, तथापि हानतदुपायसंबन्धमवद्योतयदेव सूत्रं निर्बीजसमाधिलक्षणतामापद्यते॥

न हि निरोधलक्षणात् समाधेरर्थान्तरं हानम्। किं त्वेतावता विशेषः, निरोधलक्षणसमाधौ (धेर्न) पुनः प्रवृत्तिः, हाने त्वात्यन्तिकी निवृत्तिरिति। समाध्यवस्थायां तु हानाविशेष एव। तथा चाह—"तदा द्रष्टुः स्वरूपेऽव[8]स्थानम्" [इति]। "स्वरूपप्रतिष्ठा च चितिशक्तिः कै[9]वल्यम्" इति स्वरूपप्रतिष्ठत्वं(ष्ठं) हि कैवल्यमाह। ततश्च निर्बीजसमाधिना कैवल्यमेव शास्त्रार्थप्रत्ययद्रढिम्ने साक्षात्क्रियते॥

---

1. पा. 2. सू. 28.
2. पा. 1. सू. 47.
3. पा. 1. सू. 48.
4. पा. 1. सू. 1.
5. पा. 1. सू. 2.
6. पा. 2. सू. 29.
7. पा. 1. सू. 2.
8. पा. 1. सू. 3.
9. पा. 4. सू. 34.

तस्माद्यदुच्यते कैश्चित् [स]बीजसमाधिः कैवल्यसाधनमिति—तन्न । किं तर्हि? ख्यातिरेव साधनमविद्यानिवृत्तिद्वारेण । अविद्यानिमित्तो हि बन्धः । तस्माद्यद्यपि योगानुशासनं सूत्रितम्, तथापि ख्यात्यर्थत्वाद्योगस्य तद्द्वारेण ख्यातिहानसंबन्धमपि दर्शयतीति, सुष्ठूच्यते उत्तरसूत्रसंबन्धार्थं च योगानुशासनमिति सूत्रयितव्यमिति ॥

यद्यपि फलार्थिनां तत्फलसाधनं प्रत्युत्पन्नाकाङ्क्षाणां साधनोपदेशोऽप्यस्ति । तथापि न तत्प्रयोजनम्, सर्वस्य फलोद्देशेन प्रवृत्तेस्तदेव प्रयोजनमिति ॥

**योगानुशासनमिति** । यथा शिष्योऽनुशिष्यते विशिष्टप्रवृत्तिनिवृत्तिनियमद्वारेण, तथा विशिष्टसाध्यसाधनतदङ्गनियममात्रसादृश्यादन्तेवास्यनुशासनवद्योगानुशासनमित्युच्यते । अनुशिष्टिरनुशासनं, योगोऽनुशिष्यतेऽनेनास्मिन्निति वा योगानुशासनं शास्त्रम् ॥

**अथेत्ययमधिकारार्थः** । अधिकार आरम्भः प्रस्तावः, अर्थोऽभिधेयोऽस्य ; शिष्टस्मृतिप्रामाण्यात् । ननु चानन्तर्यार्थस्याथशब्दस्य स्मरन्ति शिष्टाः । तथा चाह—"वृत्तादनन्तरस्य प्रक्रियार्थो [1]दृष्टः" इति । न—सर्वत्रारम्भार्थत्वात् । आनन्तर्यस्य च गम्यमानत्वात् । यथा पुत्र इत्युक्ते पिता गम्यते, न च पुत्रशब्दस्यार्थः पिता, तथेहाप्यारम्भ एवाभिधीयते, आनन्तर्यं तु प्रतीयते ॥

अत एव च 'वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः' इत्युच्यते । यदि चानन्तर्यार्थोऽभविष्यत्तदा 'वृत्तादानन्तर्येऽर्थे प्रक्रियायाः' इत्यवदिष्यत् । अनन्तरस्येति चानन्तरभाविन एवाभिधानम् ॥

अपि चैवं हि स्मृतिः—"किञ्चिदव्ययं[2] विभक्त्यर्थप्रधानं किञ्चित्क्रियाप्रधानम् । उच्चैर्नीचैरित्यादि विभक्त्यर्थप्रधानम्, हिरुक् पृथगित्यादि क्रियाप्रधानम्" [इति] । न चैतद्व्यतिरेकेणाव्ययानामर्थो विद्यते । तत्राथशब्दस्यानन्तर्यार्थत्वे सति विभक्त्य(क्ति)श्रवणमयुक्तम्, सत्त्वप्रधानत्वात् । आरम्भक्रियार्थत्वे तु न विभक्त्य(र्थ)श्रवणमयुक्तम्, असत्त्वप्रधानत्वादिति ॥

तस्मादथशब्दः प्रस्तावार्थ एवेति युक्तमथेत्यधिकारार्थ इति । स्वरूपावद्योतनार्थ इतिशब्दः । यथा गौरित्याहेति । प्रसिद्धोऽप्यथशब्दार्थोऽधिक्रियमाणविषये शिष्यबुद्धिसमाधानार्थं कीर्त्यते । सिद्धो ह्ययं न्यायः श्रुतौ [3]"व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्व" इति ॥

---

1. शाबर. भा. अ. 1. पा. 1. सू. 1.     3. बृ. उ. 2. 4. 4.
2. महाभाष्यं 1. 1. 37.

[ भाष्यम् ]

योगः समाधिः । स च सार्वभौमश्चित्तस्य धर्मः । क्षिप्तं, मूढं, विक्षिप्तं, एकाग्रं, निरुद्धम् इति चित्तभूमयः ॥

[ विवरणम् ]

कः पुनर्योगो यस्यानुशासनं प्रस्तुतमिति-आह—योगः समाधिरिति ॥ समाधिग्रहणात् 'युजिर्योगे' इति निवर्त्य, 'युज समाधौ' इत्ययं गृहीतः । योगः समाधानम् । ननु च 'योगः समाधिः' इत्येवमन्तेन व्याख्याते सूत्रे 'स च सार्वभौमः' इत्यादिभाष्यमसंबन्धं दृश्यते । नैष दोषः । इह समाधिरित्युक्ते, समाधीयमानापेक्षत्वात्, समाधीयमानानां च बहुत्वात्, किमात्मा समाधीयते ? किं वा शरीरम्, आहोस्विदिन्द्रियाणि, इति बहु(विदां)धा विप्रतिपत्तेः, स्वविशेषणाकाङ्क्षत्वाच्च समाधेः, कस्यायम् ? किंविशेषणकः ? इत्यनुषक्ते प्रश्ने, इदमाह—स च सार्वभौमश्चित्तस्य धर्म इति । चित्तस्य धर्मो नात्मादीनाम् । तच्च चित्तं स्वयमेव समाधीयते [समाधात्र]न्तरनिरपेक्षत्वात् ॥

काः पुनर्भूमय इत्यत आह—क्षिप्तं मूढमित्यादयो भूमय इति । क्षिप्तमिति कर्मकर्तरि निष्ठा । यथा भिन्नः कुसूलः स्वयमेवेति । क्षिप्तमनिष्ट-विषयासञ्जनेन स्तिमितम् । मूढं निर्विवेकम् । विक्षिप्तं नानाक्षिप्तम् । कर्मकर्तर्येव । विवेकाक्षमं च विक्षिप्तत्वादेव । एकाग्रं तुल्यप्रत्ययप्रवाहम् । निरुद्धमिति प्रत्ययशून्यं चित्तम् ॥

ननु च भूमिषु धर्मेषु विवक्षितेषु, किमर्थं क्षिप्तमित्यादिना धर्म्युच्यते ? नैष दोषः, धर्मिणा धर्म एवोपदिश्यते । धर्माणां धर्मिविषयत्वात् । यथा गोत्वे किं लिङ्गमिति पृष्टे, विषाणी ककुद्मान् प्रान्तवालधिरिति धर्मिणा धर्म एवोपदिश्यते । तस्मात् क्षेपादयश्चित्तस्य भूमयो धर्मा इत्यर्थः ॥

ननु च भूमीनां चित्तधर्मत्वे समाधेश्च, कथं भूमिभिः समाधिराधारत्वेन विशेष्यते सार्वभौम इति ? सामान्यभूतत्वात् समाधेः । भूमीनां च विशेषत्वात् । यथा क्षिप्तं तिष्ठति, मूढं तिष्ठति, विक्षिप्तमेकाग्रं चेति, क्षिप्तादिभूमिषु स्थितिरनुवर्तते सामान्यम् । स्थितिश्च समाधिः । तस्मात् सामान्यरूपं सर्वासु भूमिषु प्राधान्येन वर्तत इति । 'सर्वभूमिपृथिवी' इत्यैश्वर्यार्थीयोऽण्प्रत्ययः । अनुशतिकादित्वादुभयपदवृद्धिः ॥

अन्ये पुनर्बाह्याध्यात्मिकान् संयमविषयान् भूमय इत्याचक्षते । तेषां 'विक्षिप्ते चेतसि' इति सामानाधिकरण्यानुपपत्तिः । स्ववचनविरोधश्च कथम् ?

क्षिप्यतेऽस्मिन्निति क्षिप्तम्, मुह्यतेऽस्मिन्निति मूढं, यदा चैवं न तदा संयमविषयता। तत्र क्षेपाद्यसंभवात्। एकाग्रावस्थायां हि संयमो भवति ॥

किं चान्यत्—क्षिपेश्च ध्रौव्याद्यर्थाभावादधिकरणे निष्ठाप्रत्ययाभावः। किं च—निरुद्धे चेतसि संयमस्यापि तत्राभावात् वृत्तिशून्यत्वात् संयमविषयाभावः। न हि निरोधे विषयविशेषे चित्तं निरुध्यते। तदा हि विषयित्वान्निवर्तते। परिगणनानुपपत्तिश्च। न हि क्षिप्तादयः पञ्चैव संयमस्य विषयाः। तेषामानन्त्यात् ॥

ननु चान्यथा योगं केचिदिच्छन्ति। तथा चाहुः—"इन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखे, तदनारम्भ आत्मस्थे मनसि, [स]शरीरस्य सुखदुःखाभावः प्राणमनोविनिग्रहापेक्षः संयोगो [योग] इति"। तदिति प्रकृतापेक्षम्। योऽसौ सुखदुःखयोरात्मेन्द्रियमनोऽर्थसन्निकर्षो हेतुः, तस्यानारम्भः तदनुत्पत्तिः। स कथं भवति? आत्मस्थे मनसि, नेन्द्रियस्थे। सशरीरस्य अविशीर्णशरीरस्य। तदा कारणाभावात् कार्याभाव इति, सन्निकर्षाभावे सुखदुःखयोरप्यभावः, तस्यामवस्थायां योऽसौ विभोरात्मनो मनसा संयोगः स प्राणमनोविनिग्रहापेक्षः संयोगविशेषो योग इति ॥

अत्रोच्यते—आत्मस्थे मनसीत्ययुक्तम्, सर्वदा आत्मस्थत्वान्मनसः। इन्द्रियादिसन्निकर्षानारम्भापेक्षया आत्मस्थे इति चेत्, तदनारम्भ इत्येव सिद्धत्वादात्मस्थे मनसीत्यनर्थकं स्यात् ॥

किं चान्यत्—मुक्तस्यापि मनस आत्मस्थत्वादिन्द्रियसन्निकर्षाभावाच्च योगः प्राप्नोति। तस्यापि हि सर्वगतत्वात् मनसश्च नित्यत्वात् सर्वदात्मस्थत्वमेव ॥

किं च—आत्मनः प्रदेशाभावादात्मस्थ इत्ययुक्तम्। न चाप्युपचरितात्मप्रदेशसंयोगः परमार्थस्य योगस्य हेतुः स्यात्। उपचरितस्य मिथ्यात्वात् ॥

किं चान्यत्—मनोऽर्थसन्निकर्षाभाव इत्येव सिद्धेः(द्धं)इन्द्रियग्रहणमनर्थकं स्यात्। अथेन्द्रियैर्विना मनोऽर्थसन्निकर्षाभावात्तदनारम्भ इति प्राप्त्यभावे प्रतिषेधो न युक्त इति चेत्। नैतदेवम्, विनेन्द्रियैर्मनोऽर्थसन्निकर्षो नास्तीत्यर्थात् सन्निकर्षप्रतिषेधं कुर्वता विषयप्राप्तिरिन्द्रियद्वारा प्रतिपादिता स्यात् ॥

किं चान्यत्—सर्वप्राणभाजामिन्द्रियमनोऽर्थसन्निकर्षात् सुखदुःखप्रतिलम्भस्य प्रसिद्धत्वादात्मनः सम्बन्धस्य च नित्यत्वात् सुखदुःखाभावो योग इत्येव सिद्धेः, तत्र [सूत्र] शेषोऽनर्थकः स्यात् ॥

[ भाष्यम् ]

तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्तते ॥

[ विवरणम् ]

अथापि स्यादिन्द्रियमनोऽर्थसन्निकर्षग्रहणादृते सुखदुःखाभाव इत्येतावति सति मुक्तस्यापि सुखदुःखाभावाद्योगित्वप्रसङ्ग इति तन्निवृत्त्यर्थं सूत्रशेषग्रहणमिति । तच्च न, मुक्तस्य सुखदुःखप्राप्त्यभावात्, प्राप्तिपूर्वप्रतिषेधस्य न्याय्यत्वात्, यस्य सुखदुःखप्राप्तिः, तद्विषयः सुखदुःखाभाव एव योग इति सूत्रशेषप्रत्याख्यानं युज्यते॥

किं चान्यत्—उपात्तेऽपि सशरीरग्रहणे मुक्तादिनिवृत्तिर्न शक्यते कर्तुम्, निष्प्रयोजनत्वात् । सुखदुःखाभावश्चेद्योगः, विद्यमानमपि शरीरं कार्याकरणादनर्थकं स्यात् । कार्यानपेक्षायां हि मुक्तामुक्तयोरविशेष एव ॥

कि चान्यत्—प्राणमनोविनिग्रहापेक्ष इत्यपि न घटते । विधारकस्य प्रयत्नस्यात्मसमवेतत्वादविद्यमानेऽपि मनसः क्रियावत्त्वे इन्द्रियेणासंयुज्य मनः प्राण·[मनो]निग्रहौ न कर्तुं पर्याप्यते । इन्द्रियसंयोगे च मनसः, तदनारम्भ इत्ययुक्तम् । मनसश्च प्राणनिग्रहे व्यापृ(वृ)तत्वादनारम्भानुपपत्तिः ॥

न चासति इन्द्रियवायुसन्निकर्षे प्राणनिग्रहः । न चानिगृहीते प्राणे योगः, आत्मस्थविधारकप्रयत्नद्वारा मनोगतक्रियासंबन्धहेतुत्वात् प्राणनिग्रहस्य । अथापि स्याद्योगः समाधिरिति । तच्च न, निष्क्रियत्वादात्मनो नित्यसमाधानमेव । स्थितिश्च समाधिरित्युच्यते । तस्माद्युक्तमभिधीयते—'स च सार्वभौमश्चित्तस्य धर्मः' इति ॥

यद्येवं समाधिश्चेद्योगः, स च सार्वभौमश्चित्तधर्मः, स च सर्वजनानामयत्नसिद्धः, क्षिप्ताद्यनुगतत्वात् । तथा च सति, यथैव श्वासप्रश्वासादीनां प्रयत्नादृते सिद्धत्वात्तत्करणम(लक्षणम)नर्थकम्, एवं योगानुशासनमप्यनर्थकं प्राप्तमित्यत आह—[तत्र] विक्षिप्ते (अनविक्षिप्ते) चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्तत इति ॥ क्षिप्ताद्यनुगतस्य योगपक्षेऽनभिप्रेतत्वात् । न हि क्षेपाद्यनुगतः समाधिर्भूतार्थावद्योतनादिक्षमः, क्षेपादिप्रधानत्वात् । विक्षेपनिषेधेनैव हि प्रधानमल्लनिबर्हणन्यायेन क्षिप्तमूढयोरपि निषेधः कृतः । प्रधानता च विक्षेपसमाधेरधिकारयोग्यत्वात् । विक्षेपस्थं हि चित्तमपक्षपातादिष्टं विषयमुपनेतुं शक्यते । न हि विषयासञ्जनादिना क्षिप्तमिष्टविषयवियोगादिना वा मूढमन्यथोपनेतुं पार्यते ॥

[ भाष्यम् ]

यस्त्वेकाग्रे चेतसि स भूत(सद्भूत)मर्थं प्रद्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमा(मभि)मुखी(खं)करोति स संप्रज्ञातः(योग)इत्याख्यायते ॥

स च वितर्कानुगतो विचारानुगत आनन्दानुगतोऽस्मितानुगत इत्युपरिष्टात् (नि)प्रवेदयिष्यामः ॥ १ ॥

[ विवरणम् ]

योगपक्ष इति ॥ समाधित्वे सत्यपि कार्याकरणात् पक्ष इत्युच्यते । यथा गच्छतः प्रतिपदं विद्यमानापि स्थितिः स्थितिकार्याकरणान्न स्थितिरित्युच्यते । विक्षेपोपसर्जनीभूतत्वं विक्षेपस्यैकसमाधिव्यक्त्यभिप्रायेण । सार्वभौम इति तु प्राधान्यं, सामान्येन सर्वभूमिषु वृत्तेः ॥

यद्युपसर्जनीभावः समाधिपक्षावृत्तौ कारणम्, इहाप्येकाग्रे एकाग्रतोपसर्जनत्वं स्यात् । ततश्च योगपक्षावृत्तिरिति चेदत आह—यस्त्वेकाग्र इति । नैकाग्रतायां भूम्युपसर्जनत्वम् । कुतः ? क्लेशकर्माप्रबलत्वात् । क्लेशकर्माप्रबलत्वे न हि विक्षेपादीनामुदयः ॥

एकाग्रताभूमौ समाधिर्यः स भूतमर्थं यथात्मानं प्रद्योतयति अवगमयति । अयोग्यर्थज्ञानमयथाभूतत्वगन्धितमेवेति भूतग्रहणम् । क्षिणोति, क्षपयति, पञ्चपर्वणोऽविद्यादीन् क्लेशान् । कर्मबन्धनानि, कर्माण्येव बन्धनानि, धर्माधर्मविमिश्रकर्मजातानि जन्मादिनिबन्धनानि, श्लथयति, शिथिलीकरोति, निरोधमामुखीकरोति, अभिमुखीकरोति । स सम्प्रज्ञात इत्याख्यायते आचार्यैः ॥

स च वितर्कानुगतो विचारानुगत इत्यादिभाष्यम् । सम्प्रज्ञातस्य प्राथम्याल्लक्षणाभिधाने प्राप्ते, अभ्यर्हितत्वादसम्प्रज्ञातस्यैव लक्षणं युक्तमिह वक्तुमिति सम्प्रज्ञातमुपरिष्टात् प्रवेदयिष्याम इत्युच्यते ॥

इतश्चासम्प्रज्ञातस्य लक्षणमिहैव वक्तव्यं, सम्प्रज्ञातनिरपेक्षोऽप्यसम्प्रज्ञातः पर(प्रकृष्ट)वैराग्यविरामप्रत्ययाभ्यासाभ्यां सिध्यतीत्येतत्प्रदर्शनार्थम् । इह सम्प्रज्ञातलक्षणाभिधाने तदुत्तरकाले चासम्प्रज्ञातलक्षणाभिधाने सम्प्रज्ञातापेक्षयैव असम्प्रज्ञातसमाधावधिकार इत्याशङ्का स्यात्, तस्मादुपरिष्टात् प्रवेदयिष्याम इत्याह ॥ १ ॥

[ भाष्यम् ]

सर्ववृत्तिनिरोधे त्वसंप्रज्ञातः (समाधिः) । तस्य लक्षणाभिधित्सयेदं सूत्रं प्रववृते—

[ सूत्रम् ]

**योगश्चित्तवृत्तिनिरोधः ॥ २ ॥**

[ भाष्यम् ]

सर्वशब्दाग्रहणात् संप्रज्ञातोऽपि योग इत्याख्यायते ।

[ विवरणम् ]

सर्ववृत्तिनिरोधे त्वसंप्रज्ञात इति । तुशब्दोऽवधारणार्थः । तस्य एवंविधस्य समाधेरसंप्रज्ञातस्यैव केवलस्य लक्षणाभिधित्सयेदं सूत्रं प्रववृते प्रवृत्तं 'योगश्चित्तवृत्तिनिरोधः' इ[ती]ति वक्तव्यम् ॥

ननु च तस्य लक्षणमभिधातुमेतत् सूत्रं प्रवृत्तं, तथा च सति 'योगस्य चित्तवृत्तिनिरोधः' इति वक्तव्यं, सामानाधिकरण्यं न युक्तम् । न हि लक्ष्यमेव लक्षणं स्यात् । चित्तवृत्तिनिरोधलक्षण इति वा वक्तव्यम् । नैष दोषः । लक्ष्ये लक्षणाध्यासात् । यथाऽयं पिण्डो देवदत्त इति लक्ष्ये लक्षणमध्यस्यते (प्रत्यस्यते) ॥

ननु च सर्ववृत्तिनिरोधे त्वसम्प्रज्ञातः, तस्य चेदं लक्षणं, ततश्च 'योगः सर्वचित्तवृत्तिनिरोधः' इति वक्तव्यम् । न चोक्तम । अतोऽतिव्यापि लक्षणम् । सर्वशब्दाग्रहणे तावत्कारणमुच्यते—यदि सर्वग्रहणं क्रियते, तदैकदेशनिरोध-निमित्तस्य संप्रज्ञातस्य योगत्वं निवर्तितं स्यात् । तन्माभूदिति सर्वशब्दाग्रहणम् ॥

अस्तु तर्हि संप्रज्ञातासंप्रज्ञातयोः सामान्यलक्षणं, विशेषानुपादानात् । नैष दोषः । योगे प्रकृते पुनर्योगग्रहणात् । विशेषाविवक्षायां हि योगग्रहणं नार्थवत् स्यात् ॥

ननु चानुशासने न्यग्भूतत्वाद्योगस्य इह योगग्रहणे असति चित्तवृत्ति-निरोध इत्युक्तेऽनुशासनार्थता भवेत् सूत्रस्य—नैवं—योगानुशासनस्य प्रस्तुतत्वात् । योगानुशासनं हि प्रारब्धं, नायोगानुशासनं, तल्लक्षणाभिधाने ह्यतिप्रसङ्गः, पदार्थासङ्गतिश्च । न हि चित्तवृत्तिनिरोधो योगानुशासनमिति पदार्थः सङ्गच्छते ॥

एवमपि योगग्रहणात् कुतोऽसंप्रज्ञातस्यैव लक्षणं, न पुनः संप्रज्ञातस्य लक्षणं स्यात् , योगग्रहणस्याविशिष्टत्वादिति ?

[ भाष्यम् ]

**चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात् त्रिगुणम् । प्रख्यास्वरूपं हि चित्तसत्त्वम्**

[ विवरणम् ]

उच्यते—अव्यभिचारात् । व्यभिचरति न तत्तस्य लक्षणं, निरोधस्त्वसंप्रज्ञातेऽपि वर्तत इति संप्रज्ञातं व्यभिचरति । न हि विषाणित्वं गोर्लिङ्गं, महिष्यादिभिर्व्यभिचारात् ॥

ननु चासंप्रज्ञातमपि व्यभिचरति, संप्रज्ञातस्यापि हेयवृत्तिनिरोधत्वात् । सत्यमेवं, किं तु न निरोधादन्येन लक्षयितुमसंप्रज्ञातः शक्यते । निरोध एव तु तस्य लक्षणम्, अन्यस्याभावात् । संप्रज्ञातस्य त्वसाधारणवितर्कादिलक्षणलक्ष्यत्वात् । यथा स्पर्शलक्षणमित्युक्ते वायुरेवासाधारण्याल्लक्ष्यते स्पर्शवत्त्वेन, अथ च विद्यत एव स्पर्शवत्त्वं तेजःप्रभृतिष्वपि ॥

एवं च सति योगग्रहणमनुवादमात्रम् । अत एव च सर्वग्रहणं न कृतं सूत्रे । निरोधग्रहणेनैवासंप्रज्ञातलक्षणत्वे सिद्धे यदि सर्वग्रहणं क्रियेत, तत्संप्रज्ञातस्य योगतां निवारयेत् । तस्मादसंप्रज्ञातस्यैवेदं लक्षणम् । तथा चोपसंहरति भाष्यकारः—'न तत्र किंचित् संप्रज्ञायते इत्यसंप्रज्ञातः, स योगश्चित्तवृत्तिनिरोध' इति ॥

चित्ततद्वृत्तितन्निरोधव्याचिख्यासया **चित्तं हीत्यादि** भाष्यम् । किमात्मकं पुनस्तच्चित्तं, यस्य वृत्तिनिरोधो योग इत्यत आह—**चित्तं हि प्रख्याप्रवृत्तिस्थितिशीलत्वात् त्रिगुणमिति** । तत्र चित्तं त्रिगुणमिति व्याख्यायते, प्रख्याप्रवृत्तिस्थितिशीलत्वादिति हेतुः । प्रख्या प्रख्यानं प्रकाशनं, स हि सत्त्वगुणस्य धर्मः । प्रवृत्तिः प्रवर्तनं व्यापारः, स हि रजोधर्मः । स्थितिः स्थानं वरणं प्रतिबन्ध इति, स च तमोधर्मः । एवंशीला हि सत्त्वादयो गुणाः, चित्तं च प्रख्यादिशीलं, तस्मात् त्रयाणां गुणानां परिणामश्चित्तं भवितुमर्हति ॥

तस्य च प्रख्यादिहेतोरसिद्धिमाशंक्याह—**प्रख्यास्वरूपं हि चित्तसत्त्वमिति** । हिशब्दः प्रसिद्धावद्योतनार्थः । प्रसिद्धं हि लोके शास्त्रे च सर्वावभासकत्वं चित्तस्य । चित्तमेव सत्त्वं चित्तसत्त्वं सत्त्वप्रधानगुणपरिणामत्वात् ॥

अथवा अन्यसंसर्गवियोगाभ्यामनेकवृत्ति ख्यातिमात्रं च चित्तं स्पष्टं दर्शयितुं शक्यत इति ब्रवीति—**प्रख्यास्वरूपं हि चित्तसत्त्वमिति** ॥

[ भाष्यम् ]

रजस्तमोभ्यां संसृष्टम् ऐश्वर्यविषयप्रियं भवति। तत्तमसानुविद्धम् अधर्माज्ञानावैराग्यानैश्वर्योपगं भवति।

तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति। तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यताख्यातिमात्रं धर्ममेघध्यानोपगं भवति। तत् परं प्रसङ्ख्यानमित्याचक्षते ध्यायिनः।

चितिशक्तिरपरिणामिनी अप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च।

[ विवरणम् ]

इदानीं वृत्तयो व्याख्यायन्ते। तासां चानेकत्वं रजस्तमसोरुद्भवाभिभवनिमित्तं विरुद्धत्वं चेत्याह—रजस्तमोभ्यां संसृष्टं समप्रधानाभ्यां यदा संसृष्टं तदानीं ऐश्वर्यविषयप्रियं भवति॥ प्रीतिः रागः, ऐश्वर्यविषयरागयुक्ता वृत्तयो भवन्तीत्यर्थः॥

तत्तमसानुविद्धं॥ तदेव प्रख्यास्वरूपं चित्तं यदा गुणभूतरजस्केनोद्भूतेन तमसानुविद्धं, तदानीमधर्मादिचतुष्टयविषया वृत्तयः क्लिष्टा जायन्ते॥

तदेव प्रक्षीणमोहावरणमिति॥ न्यग्भूततमस्कं तमःक्षयादेव जलधरापगमादिव (परि) रविबिम्बं सर्वतः प्रद्योतमानं रजोमात्रया रजोलेशेन अनुविद्धं यदा तदा धर्माद्युपगतं। धर्मादिचतुष्टयविषया वृत्तयोऽक्लिष्टा भवन्ति॥

यदा तदेव रजो[लेश]मलापेतं स्वरूपप्रतिष्ठं केवलेन स्वेन प्रख्यारूपेणावस्थितं, तदा सत्त्वपुरुषान्यताख्यातिमात्रं भवति। सत्त्वं चित्तं पुरुषो भोक्ता तयोरन्यता विविक्तता तत्ख्यातिः तदवगमः, तन्मात्रग्रहणं क्लेशाद्यभावप्रदर्शनार्थम्। धर्ममेघध्यानोपगं भवति धर्ममेघो नाम समाधिः॥

तदेव प्रसंख्यानबलाद्रजस्तमसी तिरस्कृत्य केवलेन ख्यात्यात्मना पुरुषस्वरूपमात्रदर्शनेन अवस्थानं ध्यानं प्रसंख्यानमित्याचक्षते, ध्यायिनो योगिनः॥

एवं वृत्तिस्वरूपे व्याख्याते तन्निरोधप्रदर्शनार्थमाह—चित्तशक्तिरित्यादि॥ चितिरेव शक्तिः चितिशक्तिः। यथा पच्यादयः शक्तयः शक्तिमदपेक्षाप्रापणीयजन्मानो न स्वयंशक्तयः। चितिः पुनः स्वयमेव शक्तिः, नार्थान्तरमपेक्षते।

[ भाष्यम् ]

सत्त्वगुणात्मिका चेयमतो विपरीता विवेकख्यातिरिति । अतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि । तदवस्थं संस्कारोपगं भवति । स निर्बीजः समाधिः । न तत्र किंचित् संप्रज्ञायत इत्यसंप्रज्ञातः । (द्विविधः) स योगश्चित्तवृत्तिनिरोध इति ॥ २ ॥

[ विवरणम् ]

तेन नित्यावस्थितत्वम् । चितिशब्दस्य चिन्मात्राभिधायिनः शक्तिशब्देन सामानाधिकरण्यं अविकृतरूपाया एव चितेर्विषयित्वप्रदर्शनार्थम् ॥

यस्मादेवमतोऽपरिणामिनी । व्यवस्थिते धर्मिणि धर्मान्तरतिरोभावेन धर्मान्तरप्रादुर्भावः परिणामः । न परिणमितुं शीलमस्या इत्यपरिणामिनी । अत एव अप्रतिसङ्क्रमा, परिणामिन एव चित्तादेर्विषयादौ प्रतिसङ्क्रमदर्शनात् ॥

अत एव दर्शितविषया दर्शितोऽन्तःकरणेन विषयोऽस्या इति । तेनैव शुद्धा । अत एव अनन्ता देशतः कालतश्च । पूर्वपूर्वमुत्तरस्योत्तरस्य हेतुत्वेन द्रष्टव्यम् । वैधर्म्यदृष्टान्तः चित्तमिन्द्रियाणि च । सत्त्वगुणात्मिका सत्त्वमेव गुणः सत्त्वगुणः तस्यैवात्मा स्वरूपमवभासो यस्याः सेयं सत्त्वगुणात्मिका अवभासस्वरूपेत्यर्थः । दृश्यविशिष्टवृत्तित्वाद्वा सत्त्वगुणात्मिकेत्युच्यते ॥

यदि वा ख्यात्या संबध्यते ख्यातिः सत्त्वगुणात्मिकेति । अतः चितिशक्तेरुक्तलक्षणाया विपरीता विलक्षणा विवेकख्यातिः परिणामादिमती ॥

यस्मात् पुरुषादुत्कृष्टात् परिणामादिगुणविरहितान्निकृष्टा परिणामादिगुणयुक्ता, अतः स्वरूपदोषदर्शनात् तस्यां विरक्तं अपरक्तं तामपि ख्यातिं आत्मनो निरुणद्धि ॥

तदवस्थं निरोधावस्थं, संस्कारोपगं, संस्कारमात्रावशेषम् । निरुद्धासु वृत्तिषु वृत्तिजनिताः संस्कारा एवावशिष्यन्ते । एतस्यां निरोधभूमौ यः समाधिः स निर्बीजः । निर्गतं बीजमत्र क्लेशादिबीजं सर्वमुत्सन्नमस्मिन्निति । तस्मादसंप्रज्ञातसमाधिलक्षणार्थमेव सूत्रमित्युपसंहरति—स योगश्चित्तवृत्तिनिरोध इति ॥ २ ॥

योगश्चित्तवृत्तिनिरोध इत्युक्तं, तत्र बोद्धृत्वेनैव पुरुषसद्भावाधिगमः, विषयभूतवृत्तिनिरोधे च विषयिणोऽपि बोद्धुः पुरुषस्य निरोधं कश्चिदाशङ्कतापि, तथा च सति तत्कैवल्यप्राप्त्युपायस्यापि विवेकख्यातेरनर्थकत्वं मन्वीत

[ भाष्यम् ]

तदवस्थे चेतसि स्वविषयाभावात् बुद्धिबोधात्मा पुरुषः किंस्वभाव इति—

[ सूत्रम् ]

**तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥**

[ भाष्यम् ]

स्वरूपप्रतिष्ठा तदानीं चितिशक्तिः, यथा कैवल्ये । व्युत्थानचित्ते तु सति तथापि भवन्ती न तथा ॥ ३ ॥

[ विवरणम् ]

योगानुशासनस्यापि तदर्थस्य निष्फलत्वं प्रतिपद्येत, तस्मात्पुरुषस्य वृत्तिनिरोधादनिरोधं दर्शयितुकामः ख्यातेश्चापि फलं साक्षाद्दर्शयन्नाह—**तदवस्थे चेतसीत्यादि** ॥

**तदवस्थे**—निरोधावस्थे । **स्वविषयाभावात्**—स्वविषयश्चित्तवृत्तिस्तदभा( वे )वात् । **बुद्धिबोधात्मा** बुद्धिं वृत्तिरूपेण परिणतां बुध्यत इति बुद्धेर्बोद्धा पुरुषः । तद्बोधनमेव हि पुरुषस्य स्वं रूपं, नान्यो बोद्धा, नान्यद्बोधनम् । बोद्धुश्च बोधनादन्यत्वे सति विक्रियात्मकता स्यात् । ततश्च दर्शितविषयत्वं च न स्यात् । तथा च करणान्तरापेक्षित्वं पुरुषस्य प्रसज्येत । तस्माद्बोधनं बोद्धृत्वं चोपचरितं तद्वृत्तिसारूप्येण । तथा च वक्ष्यति—'द्रष्टा दृशिमात्रः[1]' इति ॥ तस्मादाह बुद्धिबोधनमेवात्मा स्वरूपं यस्य स बुद्धिबोधात्मा पुरुषः **किंस्वभावः** किं नश्वरस्वभावः, सद्भावे वा किंस्वभावः, कथं वा सद्भाव इति ? ॥ **तदा द्रष्टुः स्वरूपेऽवस्थानम्** ॥ यदा निरुद्धा वृत्तयः, **स्वरूपप्रतिष्ठा तदानीं चितिशक्तिः** । स्वरूपप्रतिष्ठेत्यर्थः । **यथा कैवल्ये** ॥ तदा सद्भावं तु **'न तत्स्वाभासं दृश्यत्वात्'**[2] इत्येवमादिना वक्ष्यति । तत्र सिद्धे सद्भावे तत आकृष्य प्रासाशङ्कानिवृत्त्यर्थमुच्यते—**स्वरूपप्रतिष्ठेति** ॥

सिद्धवद्व्याख्यातं सूत्रम् । तत्रेदं प्रसक्तमितरत्र न स्वरूपप्रतिष्ठेति । अन्यथा हि तदेति विशेषणानर्थक्यं स्यात् । न चेदन्यत्र स्वरूपप्रतिष्ठा तत्रावस्थान्तरयोगात् परिणामित्वादिदोषः प्राप्नोतीति तत्परिजिहीर्षयाह—**व्युत्थानचित्ते तु सति तथापि भवन्तीति** । [अनेन] अन्यत्रापि स्वरूपप्रतिष्ठत्वं दर्शयति ॥

---

1. पा-2. सू-20.  2. पा-4. सू-19.

[ भाष्यम् ]

कथं तर्हि ? दर्शितविषयत्वात्—

[ सूत्रम् ]

वृत्तिसारूप्यमितरत्र ॥ ४ ॥

[ भाष्यम् ]

व्युत्थाने याश्चित्तवृत्तयः तदविशिष्टवृत्तिः पुरुषः । तथा च सूत्रम्—'एकमेव दर्शनं ख्यातिरेव दर्शनम्' इति ।

[ विवरणम् ]

न तथेत्यनेन तदेति विशेषणस्यार्थवत्त्वं ख्यापयति ॥ ३ ॥

इतरस्तु तथापि भवन्तीत्यनेन चेत्स्वरूपप्रतिष्ठत्वमुच्यते, न तथेति च स्वरूपप्रतिष्ठत्वनिषेधश्चेदेकस्य वस्तुनस्तथाभावश्चातथाभावश्च विरुध्यत इति वीक्षापन्नः पृच्छति—कथं तर्हि इति ॥ इतर आह—वृत्तिसारूप्यमितरत्रेति ॥ कस्मात् पुनर्वृत्तिसारूप्यम् ? दर्शितविषयत्वात् ॥ उभयत्र स्वरूपप्रतिष्ठत्वाविशेषेऽपि वृत्तिसारूप्यासारूप्यकृतो विशेष इति, न तथाभावातथाभावविरोधः ॥

ननु च वृत्तिसारूप्ययोगे सति अवस्थान्तरयोगात् परिणामित्वादिदोषः प्राप्नोत्येव । न । दर्शितविषयत्वेन परिहृतत्वात् । चित्तवृत्त्यध्यारोपितं हि तत्, न स्वतः, स्फटिकाद्युपधानोपरागवत् । व्युत्थान इति ॥ निरोधादन्यत्र याश्चित्तस्य क्लिष्टादयो वृत्तयः ताभिरविशिष्टा सदृशी वृत्तिः स्वरूपमस्य, चित्तवृत्तिव्यतिरेकेण स्वरूपव्यतिरेकेण च पुरुषस्य वृत्त्यभावात्, सदा ज्ञातविषयत्वे परिणामानुपपत्तेश्च ॥

तथा च पूर्वाचा[1]र्यसूत्रम् एकमेव दर्शनं—बुद्धिपुरुषयोः । किं तदित्याह—ख्यातिरेव दर्शनम् । बुद्धिवृत्तिरेव दर्शनम् । ख्यायते पुरुषेणेति च ख्यातिः ख्यायतेऽनया च बुद्धिपुरुषयोः स्वरूपमिति ख्यातिः । सैवार्थाकारोऽनया (कारतया) गृह्यत इति करणं, स्वेन च ख्यातिरूपेण गृह्यत इति कर्म च भवति । तथा दृश्यत इति दर्शनं, दृश्यतेऽनेनेति च, [ज्ञायत इति ज्ञानं,] ज्ञायतेऽनेनेति च सर्वमेवमादि द्रष्टव्यम् ॥

यत्तु ख्यातिकर्तृत्वे चित्तस्य तदेव ज्ञायते जानाति चेति (ज्ञानादितिचेति) ज्ञानान्तरकल्पनावैयर्थ्यप्रसङ्ग इति, तस्य 'न [2]तत्स्वाभासं दृश्यत्वात्' इत्यत्रैव परिहारं वक्ष्यामः ॥

---

1. पञ्चशिखाचार्यसूत्रम् 2. पा. 4. सू. 19.

[ भाष्यम् ]

चित्तमयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन स्वं भवति

[ विवरणम् ]

ननु च यदि चित्तपरिविजृम्भितमेवेदं सर्वं पुरुषश्चेदुदास्ते कथमसौ भोक्तेति ? न—कारकवैचित्र्यात् । कानिचिद्व्याप्रियमाणानि कारकाणि, कानिचिद्व्यापारादृते सन्निधिमात्रेण कर्तृत्वं प्रतिपद्यन्ते ॥

यथा पचतीत्यधिश्रयणादिषु व्याप्रियमाणः पुरुषः कर्तेत्युच्यते । स्थाली सम्भवधारणाभ्यामव्याप्रियमाणैव पचतीत्युच्यते । तथा स्थालीमध्यगतमाकाश-मवकाशं ददाति, न तस्य व्यापारं प्रतीमः ॥

यथा च राजा दर्शनमात्रेणैव कर्ता । सर्वाणि च कारकाणि स्वेषु व्यापारेषु कर्तृणि । न चादित्यः प्रकाशयन् करणान्तरमपेक्षते, व्याप्रियते वा । न हि प्रकाश-नमविद्यमानमुत्पादयति गमनादिवत् । प्रकाशात्मतैव हि तस्य सद्भावः, तथापि सन्निधिमात्रेण घटादीनां प्रकाशरूपेण अभिव्यक्तेः प्रकाशयतीत्युच्यते, एवमिहापि दृशिमात्रेण पुरुषेण दृश्यानां चित्तवृत्तीनां चिदात्मना व्याप्यमानत्वात् , द्रष्टा पुरुष इतीममर्थं दर्शयति—**चित्तमयस्कान्तमणिकल्पमिति** ॥

यस्याध्यात्ममनस्संयोगात् ज्ञानमुत्पद्यते, तस्यापि ज्ञानेन ज्ञेयं व्याप्नुवन्नात्मा ज्ञातेत्युच्यते, न व्याप्रियमाणः । ज्ञानम(स्या)पि गुणत्वे इति निष्क्रियत्वादात्मन एवार्थं दर्शयति । नापि क्रियानभ्युपगमात् जानातीत्यादि नोपपद्यते । ज्ञानेन हि ज्ञेयं व्याप्नुवन् जानातीत्युच्यते ॥

किं चान्यत्—आत्ममनस्संयोगादपूर्वज्ञानोत्पत्तौ सत्यामात्मनस्तज्ज्ञानं, न मनसः । आत्मैव जानाति, न मन इति को हेतुर्भवेत् ? अथापि स्यात्—आत्मनः समवायिकारणत्वादिति । नैतदेवं, असिद्धत्वात् । यथैव ज्ञानमात्मन इति साध्यं, एवमात्मन एव समवायिकारणत्वं न मनस इति साध्यम् , अनात्मस्वरूपत्वे सत्युभयसंयोगजत्वाभ्युपगमात् ॥

अथापि स्यात्—ज्ञानाहितसंस्कारस्यात्म[नः]स्मृत्यैककर्तृत्वेन प्रतिसन्धान-दर्शनादिति—न—तस्यापि साध्यत्वात् । तत्रापि ज्ञानसंस्कारस्मृतिप्रति-सन्धानादीन्यात्मन एव, न मनस इति साधनीयानि । फलेन समानाश्रयत्वादि-च्छादीनामिति चेत्—न—तत्रापि तुल्यत्वात् । संयोगजत्वे सत्यात्मनः फलेच्छादीनि, न मनस इति दुःसाधमेव ॥

[ भाष्यम् ]

पुरुषस्य स्वामिनः । तस्माच्चित्तवृत्तिबोधे पुरुषस्यानादिः संबन्धो हेतुः ॥ ४ ॥

[ विवरणम् ]

किं चास्य ज्ञानस्यापि ज्ञेयत्वाभ्युपगमादनवस्थाप्रसङ्गः । न हि ज्ञानमन्येन करणभूतेन ज्ञानेन विज्ञातुं शक्यं, तदप्यन्येन तदप्यन्येनेत्यनिष्टप्रसङ्गात् ॥

अथानवस्थाप्रसङ्गपरिहाराय दूरमपि गत्वा किंचिज्ज्ञानमाद्यं वा ज्ञानान्तरेण न गृह्यते स्वयमात्मनैव गृह्यत इति, तथा ज्ञानवदर्थस्यापि स्वयं ग्रहणप्रसङ्गः ॥

अथ दीपवत् स्वयमवभासते चावभासयति च अवभासात्मकत्वात्, अर्थस्यानवभासात्मकत्वाददोष इति चेत्—तथापि प्रकाशस्वरूपेष्वर्थेषु विज्ञानेनाग्रहणप्रसङ्गः ॥

अथ ज्ञानस्यात्मसमवेतत्वाभासनरूपाभ्यां स्वयं ग्रहणं, बहिःप्रकाशात्मकानां तु ज्ञानविपरीतधर्मत्वाददोष इति चेत्—तच्च न—यदि चात्मसमवेतत्वं प्रकाशात्मकत्वं च ज्ञानस्य स्वयंग्रहणे हेतुः स्यात् सर्वे सर्वज्ञाः प्राप्नुवन्ति ॥

अथ ग्राह्याकारत्वमपि कारणं चेत्—तच्च न ; अन्यस्य ज्ञानस्यान्याकारतया करणत्वं यथा, तथा ज्ञानस्यापि ग्राह्यस्यान्याकारेणान्यदेव ज्ञानं करणं स्यात्, तथा चानवस्था दुष्परिहरैव ॥

किं चान्यत्—न हि कश्चित् स्वयंग्राह्यग्राहकत्वप्रसाधनाय दृष्टान्तो विद्यते, प्रदीपस्यापि चक्षुरादिग्राह्यत्वात् । न चाप्यंशद्वयमस्ति ज्ञानस्य, निरवयवत्वात् । सत्यपि चांशद्वये तयोः प्रकाशात्मकत्वान्नान्योन्यग्राह्यग्राहकभावः प्रदीपयोरिव द्वयोः ॥

किं चान्यत्—ज्ञानस्य ग्राह्यग्राहकत्वाभ्युपगमे सत्यात्मसद्भावोऽपि दुस्सम्पाद एव । तस्मादर्थाकारज्ञानस्मृतिप्रतिसन्धानप्रयत्नेच्छादीनामनात्मधर्मत्वं ग्राह्यत्वात् रूपादीनामिव । परार्थत्वाच्च सङ्घाताश्रयत्वं रूपादिनिदर्शनेनैव । तथा आश्रयवत्त्वादनित्यत्वाच्च प्रयत्नपूर्वकत्वाच्चेत्येवमादिभ्योऽनात्मधर्मत्वसिद्धिः ॥

**अयस्कान्तमणिकल्पम्** ॥ अयस्कान्तमणिरिव । यथा अयस्कान्तमणिरयसः स्वात्मव्याप्तिं प्रत्युपकरोति सन्निधिमात्रेण, तथा चित्तमपि चित्स्वरूपस्यात्मनः स्वात्मव्याप्तिं प्रत्युपकरोति दृश्यत्वेन ॥

[ भाष्यम् ]

ताः पुनर्निरोद्धव्याः बहुत्वे सति चित्तस्य—

[ सूत्रम् ]

**वृत्तयः पञ्चतय्यः क्लिष्टाक्लिष्टाः ॥ ५ ॥**

[ भाष्यम् ]

क्लेशहेतुकाः कर्माशयप्रचये क्षेत्रीभूताः क्लिष्टाः । ख्यातिविषया गुणाधिकारविरोधिन्योऽक्लिष्टाः । क्लिष्टप्रवाहपतिता अप्यक्लिष्टाः ।

[ विवरणम् ]

नर्तकीव दर्शितविषयत्वादन्तःकरणेनेत्युक्तम्—तत्र दर्शयितृत्वं चित्तस्य, द्रष्टृत्वं च पुरुषस्य किंकृतम्? स्वस्वामित्वकृतम् । कथं पुनः स्वस्वामित्वम्? वस्तुस्वभावत्वात् । कथमिति चेदुक्तं—चित्तमयस्कान्तमणिकल्पमिति ॥ अथ चित्तवृत्तीनां बोधे को हेतुः पुरुषस्येति? उच्यते - यस्मादेवं सन्निधिमात्रोपकारि चित्तं दृश्यत्वेन, तस्माच्चित्तवृत्तीनां बोधे पुरुषस्य अयं हेतुः भवति, योऽसौ अनादिसम्बन्धः ॥ ४ ॥

ताः पुनर्निरोद्धव्याः बहुत्वेऽपि सति चित्तस्य याभिर्वृत्तिभिः व्युत्थाने सारूप्यमुक्तं पुरुषस्य । कस्मात् पुनः निरोद्धव्या इत्याह—यतो वृत्तयः क्लिष्टाक्लिष्टाः ॥

ननु च बहुत्वे सति न शक्या निरोद्धुमित्यत आह—पञ्चतय्य इति । यद्यपि क्लिष्टाक्लिष्टा वृत्तयोऽनन्ताः, तथापि पञ्चतय्यः पञ्चविधाः, पञ्चकुला एव । ततश्च पञ्चप्रकारवृत्तिप्रतिपक्षभूताभ्यासवैराग्यप्रयोगादेव निरोधोपपत्तेः, प्रत्यवयवनिरोधसाधनाप्रयोजकत्वाद्वृत्तीनां, तद्बहुत्वे न निरोधाशक्यत्वप्रसङ्गः । क्लेशहेतुकाः—क्लेशनिमित्ताः । अविद्यादिपञ्चक्लेशप्रयुक्तं हि चित्तं वृत्तिभिरात्मानं पुनः पुनरावेदयति । कर्माशयप्रचये कर्माणि कुशलाकुशलविमिश्राणि तान्येवाऽऽफलप्रदानाच्छेरत इति कर्माशयशब्दवाच्यानि, तेषां प्रचय इतरेतरगुण-प्रधानभावेन संहननं, तस्मिन् कर्माशयप्रचये निमित्ते, अविद्यादिक्षेत्रीभूताः क्लिष्टाश्रया इत्यर्थः । सतीषु हि तासु कर्माशयो विपाकाभिमुखीभवति ॥

ख्यातिविषयाः—ख्यात्यास्पदाः । गुणानां सत्त्वादीनाम् अधिकारः संस्कारप्रवृत्तिः तद्विरोधिन्यः । ख्यातिविषयत्वादेव ता अक्लिष्टाः, अपवर्गहेतुत्वात् ॥

[ भाष्यम् ]

क्लिष्टच्छिद्रेष्वप्यक्लिष्टा भवन्ति । अक्लिष्टच्छिद्रेषु क्लिष्टा इति । तथाजातीयकाः संस्कारा वृत्तिभिरेव क्रियन्ते । संस्कारैश्च वृत्तय इति । एवं वृत्तिसंस्कार-चक्रमनिशमावर्तते । तदेवंभूतं चित्तमवसिताधिकारमात्मकल्पेन व्यवतिष्ठते प्रलयं वा गच्छतीति ॥ ५ ॥

ताः क्लिष्टाश्चाक्लिष्टाश्च पञ्चधा वृत्तयः—

[ सूत्रम् ]

**प्रमाणविपर्ययविकल्पनिद्रास्मृतयः ॥ ६ ॥**

**प्रत्यक्षानुमानागमाः प्रमाणानि ॥ ७ ॥**

[ विवरणम् ]

अथ क्लिष्टपङ्क्तिमध्य(मानु)जन्मानोऽक्लिष्टा वृत्तयः किं क्लिष्टा एव क्षीरकुम्भप्रक्षिप्ताम्बुबिन्दुवत् ? एवमक्लिष्टप्रवाहपतिता अपि क्लिष्टाः किमक्लिष्टा एव ? किं चातः ; यदि क्लिष्टप्रवाहगता अक्लिष्टाः क्लिष्टाः स्युः, तदा वृत्तिसंस्कारानुविधायिनी स्मृतिः, तदनुरूप एव व्यवहारः । स चापि न सिध्यति स्वरूपव्यभिचारे । तस्मादाह— **क्लिष्टच्छिद्रेष्वप्यक्लिष्टाः** अक्लिष्टा एव **भवन्ति** । **अक्लिष्टछिद्रेषु** अपि **क्लिष्टाः** क्लिष्टा एव । यस्मादेवं तस्मात् **तथाजातीयकाः संस्कारा वृत्तिभिरेव क्रियन्ते** ॥

यद्यपि क्लेशादयोऽपि संस्कारमारभन्ते, तथापि वृत्तिद्वारैव तेषामपि संस्कार इति वृत्तिभिरेवेत्येवकारार्थः । तथा **संस्कारैरपि वृत्तयः** स्वानुरूपं क्रियन्त इत्येवं—**वृत्तिसंस्कारचक्रमनिशम**नवरत**मावर्तते । तदेवंभूतं चित्तं**— एवं हेतुहेतुमद्वृत्तिसंस्कारधर्मकम् । **अवसिताधिकारं**—निवृत्ताविद्याहेतु-प्रवृत्तिकं हेतुमात्रावस्थत्वात् । **आत्मकल्पेन**—पुरुषकल्पेन ख्यातिमात्रेणैव कञ्चित्कालमवतिष्ठते—प्रारब्धसंस्कारशेषानुवृत्त्या । **प्रलयं वा गच्छति**— संस्कारावसानादिति ॥ ५ ॥

काः पुनस्ताः क्लिष्टाक्लिष्टाः पञ्चप्रकारा वृत्तय इत्याह—**प्रमाणविपर्यय-विकल्पनिद्रास्मृतय इति** ॥

एतावत्य एव वृत्तयः । तत्र—**प्रत्यक्षानुमानागमाः प्रमाणानि** ॥ प्रमाणाख्या वृत्तिस्त्रिधैव भिद्यते । तत्र प्रमाणाख्यायाश्चित्तवृत्तेः प्रथमो भेदः

[ भाष्यम् ]

इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात्तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम् ।

[ विवरणम् ]

प्रत्यक्षम् । अतस्तल्लक्षणमेवाभिधीयते । तत्पूर्वकत्वात् भेदद्वयस्य ॥ इन्द्रियप्रनाडिकया ॥ इन्द्रियमिति श्रोत्रादिपञ्चकं न कर्मेन्द्रियं, तस्य चित्तवृत्त्यहेतुत्वात् । क्रियार्थं हि तत् । तस्मादिन्द्रियशब्दस्य सामान्यार्थत्वेऽपि चित्तवृत्तेरुपन्या- सिच्छयासितत्वाच्छ्रोत्रादिविषयतैव । वृत्त्यर्थत्वाच्च श्रोत्रादीनाम् । इन्द्रियमेव प्रनाडिका द्वारं शब्दाद्याकारवृत्तिरूपेण परिणममानस्य चित्तस्य । अतस्तत् तेनेन्द्रियद्वारेण सामान्यविशेषात्मकवाह्यवस्त्वाकारतया परिणममानमुपरज्यते । तस्य तदुपरागाद्धेतोः चित्तस्य या मुद्राप्रतिमुद्रावत् वृत्तिः सामान्यविशेषात्मकवस्तूपरागेऽपि विशेषावधारणप्रधाना सैव प्रत्यक्षं प्रमाणम् ॥

अथ स्वविषयसामान्यविशेषावभासनसामर्थ्ये श्रोत्रादीनां चित्तस्य च किंकृतं विशेषावधारणप्राधान्यमिति ?

उच्यते—विशेषप्रतिबन्धत्वात् हानोपादानादीनां विशेषावधारणप्रधानतेति (तेत्याह)। न सामान्यं नावधार्यते, गुणभूतं तु गृह्यत एव । यथा नीलं रूपमिति नीलावधारणप्राधान्ये सत्यपि रूपमेव नीलमिति गुणभूतमवधारयति । तथा दुःखशब्दः सुखशब्दो मूढः शब्द इति । तथा च विशेषावधारणप्रधाना वृत्तिरिति ह्युपपद्यते ॥

किं च—संशयविपर्ययनिमित्तत्वाच्च सामान्योपलब्धेः । सामान्ये ह्युपलब्धे बुभुत्सितविशेषस्य संशयो जायते, समुपलब्धसामान्यान्यस्मृतेर्वा विपर्ययः, समधिगतविशेषस्य तु संशयविपर्ययौ न स्थितिमुपारनुवाते, इति विशेषावधारणप्रधानतोच्यते ॥

यत्रापि सामान्यमेवावदिधारयिषितं गौरिति वा अश्व इति वा, तत्राप्यन्यतरपरित्यागेनान्यतरावधारणेति विशेषावधारणप्रधानतैव । सर्वमेव हि वस्तु वस्त्वन्तरापेक्षया सामान्यं विशेषश्च ॥

यस्य पुनः सामान्यमवस्त्वध्यारोपितमेवोषराम्बुवत्, नेन्द्रियविषयमिति, तस्य प्रतिनियतसामान्याध्यारोपणानुपपत्तिः । न ह्यनुपलब्धपूर्व-

मुद्ग्ये संभवत्यध्यारोपणा, स्मृत्यसंभवात् । न कदाचिददृष्टमुद्ग्येोदकस्य सलिलाध्यारोपणमूषरेषु विद्यते । अथास्मरन्नप्यध्यारोपयेत् रूपस्वलक्षणे शब्दत्वाद्यप्यध्यस्येत् । अथेन्द्रियान्तरविषयत्वाद्रूपस्वलक्षणे शब्दत्वाद्यध्यासो विरुद्ध इति चेत्—न—अवस्तुत्वे सत्यविशेषात् । विशेषाभ्युपगमे च वस्तुत्वप्रसङ्गः । शब्दस्वलक्षणादिव रूपस्वलक्षणस्य ॥

किं चान्यत्—देशकालान्यविशिष्टप्रत्यक्षा [न] भ्युपगमे समस्तलोकव्यवहारविलोपः स्यात् । न हीदमहममुष्मिन्नवकाशे काले चास्मिन्नद्राक्षमेतस्मान्निमित्तादेवंविशेषणमिति च स्मृत्युपपत्तिः । न च प्रत्यक्षादृष्टेषु विशेष्यवद्विशेषणेषु स्मृतिः संभवति । न च कल्पनापोढेन व्यवहारगोचरातीतेन व्यवहरमाणो दृश्यते । तस्माल्लोकप्रसिद्धप्रत्यक्षानुसरणमेव न्याय्यम् ॥

ननु च योगिनां निर्विकल्पसमाधिजं दर्शनं, तस्यानेवंलक्षणत्वात्, तथा सुखरागादिविज्ञानस्य चानिन्द्रियप्रनाडी*पूर्वत्वात् प्रमाणान्तरत्वमभ्युपेतव्यं, प्रत्यक्षत्वं वा वक्तव्यम् । उच्यते । प्रत्यक्षस्य (न प्रमाणस्य) पुरुषप्रत्ययापेक्षत्वेन परिहृतत्वात् । न ह्यप्रत्यया वृत्तिः प्रत्यक्षम् । चैतन्योदयहेतोरेव सप्रत्ययायाः प्रत्यक्षत्वम् । तथा चाह—'फलं तदविशिष्टः पौरुषेयश्चित्तवृत्तिबोध' इति ॥ एवं च सति सुखरागादिज्ञानस्य क्लिष्टाक्लिष्टरूपस्य तदविशिष्टपुरुषप्रत्ययफलावसानत्वात् प्रत्यक्षता सिद्धैव ॥

---

* अत्रेदमवधेयम्—

आदर्शकोशे २० "प्रनाडी" इत्येतदुपरि २५ "नपेक्ष्य सम्बन्धः सम्बन्धतामियात् । यदसौ प्रसिद्धवच्चोच्यते य इति" इत्युपक्रम्य ३४ "स्मृत्यवसाना हि सा, यतः प्रमा" इत्यन्तग्रन्थं दशभिः पुटैर्विलिख्य, तदुपरि २० "पूर्वत्वात् प्रमाणान्तरत्वमभ्युपेतव्यं, प्रत्यक्षत्वं वा वक्तव्यम्" इत्युपक्रम्य २५ "तस्मात् प्रमाणफलानभिज्ञानाम् अभिमानमात्रमेव केवलं पण्डितंमन्यानामित्युपेक्षणीयमिति" इत्यन्तं षड्भिः पुटैर्विलिख्य, ततः २५ "अनुमानमथोच्यते" इत्यादि २५ "कः सम्बन्धः, कयोर्वा, न हि सम्बन्धिनाव" इत्यन्तं विलिख्य पङ्क्तिचतुष्टयेन, ततः ३४ "र्णेन प्रबाध्यते, अभूतार्थादिविषयत्वात्" इत्यादिवाक्यं लिखितं दृश्यते । कोशान्तरञ्च नं लभ्यते । यथामातृकं मुद्रणे च वाक्यानामनन्वयः—न हि २० "प्रनाडी" इत्यनेन २५ "नपेक्ष्य सम्बन्धः सम्बन्धतामियात्" इत्यन्वेति । न च २५ "कः सम्बन्धः कयोर्वा, न हि सम्बन्धिनाव" इत्यनेन ३४ "र्णेन प्रबाध्यते" इति चान्वेति । एवं प्रत्यक्षप्रमाणनिरूपणमुपक्रम्य तदपरिसमाप्यैव मध्येऽनुमानागमप्रमाणयोर्निरूपणं, ततो विपर्ययनिरूपणं, पुनः प्रत्यक्षप्रमाणनिरूपणशेषः, ततः

इन्द्रियप्रनाडिकाग्रहणं लौकिकप्रत्यक्षोद्भवानुवाद एव । अन्यथा हीन्द्रियनिरपेक्षस्य योगीश्वरयोर्ज्ञानस्याप्रत्यक्षता स्यात् । अस्ति हि क्लेशादिप्रतिबन्धाभावे सर्वार्थेन चित्तसत्त्वेन सर्वविषयेण युगपत्सूक्ष्मव्यवहितादिग्रहणम् । तथा चाह—'तारकं सर्वविषयं[1] सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम्' इति । तस्मान्नावधार्यते इन्द्रियप्रनाडिकयैवेति ॥

बाह्यवस्तूपरागादिति विपर्ययनिवृत्त्यर्थम् । विशेषावधारणप्रधानत्वेन संशयनिवृत्तिरिति ॥

तत्र केषांचित् फलं तदेव प्रमाणम् । अपरेषां तु प्रमाणादन्यत्(त्र) प्रमाणव्यक्त्यन्तरम् (रे) । यथा घटविज्ञानस्य प्रमाणस्य हानोपादानोपेक्षाबुद्धयः फलमिति । गुणदोषतदुभय(वदभव)शून्यत्वविषयत्वादुपादानादिबुद्धीनां प्रमाणभूतघटविज्ञानादत्यन्तभेदः । ततश्चान्यविषयस्य प्रमाणस्य अन्य(प्रमेयस्य)-विषयप्रमाण(णे)व्यक्त्यन्तरं (रे)फलमिति ॥

न हि खदिरच्छेदनस्य खदिरोपादानं तत्परित्यागो वा फलं भवितुं युक्तम् । त्रि(अपि)योगसंबन्धफलत्वात् त्यागोपादानयोः । न च फलस्य फलं सम्भवति । द्वैधीभावफलव्यवहितत्वाच्च ॥

किं च–फलस्य चेत फलं क्रियानपेक्षाप्रसङ्गः । फलार्थं हि क्रियापेक्ष्यते । तच्चेत्फलं विनापि क्रियया फलादपि सिध्यति, (अतोह्य) ततो न ह्यनेकायासापेक्षितनिष्पत्तिक्रियामनुतिष्ठेत् । साधनान्वेषणानुपपत्तिश्च । क्रियाया अभावात् ॥

---

अनुमाननिरूपणोपक्रमः, ततो विपर्ययनिरूपणशेषश्च इति क्रमः आदर्शकोशे दृश्यते । न चायं क्रमः शोभते । "अनिन्द्रियप्रनाडी पूर्वत्वात् प्रमाणान्तरत्वमभ्युपेतव्यम्" इति; दशपुटव्यवहितवाक्यद्वयस्य मिथो योजने, "न हि सम्बन्धिनावनपेक्ष्य सम्बन्धः सम्बन्धतामियात्" इति, षोडशपुटव्यवहितवाक्यद्वयस्य मिथो योजने, "स्मर्यमाणातद्वस्तुप्रतिष्ठत्वान्न प्रमाणं, स्मृत्यवसाना हि सा, यतः प्रमा णेन प्रबाध्यते । अभूतार्थादिविषयत्वात्" इति च षट्पुटव्यवहितवाक्यद्वयस्य मिथो योजने चान्वेति । यथाक्रमं प्रमाणत्रयनिरूपणं, ततो विपर्ययनिरूपणमिति च सूत्रानुसारी भाष्यानुसारी च क्रमोऽनुसृतो भवति, इति पर्यालोच्य महता प्रयासेन मातृकाग्रन्थवाक्यानां सन्निवेशविपर्यासः कृतः । तत्र सूक्ष्मेक्षिकया गुणदोषौ परिशीलनीयौ । "प्रनाडी" इत्यादेरधः अङ्किताः (२०-२५-३४) इति पुटसङ्ख्याः मुद्रितैतत्कोशानुसारिण्यः ॥

1. 3-पा-सू-54.

[ भाष्यम् ]

फलं तदविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः ॥

[ विवरणम् ]

नापि क्रियैव फलं, क्रियानुपरमप्रसङ्गात् । फलावसाना हि (पि) क्रिया । क्रियायाश्च फलत्वे फलानभिलाषित्वप्रसङ्गः । तस्या दुःखत्वात् ॥

तस्मान्न प्रमाणस्वरूपमेव फलम्, नापि तद्व्यतिरिक्तप्रमाणान्तरमित्याह— फलं तदविशिष्ट इत्यादि । तदविशिष्टः तया प्रमाणाख्यया वृत्त्या अविशिष्टः तुल्यः तदाकारत्वेन, पौरुषेयः पुरुषस्यायं बोध इति । पुरुषस्य हि वृत्त्याकारता । तस्मान्नाक्रियाजं द्रव्यस्वरूपमात्रं फलम् । किं तर्हि? द्रव्यस्यैवावस्थान्तरविशेषः (ष)क्रियाजः(जा)क्रियापर्यवसानकालः क्रियोपरमोपपत्तेः फलम् । फलनिष्पत्तावेव हि क्रियोपरम उपपद्यते । एवंभूतस्य मुख्यफलत्वे प्रधानक्रियाव्यवहित(विप्रकृष्टायाः)क्रियाया द्रव्यं द्रव्यस्य वा क्रिया फलमित्यन्योन्यप्रत्युपस्थापकत्वेन प्रधानफलाभिमुखीकरणात् फलत्वोपचारो न विरोत्स्यते ॥

ननु च भवतोऽभ्युपचरितमेव फलम् वृत्त्यविशिष्टतायाः फलत्वेनाभ्युपगमात्, पुरुषस्य च शुद्धत्वात्, तदाकारताया अनृतत्वम् । न हि स्फटिकमणेरलक्तकोपधानाकारता सत्या ॥

बाढम्—तथापि त्वेतदेव फलं मुख्यम्, दृष्टत्वात् । मुख्यफलान्तरादर्शनात् । सर्वस्यैव क्रियाकारकजातस्यैतत्फलार्थत्वात् । एतदवसानं हि तत्सर्वम् । तथा च प्रदर्शितम् ॥

ननु च मिथ्याभूतस्यैव मुख्यफलत्वं वृत्त्याकारस्य, तथा च तदभिलाषानुपपत्तिः । बाढम्—मिथ्याभूत एव वृत्त्यनुगतो भोगः । तथा चाह—"सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः"[1] इति ॥ भाष्यमपि—"तयोः स्वरूपोपलम्भे सति कुतो भोग"[2] इति ॥ अत एव च सम्यग्दर्शनादात्यन्तिकी निवृत्तिरुपपद्यते ॥

येषाममिथ्या फलं, तेषां वैराग्यकारणाभावात् सम्यग्दर्शनान्वेषणानुपपत्तेर्मोक्षाभावः । न च क्रियापरिनिष्पाद्यो मोक्षः, अनित्यत्वप्रसङ्गात् ॥

1. पा-3-सू-35.
2. इदानीन्तनमुद्रितपुस्तके इदं भाष्यं नोपलभ्यते ॥

[ भाष्यम् ]

प्रतिसंवेदी [बुद्धेः] पुरुष इत्युपरिष्टात् [1]प्रवेदयिष्यामः ।

[ विवरणम् ]

अथ बुद्धिबोद्धृत्वं पुरुषस्य सत्त्वं चासिद्धमिति चेत् आह—**प्रतिसंवेदी बुद्धेः पुरुष इत्युपरिष्टात् प्रवेदयिष्याम इति** ॥

ये चापीन्द्रियार्थसन्निकर्षस्य प्रत्यक्षत्वमभ्युपयन्ति, न तेषामपि सम्यगभ्युपेतं, सन्निकर्षस्य क्रियाफलत्वात्। सन्निकर्षश्च संयोगः। स च क्रियाजस्तैरिष्यते। यतो यदुपजायते तत्तस्य प्रमाणम्। तच्च तस्य फलं यदुपजायते ॥

फलमपि सन्निकर्षो ज्ञानं प्रति प्रमाणमिति चेत्—तच्च न—ज्ञापकप्रमाणप्रस्तावे कारकप्रमाणोपन्यासस्यायुक्तत्वात्। सन्निकर्षो हि ज्ञानस्योत्पादको न तस्य ज्ञापकः। प्रमेयाधिगमाय हि प्रत्यक्षादीन्युपन्यस्तानि, न ज्ञानोत्पत्तिकारणम्। तत्प्रक्रियायाम(यान्य)प्रकृतं प्रक्रियेत ॥

अथापि स्यात्—ज्ञानस्यापि प्रमेयत्वात्तच्चाप्युत्पद्यमानं प्रमीयत इति, तदुत्पत्तिकारणस्य सन्निकर्षस्य ज्ञापकत्वमेवेति—तच्च न—ज्ञानं ज्ञानेनैव ज्ञायेत, तेषां तथाभ्युपगमात्। न च सन्निकर्षो ज्ञानम्। ज्ञानोत्पादकत्वेनाभ्युपगमात् ॥

अथ ज्ञानस्य ज्ञाने सन्निकर्षो निमित्तत्वात् प्रमाणमिति चेददृष्टेश्वरेच्छाविषयनिमेषोन्मेषादीनामपि निमित्तत्वात् प्रमाणत्वे कः प्रद्वेषः? न च ज्ञानस्य ज्ञेयत्वे आत्मनश्च स्वभावचिद्रूपत्वानभ्युपगमे शक्या अनवस्था परिहर्तुम् ॥

अथ आत्मसमवेतमात्रतयैव ज्ञानस्य ज्ञेयता, न ज्ञानान्तरमपेक्ष्यते येनातिप्रसज्येतेति चेत्—अस्याप्यन्यत् प्रत्यक्षलक्षणं वाच्यम् अनिन्द्रियसन्निकर्षादिलक्षणत्वादात्मनि ज्ञानसमवायत्वस्य। सन्निकर्षस्य च ज्ञानोत्पत्तिफलत्वात्तदुत्पत्तिव्यवधाने सति तस्य ज्ञानेन नानन्तर्यम् ॥

तस्मात्तदानन्तर्येणापि न सन्निकर्षफलत्वं ज्ञानस्य। तथा हानादिबुद्धीनामपि रूपादिज्ञानफलत्वानुपपत्तिरुक्ता ॥

व्यभिचाराच्च। यथैकस्मिन्नङ्गनादिपिण्डविषये ज्ञाने समाने बहूनामुत्पन्ने कस्यचिदुपादानबुद्धिः, अन्यस्य हेयबुद्धिः, कस्यचिदुभयाभावः, तत्र हानोपादानबुद्धिर्व्यभिचरति। अन्यतरत्रैकमेव ज्ञानं तदेवोभयं व्यभिचरत्युपेक्षकस्य। यच्च यद्व्यभिचरति न तत्तस्य फलम् ॥

---

1. उपपादयिष्याम इति मुद्रितपुस्तके पाठः।

किं च—हानोपादानाभावमात्रत्वादभाव एवोपेक्षा । न चाभावः प्रमाणस्य वस्तुनः फलं भवितुमर्हति । रागद्वेषाभ्यां चोपादानपरित्यागबुद्धी । तदभावात् कारणाभावे कार्याभाव इति प्रमाणविज्ञाने सत्यपि हानोपादानबुद्ध्यभाव एवोपेक्षेति व्यभिचारान्न हानादिबुद्धिफलत्वम् ॥

किं च—रागद्वेषतदभावानामप्युपादानादिबुद्धिफलत्वे प्रमाणत्वप्रसङ्गः । पौरुषेयचित्तवृत्तिबोधफलत्वे तु न किञ्चिद्विरुध्यत इति ॥

ननु च चित्तवृत्तेः संवेद्यत्वमसिद्धम् । न हि करणमेव कर्म भवति । न हि दात्रमेव लूयते । नैष दोषः । क्रियाकारकयोर्भिन्नधर्मत्वात् । क्रियानिर्वृत्तिं प्रति सम्भूय कारकाणि व्याप्रियन्ते परस्परं विषयविषयिभावेन । क्रिया तु सत्तामात्रेणैव फलहेतुरिति करणत्वमस्यामुपचर्यते, न कारकवत् । कुर्वद्धि कारयेदिति क्रियाधिकारकं स्यान्न भूतं भव्यायोपदिश्येत ॥

किं च—अनवस्थाप्रसङ्गश्च । क्रिया चेत् करणं स्यात्, तन्निर्वर्त्यया चान्यया क्रियया भवितव्यम् । न ह्यन्यां क्रियामन्तरेण तस्याः कारणत्वं घटते । यापि चान्या सापि कारणं स्यादन्यस्याः क्रियायाः । साप्यन्यस्या इत्यनवस्था । ततश्च क्रियासन्तानानुपरमात् फलानभिनिर्वृत्तिः । तत्रान्त्या चेत् क्रियान्तरेण विना फलहेतुर्भवेत्, प्रथमस्य तथात्वे कः प्रद्वेषः? चित्तवृत्तेस्त्वभिव्यञ्जकत्वात् संवेद्यतेत्यदोषः ॥

दृश्यते चाभिव्यञ्जकानां स्वरूपसंवेद्यतयैव करणत्वं प्रदीपादीनाम् । तथा चित्तवृत्तेरपि । चक्षुरादिष्वभिव्यञ्जकत्वेऽपि अग्रहणाद्व्यभिचार इति चेत्, समान (चेतनसमान) जातीयसंकरात् कथम् ॥

येषां तावद्भौतिकानीन्द्रियाणि, तेषां चक्षुषस्तैजसत्वात् बाह्येनालोकेन तुल्यजातीयेन व्यतिभेदात् गृह्यमाणस्यैवाविवेकः । यथा प्रदीपानां बहूनां प्रभाव्यतिभेदात् कस्य का प्रभेति न विविच्यते । तथा श्रोत्रादिष्वपि ॥

येषामप्यभौतिकानि, तेषामप्यभिव्यञ्जकत्वेन समानजातीयता वृत्तेरभिव्यञ्जकत्वादग्रहणमिति । तन्न—प्राप्तचैतन्योपग्रहतयाऽविभाव्यत्वादव्यवहितत्वाच्च । सर्वगतत्वेऽप्यात्मनः सूक्ष्मत्वेन स्वच्छतरत्वेन च चित्तेनाव्यवधानाच्च ग्रहणं चित्तवृत्तेस्तस्माच्चित्तवृत्तिप्रमाणेनैव तदाकारतया पौरुषेयोऽपि बोधः संवेद्यमान एव फलमिति सिद्धम् ॥

[ भाष्यम् ]

अनुमेयस्य तुल्यजातीयेष्वनुवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः सम्बन्धो यः

[ विवरणम् ]

येषां पुनः प्रत्यक्षेणासंवेद्या चित्तवृत्तिस्तेषां फलग्रहणप्रमाणाभावः । फले च गृहीते ज्ञानासिद्धत्वस्यार्थापत्तिः । न च फलं गृह्यते प्रमाणव्यापारानभ्युपगमात् । तदभ्युपगमे चानवस्थाप्रसङ्गः । यत्फलावग्रहणाय प्रमाणमभ्युपगम्यते तस्याप्यन्यत् फलं तत्प्रमाणस्याप्यन्यदिति न क्वचिदवतिष्ठेत ॥

अथ न प्रमाणव्यापारस्तस्य तदा प्रमाणाभावात् फलस्यासत्त्वं प्रसक्तम् । यत्र हि सदुपलम्भकानि प्रमाणानि न व्यापारं गच्छन्ति, तन्नास्तीत्यभ्युपगच्छामः (तेषाम्) ॥

अथ अगृह्यमाणमपि तदेव ज्ञानं प्रमाणं फलस्यापीति चेत्—न—अभिव्यञ्जकधर्मव्यतिक्रमात् । न ह्यभिव्यञ्जकं गृह्यमाणमभिव्यञ्जयद्दृष्टम् । न ह्युल्का गिरिशिखरेऽपि निजं धर्ममतिक्रामति ॥

अथाभिव्यञ्जयदेव फलं प्रत्यपि प्रमाणमिति चेत्—सिद्धं तर्हीप्सितमस्माकम् । रागादीनां वृत्तिविशेषणत्वेन ग्रहणोपपत्तेः । रक्तोऽहं द्विष्टोऽहमिति यद्यहंप्रत्ययविशेषणं, तदापि वृत्तिभावाभाविःवेनैव ग्रहणाद्वृत्तिविशेषणानां रागादीनां ग्रहणमुपपद्यते । अ(तेना)न्यथा रूपादिवन्मानान्तरापेक्षत्वप्रसङ्गात् । ततश्चानवस्थेति ॥

तस्मात्प्रमाणफलानभिज्ञानामभिमानमात्रमेव केवलं पण्डितंमन्यानामित्युपेक्षणीयमिति ॥

अनुमानमथोच्यते—**अनुमेयस्य तुल्यजातीयेष्वनुवृत्त** इति । **अनुमेयस्य** [जिज्ञासित]धर्मविशिष्टस्य । तद्धर्मवत्तया **तुल्यजातीयेष्वनुवृत्तः** सद्भावमात्रेण, [**भिन्नजातीयेभ्यः**] तद्विरुद्धधर्मकेभ्यो **व्यावृत्तः**—तेष्वसन् इत्यर्थः । **सम्बन्ध** इति । कः सम्बन्धः ? कयोर्वा ? न हि सम्बन्धिनावनपेक्ष्य सम्बन्धः सम्बन्धतामियात्, यदसौ प्रसिद्धवच्चोच्यते 'य' इति ॥

ननु च अनुमानस्य प्रकृतत्वात्, लिङ्गलिङ्गिनोः सम्बन्धः प्रसिद्ध एव—न—अगमकत्वात् । न केवलः सम्बन्धो गमकः । उच्यते—लिङ्गस्यैव सम्बन्धो व्यावृत्त्यनुवृत्त्योः । कः पुनरसौ ? लिङ्गमेव । न हि लिङ्गादन्यदनुवृत्तं व्यावृत्तं च । तच्च गमकम् । ननु लिङ्गमपि नैव गमकं

[ भाष्यम् ]

तद्विषया सामान्यावधारणप्रधाना वृत्तिरनुमानम् । यथा देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवत् ।

[ विवरणम् ]

लिङ्गिसम्बन्धानपेक्षं, यदि चानपेक्षितलिङ्गलिङ्गिसम्बन्धं गमकं, यत्किञ्चिद्गमकं स्यात्, तस्मात् लिङ्गलिङ्गिसम्बन्धो वक्तव्यः ॥

न—उक्तत्वात् ॥ 'अनुमेयस्य तुल्यजातीयेष्वनुवृत्तः' इत्यादिनैवोक्तत्वात् । न ह्यनुमेयेनासंबद्धं लिङ्गिना तत्सदृशजातीयेष्वनुवर्तते, भिन्नजातीयेभ्यो वा निवर्तते । तस्मात् य इति च प्रसिद्धमेव संबन्धमनुवदति ॥

तद्विषया—एवमन्वयव्यतिरेकविशिष्टसंबन्धसंबन्धिविषया वृत्तिः । सामान्यावधारणप्रधाना—लिङ्गिसामान्यावधारणप्रधाना, अनुमानम् ॥

यथा देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवदिति ॥ यद्यपि लक्षणाभिधानमात्रेण तदभिव्यक्तिः, तथाप्युदाहरणप्रत्युदाहरणप्रदर्शनादतितरामित्युदाहरणप्रतिपादनम् । तत्र गतिमच्चन्द्रतारकमिति चन्द्रतारकस्य गतिमत्त्वमनुमेयम् । तत्समानजातीयेष्वनुवृत्ता देशान्तरप्राप्तिर्गतिमत्सु चैत्रादिषु, भिन्नजातीयेभ्यश्चागतिभ्यो विन्ध्यादिभ्यो व्यावृत्तेति अव्यभिचरन्ती । नित्यं गतिमता संबन्धात् ॥

तस्मादित्थंजातीयकमविनाभावेन संबद्धं संबन्ध्यन्तरं गमयति । यथा वध्यघातक(कादि)कार्यकारणादि ॥

भवतु तावदविरुद्धानां नित्यसंबन्धाद्देशान्तरप्राप्त्यादीनां गम्यगमकता, वध्यघातकादीनां तु संबन्धाभावे कथमित्युच्यते गम्यगमकभावः (भावेन) ?

तत्रापि नित्यसंबन्धाददोषः । न ह्यन्यत्रापि प्राप्तिलक्षणः संबन्धोऽभिप्रेयते । सामान्यतो दृष्टा(नु)भावप्रसङ्गात् । न हि चन्द्रतारकादिषु देशान्तरप्राप्तेः प्राप्तिलक्षणसंबन्धः प्रत्यक्षेण गृह्यते । अगृह्यमाणश्चेद्गमकः सर्वं सर्वस्य गमकं स्यात् । न हि किंचित्केनचिदसंबद्धम्, आकाशादीनां सर्वत्र भावात् ॥

तस्माद्गम्यगमकबुद्ध्युत्पत्तिहेतुरेव संबन्धोऽनुमानविषये । तथा च वध्यघातकयोरपि अन्यतर(रा)भावदर्शनेऽन्यतराभावो गम्यत इत्यनुमानमेव । यस्याप्युचिते देशे अभावदर्शनादन्यत्र भावो गम्यते । यथा घातकदर्शनेन वध्याभावोऽनुमीयते । चैत्रस्य जीवतो गृहे अभाव(गृह्यभाव)दर्शने बहिर्भावश्चेति ॥

ननु चाभावार्थापत्ती एते, नानुमाने, (न) लक्षणासङ्गतेः, गवादिवत् ॥

न—यथोक्तलक्षणोपपत्तेः—वध्यघातकयोर्विरोधलक्षणः संबन्धः । यत्र यत्र घातकभावस्तत्र तत्र वध्याभाव एवेत्यविनाभावः । न हि वध्यस्याभावं घातक(का)भावो व्यभिचरति । वध्यस्य वा भावो घातका(क)भावम्, अग्निभावमिव धूमभावः ॥

कथं पुनरवगम्यते घातकभावदर्शनादेव तद्गोचरे वध्यस्याभावबुद्धिरिति ? न पुनः सदुपलम्भकप्रमाणानां घातक इव वध्ये व्यापाराभावादिति ॥

उच्यते—घातकभावे व्यापृ(व्यावृ)तप्रमाणस्यैव वध्याभावबुध्युत्पत्तिः, धूमभावे व्यापृ(वृ)तप्रमाणस्यैवाग्निभावबुध्युत्पत्तिः, तथा घातकविशेष-व्यापृ(वृ)तप्रमाणस्य वध्यविशेषाभावबुध्युत्पत्तिः, धूमविशेषव्यापृ(वृ)तप्रमाणस्यै-वाग्निविशेषबुद्धिरिति ॥

अभावप्रमाणवादिनस्तु सर्वत्र प्रमाणाभावस्याविशिष्टत्वाद्विरोधिविशेष-दर्शनानुविधानं विरोध्यन्तराभावदर्शनस्यानुपपन्नं, लिङ्गविशेषानुविधानमिव लिङ्गिविशेषदर्शनस्य । न हि सदुपलम्भकप्रमाणव्यापाराभावस्य कश्चिद्विशेषः, येन विशेषबुद्धिस्तद्विशेषमनुविधीयते ॥

अथ जिज्ञासिते विशेषे सदुपलम्भकप्रमाणाभावादिति चेत्—तन्न—असतः स्मृतीच्छादिसहभावापेक्षानुपपत्तेः । न ह्यसत् सहायापेक्षया कार्यं निर्वर्तयद्दृष्टं शशविषाणादि । दृष्टमिहेति चेत्—न—विप्रतिपत्तिस्थानत्वे दृष्टान्ताभावात् । तुल्यमिति चेत्—न—घटादेः सतोऽपेक्षादर्शनात् ॥

न चापि निर्व्यापारस्यावस्तुत्वादभावस्य प्रमाणभावो युक्तः । न हि निरस्तव्यापारकं किंचित् कार्यारम्भकं दृश्यते लोके । तस्माद्व्यापाररूपप्रमाण-जनिता प्रमेयाभावबुद्धिः, प्रमेयविषयत्वात् घटादिबुद्धिवत् । तथा च वस्तुत्वात् प्रवृत्तिनिवृत्तिहेतुत्वात् । विपक्षः शशविषाणादिः । तथा अभाव[प्रमा]प्रमाणा(ण) भावजनिता न भवति, यथाऽभिहितहेतुदृष्टान्तदर्शनात् । (नेन) ॥

घातकदर्शनं वध्याभावबुद्धेर्लिङ्गं तद्भावभावित्वादग्न्यादिबुद्धिनिमित्तधूमादि-बुद्धिवत् संशयनिवर्तकत्वाच्च । वध्याभावबुद्धिर्वा लिङ्गजनिता निश्चयरूपत्वादग्नि-बुद्धिवदिति ॥

इह घटो नास्तीति किल नानुमानं लिङ्गलिङ्गिसंबन्धाग्रहणात् । न हि यथाऽग्न्यादिबुद्धेर्धूमादिलिङ्गान्वेषणं तथेह नास्ति घट इत्यत्र लिङ्गान्वेषणमस्ति । प्रागेव लिङ्गान्वेषणात् बुद्ध्युत्पत्तेः ॥

नैष दोषः । इहप्रत्ययाकारस्यैव लिङ्गत्वात् । न हि प्रथममेव लिङ्गबुद्ध्युपजनने सति लिङ्गान्वेषणं भवति । इहेत्याकारोपरञ्जिता बुद्धिर्लिङ्गम् उभुपरञ्जकव्यतिरिक्तघटाद्यभावबुद्धेर्घातकबुद्धिवदेव । विरोधलक्षण एव चात्रापि सम्बन्धः ॥

यत्र पुनरविरुद्धान्युपरञ्जकानि तत्रास्तित्वबुद्धेः । एतेनैवार्थापत्तेरनुमानत्वं व्याख्यातमविनाभावेन संबन्धेन । तत्रापि जीवतो हि देवदत्तस्य गृहाभावे बहिर्भावः, यदा गृहे भावः न तदा बहिर्भाव इत्यन्यतरेणानुमानम् । साक्षात् दृश्यमानबहिर्भावाभ्यन्तराभावत्वं दृष्टान्तः । वृत्त्युपरञ्जकानुपरञ्जकत्वेन ह्यभावग्रहण-स्याभिहितो हेतुः ॥

अग्न्यादावपि दहनादिशक्तिग्रहणमनुमानमेव । कार्यनिर्वर्तकयोरविना-भावसंबन्धस्यात्मनि दृष्टत्वाद्भुज्यादौ । दृश्यते हि प्रत्यगात्मनि शक्तोऽहमिदं कार्यं कर्तुमशक्तोऽहमित्यात्मवदात्मविशेषणस्य शक्तेर्ग्रहणम् । शक्तिनिर्वर्त्यमेव दहनादि-कार्यमपीत्यनुमानसिद्धिः ॥

ननु चाभावस्य प्रत्यक्षतामुपगायन्ति केचित् । यथा किलादर्शकेन प्रदीपादिना सति गृह्यमाणे वस्तुनि न तदवयविनि यदुपलभ्यते तन्नास्तीत्येवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयति । तथा चोदाहरन्ति—अनङ्कितं वास आनयेत्युक्तः प्रविश्य भाण्डागारम् अङ्कितानङ्कितवाससन्निधावङ्कितवासो-ग्रहणेनैव प्रत्यक्षेणाङ्काभावविशिष्टं वास उपलभ्यानयति । तस्मात् प्रत्यक्ष एवाभावो लक्षणान्तरानुपपत्तेरिति ॥

तन्न—बुद्ध्याकारेणार्थावधारणानृतत्वप्रसङ्गात् । यदाकारा हि बुद्धिस्तस्य प्रत्यक्षावध्रियमाणात्मताभ्युपगम्यते । यथा नीलं वस्तु पीतमित्यत्रापि विशेषण-विशेष्यसंबन्धप्रत्ययो मिथ्या प्राप्नोति । तद्यथेह घटो नास्तीति इहप्रदेशस्य घटाभावेनासति संबन्धे संबन्धप्रत्ययः ; न हि घटाभावस्येहप्रदेशस्य चा[प्राप्त]-प्राप्तिलक्षणः समवायाभिधानो वा संबन्धस्तैरभ्युपेयते । यथेह देवदत्त इति । तस्मादभाव(वे)प्रत्ययव(या)न्नीलं वस्त्विति विशेषणविशेष्यसंबन्धप्रत्ययोऽपि संबन्धप्रत्ययत्वान्मिथ्या प्रसज्येत ॥

[ भाष्यम् ]

विन्ध्यश्चाप्रा[1]प्तेरगतिः ॥

[ विवरणम् ]

यथा चासत्यपीहदेशघटाभावसंबन्धे सबन्धप्रतीतिस्तथैवानीलेऽपि वस्तुन्यसत्येव नीलत्वसंबन्धे नीलत्वसंबन्धप्रत्ययः प्राप्नोति, तथा संबन्धिष्वपि । अथास्त्येव संबन्धः, द्विष्ठता विरुध्येत संबन्धस्य । अभावस्यावस्तुत्वाभ्युपगमात् ॥

अथाप्येकशतं षष्ठयर्था इति यावत् षष्ठयर्थाः संबन्ध इष्येत, तदा द्विविध एव संबन्धः समवायाख्यः संयोगाख्यश्चेति न युज्यते ॥

अथै(तथै)कशतस्यापि षष्ठयर्थानामुभयान्तःपातित्वमुच्येत—न—अभावेऽन्यतरस्याप्यसम्भवात् ॥

किञ्चा(न्त्र)न्यत् । इह नभसि कुसुमं नास्तीति संबन्धिनो नभसोऽप्यप्रत्यक्षत्वात् गगनकुसुमाभावस्याप्रत्यक्षत्वं प्राप्नोति । अथाप्रत्यक्षत्वमेवेति चेदापतितं गगनकुसुमाभाववदप्रत्यक्षत्वमिह भूप्रदेशे घटाभावस्यापि । विशेषो वक्तव्यः ॥

अथ व्योम्नोऽप्रत्यक्षत्वादिति—तन्न—पुष्पस्य पततो नभस्यस्तित्वदर्शनाद्व्योमाप्रत्यक्षत्वमहेतुः । यथैव निपतत्कुसुमसद्भावे व्योमाप्रत्यक्षत्वमहेतुस्तथा सद्भावविरुद्धग्रहणेऽप्यहेतुः स्यात् । अथाकाशाप्रत्यक्षत्वादेवेति चेत्, असंबन्धमपि यत्किंचिद्व्यवहिताप्रत्यक्षत्वादि सोऽपि हेतुः स्यात् । अथ नभःकुसुमाभावः प्रत्यक्ष इति चेत्—इन्द्रियार्थसन्निकर्षानर्थक्यं सर्वत्र प्रसज्येत । तथा च सत्यसन्निकृष्टोपलब्धेः सर्वेषां सर्वज्ञत्वं प्रसक्तम् ॥

अथानुमेयं तत्रेति चेत्—नभःकुसुमाभाववदिह घटाभावस्याविशेषादानुमानिकत्व(कीय)मेव सिद्धम् । एवं च सत्यभावप्रमाणवादिनोऽपि व्यवहितविप्रकृष्टोदकादावनलाद्यभावस्यानुमेयत्वादिह घटाभावोऽपि तत्सामान्यादनुमानग्राह्य एवेति निश्चेतुं युक्तम् ॥

विन्ध्यश्चाप्राप्तेरगतिरिति च प्रयोगान्तरम् । अगतिर्विन्ध्य इति प्रतिज्ञानम् । अप्राप्तेरिति हेतुः । चैत्रवदिति काकलोचनवदुभयत्र संबध्यते । गतिमच्चन्द्रतारकमित्यनेन साधर्म्येण, विन्ध्यश्चाप्राप्तेरित्यनेन वैधर्म्येण संबन्धः । एवं च सत्यन्वयव्यतिरेका(क)दर्शनकृतो न दोषः ॥

---

1. अप्राप्तिरिति वाचस्पत्यभिमतः पाठः ।

[ भाष्यम् ]

आप्तेन दृष्टोऽनुमितो वाऽर्थः परत्र स्वबोधसंक्रान्तये शब्देनोपदिश्यते, शब्दात्तदर्थविषया वृत्तिः श्रोतुरागमः ।

यस्याश्रद्धेयार्थो वक्ता न दृष्टानुमितार्थः स आगमः प्लवते । मूलवक्तरि तु दृष्टानुमितार्थे निर्विप्लवः स्यात् ॥ ६ - ७ ॥

[ विवरणम् ]

अथवैतस्मिन् प्रयोगे व्यतिरेकविपर्ययदर्शनेन दोषाभाव इत्युपन्यस्तम् । लक्षणस्य च लक्ष्यविशेषेणोह्यत्वाददोषः ॥

आप्तः परानुजिघृक्षाप्रयुक्तो दोषरहितो दृष्टानुमितार्थः । तेन दृष्टो वा अनुमितो वार्थः परत्र श्रोतृविशेषे स्वबोधसङ्क्रान्तये स्वाधिगमसंक्रमणाय शब्देन शब्द इति वाक्यं ततो विशिष्टार्थप्रतिपत्तेः । तस्मात्तदुपदिष्टाद्वाक्यात् । [तदर्थविषया] वाक्यार्थविषया या चित्तवृत्तिः सा अनुमानवदेव सामान्यावधारणप्रधाना ॥

इत्थमाप्त्यादिधर्मग्रहणपूर्विका श्रोतुरागमः, न वक्तुः । दृष्टानुमितार्थो हि वक्ता, तस्य लैङ्गिकमैन्द्रियकं वा तज्ज्ञानम् । श्रोतुरेव तु श्रवणपूर्वकं निश्चितं विज्ञानं लैङ्गिकैन्द्रियकव्यतिरिक्तम् । स आगमः [न] प्रत्यक्षमिन्द्रिया[विषय]-विषयत्वात् यथाभिहितलिङ्गलिङ्गिसंबन्धनिरपेक्षत्वाच्च नानुमानम् । न हि स्वर्गापूर्वदेवनादिशब्दा(ब्दोऽ)र्थान्वितं ज्ञानमासादितलिङ्गलिङ्गिसंबन्धपुरस्सरमुपजायते । फलं तु सर्वत्र पौरुषेयो वृत्तिबोध एव ॥

यस्य आगमस्य वक्ता आगमाख्यवृत्त्युत्पत्तिनिमित्ते शब्दोच्चारणात् आगमस्य प्रयोगोपन्यासेन प्रतिपादितं फलं तु पूर्ववदेव । यद्यप्येक एव प्रयोगस्त(था)-दापि साध्यसाधनाभावमात्रस्य विवक्षितत्वान्न विपरीतव्यतिरेकदर्शनादित्युच्यते ॥

अश्रद्धेयार्थवक्त्रभिहितत्वेनागम एव विशेष्यते । कथमसावश्रद्धेयार्थो वक्तेत्यत आह—न दृष्टोऽनुमितो वार्थः तेन वक्त्रा । शिष्टलोकप्रसिद्धान्यथाप्रतिपादनात् बुद्धार्हतादिः । न हि रागादिदोषानुपहतान्तःकरणः प्रसिद्धमन्यथा निर्वर्णयति । स आगमः प्लवते आभासीभवति ॥

यद्यपि प्रत्यक्षानुमानविषयाभासदर्शनं स्वशब्देन न कृतं, तथाप्यागमाभासोपप्रदर्शनेनैव पूर्वत्रापि यथाभिहितलक्षणविपरीतत्वेन प्रत्यक्षानुमानाभासादि द्रष्टव्यमर्थादुक्तम ॥

मूलवक्तरि तु आद्यवक्तरीश्वरे तन्निमित्तो य आगमः स विप्लवनिमित्ताभावान्निर्विप्लवः स्यात् । यथार्थ(य)वक्तृवत् ॥

उपमानं (मानं) शब्दपूर्वकम् । तदागमान्तःपातित्वान्न प्रमाणान्तरम् । यथा गौरिव गवय इति वनेचराभिहितादेव वाक्यादवधृतसादृश्यस्य पुनर्वने गवयदर्शनेऽपि पूर्वश्रुतवाक्योपस्थापितसादृश्यस्मरणमात्रमेव नाधिकम् । सादृश्यं तु वाक्यादेव पूर्वप्रतिपन्नम् ॥

नापि संज्ञासंज्ञिसंबन्धप्रतिपत्तित एव मानं, तस्या अपि तद्वाक्यादेवावगतत्वात् । न हि गौरित्येतावतानवगतगवयनामकस्य वनगतगवयदर्शिनोऽपि गवयोऽयमिति संज्ञासंज्ञिसंबन्धावबोधो भवति ॥

तस्माद्गौरिव गवय इति गवयशब्दोऽपि तद्वाक्येऽपेक्षितव्यः । तथा च सति पूर्वश्रुतादेव वाक्यात् सर्वं प्रतीतम् । अथापि स्यादयं(दस्य)गवय इति न पूर्वबुद्धिविषयमिति—तदपि तत्रभवतामपि परिचोदनपरिहारमव[प]श्यतामपि पीडितैकवले[कौले]यकवृत्तिकोणेऽवस्थानमिव लक्ष्यते ॥

तथा हि—देशकालसन्निकर्षविप्रकर्षादिभेदेनानेकोपमानभेदः प्रसज्येत । तथास्त्विति चेत्—तत्पूर्वधियैवातत्वमन्तर्निहितसमस्तविशेषमेव हि वा नेयौ पूर्वमुपपादितम् । न हि गौरित्युक्ते देशकालादिविशेषाभावे न गोशब्दादर्थप्रतिपत्तिः॥

किं चान्यत्—न हि संज्ञासंज्ञिसंबन्धप्रतिपत्तिरुपमानं, येन ह्युपमीयते तदुपमानं, सादृश्यज्ञानं हि तत् । न हि नामिनामसंबन्धप्रतिपत्त्या किंचिदुपमीयते उत्तरकालत्वात् । अवधृतसादृश्यस्य हि पश्चाद(स्य)यं गवय इत्येवं सोऽपि निपतति ॥

एवं तर्हि स्यादशब्दपूर्वकं प्रमाणान्तरं, यथा गवयदर्शनादेतत्सदृशो गौरिति ग्रामीणस्य बुद्धिः—तदपि न—प्रमेयाभावात् । सति हि प्रमेये सदुपलम्भकत्वाभिमतस्य प्रमाणस्य व्यापारः, न हि गोगवययोर्व्यावृत्तमनुवृत्तं च वस्तुतः सादृश्यं नामैकमस्ति ॥

ननु च सादृश्यबुद्धिरस्त्येव, नासौ निरालम्बना भवितुमर्हति । सत्यमेवं तत्रैव विचारणा—किमसौ वनयूथादिप्रत्ययवत् ? अथ घटादिबुद्धिवदिति। किं चातः ? यदि वनप्रत्ययवद्भवेत्तदा यथैव विशिष्टसन्निवेशानुगता महीरुहा एवात्मव्यतिरेकेणाविद्यमानवनप्रत्ययहेतवस्तथैव गोगवयावयवा एव द्वयदर्शनस्मृत्यपेक्षया स्वात्मव्यतिरेकेणासतः सादृश्यस्य प्रतीतौ कारणमिति प्राप्तमवस्तुत्वम् ॥

अथ पुनर्घटादिप्रत्ययवद्वस्तुत्वं प्रमाणत्वं च, तदा स्यादिति ॥

तत्र कीदृशं वस्त्विति विचार्यते—

किं गोगवययोरनुवृत्तमेकं सादृश्यं गोत्वगवयत्वाभ्यामन्यत् ? ते एव वान्योन्यविशिष्टे, यदि वा ताभ्यां भिन्ने गोगवयाधारे द्वे सादृश्ये परस्परानपेक्षे, सापेक्षे वा ?

किं व्यक्तिरेव साऽन्यतरजातिविशिष्टा वा, किं जातिः, सा चान्यतरव्यक्तिविशिष्टा, व्यक्तिद्वयविशिष्टा वा, संबन्धो वैतेषां यथाविकल्पयोगमित्येकैकान्योन्यविशिष्टविशेषणत्वादिना भूयांसोऽन्येऽपि विकल्पा उद्भावयितव्याः। तत्र यद्येकं सादृश्यमुभयगतं, तदा नोपमेयत्वमेकत्वात्, यथा गौरिव गौरिति ॥

अथ तेनान्यतरव्यक्तिरुपमीयेत—नैतदपि—स्वात्मगतत्वात् गौरिव गोत्वेन । अथ तद्वत्या व्यक्त्या व्यक्त्यन्तरमुपमीयेत—नैतदपि— न हि गोत्वं खण्डमुण्डोपमेयत्वकारणम् । अथ धर्मान्तरापेक्षया सादृश्यं तद्बुद्धेः कारणमिति, नष्टं तर्हि सादृश्यं, स एवास्तु धर्मः तद्बुद्धेः किं ते सादृश्यहतकेन कल्पितेन ॥

किं च—स चाप्यपेक्ष्यमाणो धर्मः किमेकः सादृश्यवदुभयत्र, अथ भिन्न इत्येवमादिविकल्पाः स्युरित्यसम्भवः पूर्ववदेव । अथ भिन्नं सादृश्यमुच्येत—तच्च न—भेदादेव, न हि भवति गौरिवाश्व इति । यथैवैकैकत्वादघटमानता तथा बहुभिरपेक्ष्यमाणैः। एतेन जातिव्यक्तिसम्बन्धादयः पूर्वविकल्पिताः प्रत्युक्ताः ॥

अथ बुद्ध्युत्पत्त्यन्यथानुपपत्त्या सादृश्यकल्पना, सत्येवं वनविवरपूर्वदक्षिणोत्तरादिबुद्धियोगान्यथानुभवात् [न्यथानुपपत्त्या] वस्तुत्वं किं न कल्प्यते । स्यादेषा तव बुद्धिर्वृक्षादय एव तत्र तद्बुद्धिजन्महेतव इति । यद्येवं मिथ्याप्रत्ययो गवयेन सदृशी गौरिति वनबुद्धिवत् । अथ ये व्यावृत्ताः क इहोपमार्थः गौरिवाश्व इति । अथोभयेऽपि तेऽवयवा व्यावृत्तानुवृत्तात्मानस्तद्बुद्धिहेतवः, तथापि वनप्रत्ययवदेव प्राप्तम् ॥

तस्मात् परीक्ष्यमाणं नातिविमर्दनक्षममिति त एवावयवा उभयत्रोपलभ्यमाना भूयांसः सादृश्यबुद्धेः कारणं वनबुद्धेरिव पादपाः [इति] नोपमानं नाम प्रमाणान्तरमिति सिद्धम् ॥

नापि प्रमेयद्वित्वात् प्रमाणद्वित्वकल्पनम् । कुतः ? प्रमाणवशादर्थप्रतीतेः । न ह्यर्थवशात् प्रमाणकल्पना । यदि चार्थवशात् प्रमाणकल्पना स्यात्, अधुना

[ सूत्रम् ]

## विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥

[ विवरणम् ]

तन्न शक्यं जनानामसर्वज्ञत्वात् । चैत्यवन्दनात् स्वर्गो भवतीत्यत्र चैत्यवन्दनस्य स्वर्गहेतुत्वबुद्धेः प्रत्यक्षानुमानाविषयत्वान्मिथ्यात्वं स्यात् । तदर्थं वा प्रमाणान्तर-कल्पनम् ॥

अथ सा बुद्धिरनुमानफलमिति चेत्—प्रमाणादन्यत्र फलप्रसङ्गः, एवं शा(क)रणत्रयादिवाक्यार्थविषयबुद्धिरपीति ॥

नापि चात्र प्रमाणलक्षणनिरूपणतात्पर्यं, प्रसिद्धप्रमाणादिवृत्तिनिरोधाभ्यु-पायाभिप्रदर्शनपरत्वात् । अत एव न सूत्रकारः सूत्रयाञ्चकार । भाष्यकारेण तु किञ्चित्प्रसिद्धानुवादमात्रमवलम्बितमिति तदनुसरणेन किमपि जल्पितमिति ॥ ६ - ७ ॥

प्रमाणाख्यां वृत्तिं व्याख्याय विपर्ययाभिधानां वृत्तिमिदानीमुपव्याचि-ख्यासमान आह—विपर्ययो मिथ्याज्ञानमिति ॥

ननु निरोधस्य प्रकृतत्वात्तस्य च हानत्वाद्धानस्य च हेयापेक्षत्वाद्धे-यस्य चाविद्यामूलत्वादविद्या च विपर्यय इति स एव प्राधान्येन निरोद्धव्यः । तत्प्रभवत्वाद्धेयस्य । कारणनिरोधे हि कार्यमर्थादेव निरुद्धं स्यात् । तस्माद्विपर्ययः प्राधान्यात् प्रमाणात् पूर्वं व्याख्यातव्य. ॥

सत्यमेवमस्त्येव प्राथम्यं विपर्ययस्य निरोधनीयतया, तथापि गुणदोष-ज्ञानापेक्षत्वान्निरोधं प्रति पुरुषप्रवृत्तेः । प्रमाणमेव हि गुणदोषज्ञानम् । न ह्यप्रमाणेन विपर्ययस्य दुष्टत्वं गम्यते, निरोधतत्फलसाधनानि वा ज्ञायन्ते । तस्मात् प्रमाणवृत्तेरेव प्राथम्यं युक्तम् । ज्ञायेते च गुणदोषौ प्रमाणेनेति तदनन्तरं विपर्ययाभिधानम् । वृत्त्यन्तरापेक्षया तु विपर्ययस्य प्राथम्यम् । तन्मूलत्वाच्च वृत्त्यन्तराणां तन्निरोधपूर्वमे-मेवान्यनिरोधोपपत्तेः ॥

विपर्ययो मिथ्याज्ञानमिति पर्यायकथनम् । अतद्रूपप्रतिष्ठमिति लक्षणोक्तिः । तस्य रूपं तद्रूपं न तद्रूपमतद्रूपं, यदाभासं विज्ञानं तस्य विज्ञानस्य च सा प्रतिष्ठा आलम्बनम् । अगृहीतविशेषस्य सामान्यमात्र-बुद्धिरुपलब्धपूर्वान्यवस्तुस्मृत्युपसंहिता निश्चयाकारेणोपसंहिता निश्चयाकारेणो-पजायमाना विपर्ययः ॥

[ भाष्यम् ]

स कस्मान्न प्रमाणम् । यतः प्रमाणेन बाध्यते । भूतार्थविषयत्वात् प्रमाणस्य । तत्र प्रमाणेन बाधनमप्रमाणस्य दृष्टम् । तद्यथा--द्विचन्द्रदर्शनं सद्विषयेणैकचन्द्रदर्शनेन बाध्यत इति ।

[ विवरणम् ]

संशयो ह्युभयोरिदं सामान्यमित्येवं गृहीतसामान्यस्य विशेषमेव बुभुत्समानस्य जायत इति स्मृतावेवान्तर्भवति । यथा स्थाणुः किं वा पुरुष इति गृहीतपूर्वस्यैव विशेषस्य स्मरतः संशयो जायते, न तथा विपर्ययः । अन्यतरस्मरणमात्रेणैवावसितत्वात् । तद्यथा—स्थाणौ पुरस्तादवस्थिते परिणाहारोहणादिसामान्यमात्रोपलम्भेन समुपजातपुरुषस्मरणस्य पुरुष एवायमिति निश्चिता बुद्धिरुत्पद्यते ॥

सा यद्यपीन्द्रियमार्गेणोपलभ्यमानवस्तुसामान्यप्रधाना, तथापि स्मर्यमाणातद्वस्तुप्रतिष्ठत्वान्न प्रमाणम् । स्मृत्यवसाना हि सा, यतः प्रमाणेन प्रबाध्यते अ(आ)भूतार्थ(र्थादि)विषयत्वात् । (इत्यतः प्रतिष्ठत्वादित्येतत्) अभूतो हि स्मर्यमाणोऽर्थस्तदा । यद्येवं स्मृतिरेव प्राप्नोति–न–विशिष्टत्वात् । उपलभ्यमानं वस्तु निमित्तीकृत्यान्यत्र स्मृतिर्जायते यथानुभूतवस्तुविषया । न विपर्ययस्तथा । सन्निहितसामान्यमात्रे देशकालादिविशेषानुगते वस्तुनि स्मरणपर्यवसानत्वे सत्यप्ययमिति विशेषरूपेण विपर्ययप्रत्ययो जायते । तस्मादेवं न प्रमाणधर्मो नापि स्मृतिधर्म इति वृत्त्यन्तरत्वम् ॥

तत्राप्रमाणस्य प्रमाणेन बाधसंदर्शनार्थमुदाहरणं दर्शयति—**तद्यथा द्विचन्द्रदर्शनमिति** ॥ यथा काचकामलाद्युपहतदर्शनस्याभूतार्थविषयत्वाद्धि द्विचन्द्रदर्शनस्य **सद्विषयेण** भूतार्थविषयेण **एकचन्द्रदर्शनेन** द्वितीयचन्द्राभावोपपत्तिज्ञानस्मृत्यनुगृहीतेन बाधनम् ॥

ननु च द्विचन्द्रमिति द्विपूली पञ्चपूलीतिवत् द्विगुसमासत्वात् 'द्विगुरेकवचनम्[1]' इति प्रतिलब्धे तद्भावात् 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति द्विगोरकारान्तात् (इति) द्विचन्द्रशब्दादीकारः प्राप्नोति–नैष दोषः–पात्रादिप्रतिषेधात् । तत्र चादिशब्दस्य प्रकारवचनत्वात् । प्रकारस्य च शिष्टप्रयोगानुसारित्वात् ,

1. पाणि. सू. 2. 4. 1.

[ भाष्यम् ]

सेयं पञ्चपर्वा भवत्यविद्या, अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशा इति। एत एव स्वसंज्ञाभिः तमो मोहो महामोहस्तामिस्रोऽन्धतामिस्र इति। एते चित्तमलप्रसङ्गेनाभिधास्यन्ते ॥ ८ ॥

[ सूत्रम् ]

**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ ९ ॥**

[ भाष्यम् ]

स न प्रमाणोपारोही,

[ विवरणम् ]

द्विचन्द्रोऽपि पात्रादिषु द्रष्टव्यः। द्वौ चन्द्रौ यस्मिन् दर्शन इति बहुव्रीहिः। एकचन्द्रशब्दस्य अद्विगुत्वादेव चोद्याभावः। सा च पञ्चपर्वा अविद्या; सा विपर्ययवृत्तिरविद्या पञ्च पर्वाणि अस्या इति ॥

कानि पुनस्तानीत्याह—अविद्यास्मितेत्यादि। एत एव अविद्यादयः क्लेशाः स्वसंज्ञाभिः स्वाभिः शास्त्रान्तरप्रसिद्धाभिस्तमआदिसंज्ञाभिः विशिष्टाः चित्तमलप्रसङ्गेनाभिधायिष्यन्ते द्वितीयपादे ॥ ८ ॥

इदानीं विकल्पं दर्शयति—शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः ॥ शब्दस्य ज्ञानं शब्दज्ञानम्, वाच्यवाचकनियमेन साध्वसाधुशब्दज्ञानं, तदनुपतितुं शीलमस्येति शब्दज्ञानानुपाती। वस्तुशून्य इति ॥ यथावाच्यार्थशून्यः, यस्य शब्दस्य ज्ञानमनुपतति तस्य शब्दस्य यथाभूताभिधेयेन शून्य इति यावत्। यथाभूतार्थव्यतिरेकेण हि विकल्पनं विकल्पः ॥

तस्य हि शब्दज्ञानानुपातित्वादागमान्तःपातित्वं प्राप्तम्, अत आह— स न प्रमाणोपारोहीति ॥ न प्रमाणान्तःपाती वस्तुशून्यत्वात्। न ह्यागमस्य शब्दज्ञानानुपातित्वेऽपि वस्तुशून्यता। यतः शब्दार्थविषया वृत्तिरागमः, विकल्पस्तु वस्तुशून्यत्वान्न प्रमाणम् ॥

किञ्च–वक्तृश्रोत्रोश्च तुल्यो विकल्पः। द्वयोरपि शब्दादुच्चरिताद्विकल्प्यैव हि बुद्धिर्जायते। न तथा आगमे। श्रोतुरेव ह्यागमः। वक्ता तु दृष्टानुमितार्थः ॥

किञ्च–निर्वितर्कसमापन्नस्य विकल्पो निवर्तते नागमः। तस्मान्न प्रमाणोपारोही ॥

[ भाष्यम् ]

न विपर्ययोपारोही च। वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते। तद्यथा--"चैतन्यं पुरुषस्य स्वरूपम्" इति। यदा चितिरेव पुरुषः तदा किमत्र केन व्यपदिश्यते? भवति च व्यपदेशे वृत्तिः, यथा —"चैत्रस्य गौः" इति।

[ विवरणम् ]

यद्येवं वस्तुशून्यत्वाद्विपर्ययान्तःपातित्वं प्राप्तम्, अत आह—**न विपर्ययोपारोहीति** ॥ कुतः? शब्दज्ञानानुपातित्वात्। न हि वस्तुशून्यत्वेऽपि विपर्ययः शब्दज्ञानमपेक्षते। यतः "[1]विपर्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्" इत्युक्तम्। प्रमाणपरिच्छेद्यप्रत्ययं प्रत्यतिगुणभूतत्वाच्च विकल्पस्य। न हि यथा सर्वेषां विपर्ययो विरोधाद्बाध्यते, तथा विकल्पः। प्रमाणप्रत्ययगुणभावादेव ॥

तस्माद्वस्तुशून्यत्वग्रहणेन शब्दज्ञानानुपातित्वग्रहणेन च परस्परसंबन्धेन प्रमाणविपर्ययाभ्यां प्रमाणविपर्ययगन्धमात्रानुलिप्तमपि भिन्नं विकल्पाख्यं वृत्त्यन्तरं दर्शितम। तद्गन्धानुलेपनादेव तदानन्तर्येण विकल्पस्यारम्भः। नापि स्मृतित्वम। स्मृतेः केवलानुभूतास्पदत्वात् ॥

अथ न त्वीदृशी चित्तवृत्तिः प्रसिद्धा। न हि स्वभावं किंचिद्वृत्तिनिमित्तमिति चेदाह—**वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्य[मात्र]निबन्धनो व्यवहारो दृश्यते** इति। मात्रग्रहणं शब्दज्ञानव्यतिरिक्तकारणाभावख्यापनार्थम्। **क्व दृश्यत** इति चेदाह—**तद्यथा चैतन्यं पुरुषस्य स्वरूपमिति**। चितिशक्तिरपरिणामिनीत्युक्तत्वाच्चैतन्यमेव पुरुषः, तदेव च स्वरूपमिति व्यतिरेकाभावाद्व्यतिरेकोपनिबन्धनो व्यपदेशो न स्यात्—'पुरुषस्य चैतन्यम्' इति। तथा चेममेवार्थमुपाश्रित्य शब्दविदा वार्तिककारेणोक्तम्—"सिद्धं तु व्यपदेशिवद्भावात्" इति। तथैवेहापि यथा सति व्यतिरेके **चैत्रस्य गौरिति** तद्वदेव **चैतन्यं पुरुषस्येति**। न हि यथा गोरन्यश्चैत्रो व्यपदेशहेतुः, तथा चितेरर्थान्तरं पुरुषोऽस्ति, येन व्यपदिश्येत। नापि चितिः पुरुषादर्थान्तरं व्यपदिश्येत। तथाऽपि व्यतिरेकसंबन्धविषये भवति "चैतन्यं पुरुषस्य स्वरूपम्" इति **व्यपदेशे वृत्तिः** ॥

---

1. पा. 1. सू. 8.

[ भाष्यम् ]

तथा, प्रतिषिद्धवस्तुधर्मो[र्मा]निष्क्रियः पुरुषः, तिष्ठति बाणः स्थास्यति स्थित इति, गतिनिवृत्तौ धात्वर्थमात्रं गम्यते । तथा, अनुत्पत्तिधर्मा पुरुष इति, उत्पत्तिधर्मस्याभावमात्रमवगम्यते, न पुरुषान्वयी धर्मः। तस्मात् विकल्पितः स धर्मः, तेन चास्ति व्यवहार इति ॥ ९ ॥

[ विवरणम् ]

प्रतिषिद्धवस्तुधर्मेति । वस्तुनो धर्मो वस्तुधर्मः । प्रतिषिद्धो वस्तुधर्मोऽस्येति प्रतिषिद्धवस्तुधर्मा । "[1]धर्मादनिच् केवलात्" इति वचनात् समासान्तश्चिन्त्यसमाधिः । वस्तुशब्देन सत्त्वादिगुणा उच्यन्ते, तेषां धर्माः प्रतिषिद्धा अस्येति ॥

न हि प्रतिषिद्धाः सत्त्वादिधर्माः प्रतिषिद्धत्वादेवास्य पुरुषस्य संबन्धिनो भवन्ति । येन ते पुरुषेण अस्येति व्यपदिश्येरन् । तदभावमात्रमेव तु तत्रार्थः । तथापि यथा चित्रा गावोऽस्येति व्यपदेशे बुद्धिः तथा प्रतिषिद्धा वस्तुधर्मा अस्येति व्यपदेशे बुद्धिः ॥

निर्गता क्रिया अस्मादित्यत्रापि निर्गतिरपायः । अपायश्च सम्बन्धपूर्वः । यथा चैत्रान्निर्गता क्रिया । न चैवं पुरुषे क्रियाया असम्भवान्निर्गतिः पुरुषात सम्भवति । तथाऽपि 'निष्क्रियः पुरुष' इति व्यपदेशे भवति वृत्तिः ॥

तथाऽनुत्पत्तिधर्मा पुरुष इति ॥ न विद्यते उत्पत्तिधर्मोऽस्येति पूर्ववदेव । अत्र स्वयमेवार्थमाचष्टे भाष्यकारः—उत्पत्तिधर्मस्याभाव(ज्ञान)मात्रमव(मत्र)गम्यते । यथा निर्गुणो निरञ्जनो निष्कल इत्येवमादीन्यप्युदाहरणानि । आत्मविषयानेकोदाहरणप्रदर्शनमात्मतत्त्वनिर्धारणार्थत्वात् ॥

तिष्ठति बाण इति लोकप्रसिद्धोदाहरणप्रतिपादनमप्रसिद्धयाशङ्कानिवृत्त्यर्थम् । तिष्ठतीति गतिनिवृत्तिर्गत्यभावः । न चाभावस्य कालत्रययोगो भवति । नापि बाणस्य क्रियानिरपेक्षस्य द्रव्यस्य । नापि चाभावेन गतिनिवृत्त्या बाणस्य वस्तुनः संबन्धः । तिष्ठति बाणः [स्थास्यति स्थितः] इत्येवं त्रीण्युदाहरणानि ॥

---

1. व्याकरणसूत्रं अ. 5. पा. 4. सू. 124.

[ सूत्रम् ]

**अभावप्रत्ययालम्बना वृत्तिर्निद्रा १० ॥**

[ भाष्यम् ]

सा च सम्प्रबोधे प्रत्यवमर्शात् प्रत्ययविशेषः । कथम्? "सुखमहमस्वाप्सम्, प्रसन्नं मे मनः प्रज्ञां मे विशारदीकरोति" "दुःखमहमस्वाप्सम्, स्त्यानं मे मनो भ्रमत्यनवस्थितम्" "गाढमूढोऽहमस्वाप्सम्, गुरुगुरूणि मे गात्राणि, क्लान्तं मे चित्तम् अलसं मुषितमिव तिष्ठति" इति । स खल्वयं प्रबुद्धस्य प्रत्यवमर्शो न स्यादसति प्रत्ययानुभवे । तदाश्रिताः स्मृतयश्च तद्विषया न स्युः । तस्मात् प्रत्ययविशेषो निद्रा । सा च समाधावितरप्रत्ययवन्निरोद्धव्या इति ॥ १० ॥

[ विवरणम् ]

गतिनिवृत्तौ धात्वर्थ इति ॥ ननु गतिनिवृत्तिरेव धात्वर्थः, तत्र कथं गतिनिवृत्ताविल्याधारः ? अत एवोदाहरणान्तरमेतत् । असति व्यतिरेके आधाराधेयभावस्याभावात् । अस्ति च गतिनिवृत्तौ धात्वर्थ इति व्यपदेशे शब्दसामर्थ्यसमुत्थापिता बुद्धिराधाराधेय[भाव]संबन्धावलम्बिनी । तस्मादित्थंजातीयं विकल्पविषयमनेकमुदाहरणं द्रष्टव्यम् ॥ ९ ॥

निद्राख्यां वृत्तिमिदानीमाचष्टे—अभावप्रत्ययालम्बना वृत्तिर्निद्रा । जाग्रद्विषयत्वात् प्रागुक्तस्य वृत्तित्रयस्य तदुपमर्देन च निद्रासमुद्भव इति, तदनन्तरं निद्राख्या वृत्तिर्व्याख्यायते ॥

अभाव इति जाग्रद्विषयाभावः, न त्वत्यन्ताभाव एव । तत्र प्रत्ययानुपपत्तेः । अभावे प्रत्ययः अभावप्रत्ययः । स एव आलम्बनं यस्याः सा वृत्तिरभावप्रत्ययालम्बना । सा निद्रा सुषुप्तावस्था ॥

ननु च स्वप्नावस्थाऽपि निद्रैव—नैष दोषः—"स्वप्ननिद्राज्ञानालम्बनं वा[1]" इति सूत्रकारेण भेदेनोपदिष्टत्वादिह सुषुप्तावस्थैव निद्राऽभिप्रेता ॥

किंच—अभावप्रत्ययालम्बनत्वाच्च सुषुप्तमेव । न हि स्वप्नस्याभावप्रत्ययालम्बनता, स्मृतित्वात् । स्मृतेश्चानुभूतविषयत्वात् । तथा भाष्यकारः—"[2]स्वप्ने भावितस्मर्तव्या" इति स्मृतित्वं दर्शयति ॥

---

1. पा. 1. सू. 38.
2. पा. 1. सू. 11

[ सूत्रम् ]

## अनुभूतविषयासम्प्रमोषः स्मृतिः ॥ ११ ॥

[ विवरणम् ]

किञ्च—स्वप्नस्य चित्तवृत्तिता स्वसंवेद्येति नाशङ्कैवोपपद्यते । तथा च चित्तवृत्तितामाशङ्क्याह—सा तु[च सं]प्रबोधे प्रत्यवमर्शादित्यादि । तस्मात् प्रत्ययविशेषो निद्रा । न ह्यसति प्रत्ययविशेषे परामर्शो युक्तः । अस्ति चायं प्रबुद्धस्य प्रत्यवमर्शः 'सुखमहमस्वाप्सम्' इत्यादिः । प्रत्यवमर्शो नाम किमप्यन्वभूवमिति प्रत्ययालोचना । नानुभवाभावे सा भवेत् । नापि तद्विषयाः स्मृतयो युक्ताः । निद्राया अप्रत्ययत्वे—प्रज्ञां विशारदीकरोति मनः, मनसः कर्तृत्वं, स्त्यानं स्तिमितम् अकर्मण्यम्, गुरुगुरूणीति "प्रकारे [1]गुणवचनस्य" इति द्विर्वचनं गुरुप्रकाराणि, अलसं मुषितमिव मल्लेनापहृतमिव, एतानि प्रत्ययानुभवकार्याणि न स्युः । काश्चन स्मृतयः कानिचित् कार्याणि केचन प्रत्यवमर्शाः । तदेतत्त्रयमपि भाष्यकारोपन्यस्तं प्रत्ययविशेषत्व एवोपपद्यते ॥

किञ्च—गर्भगृहादिषु चादृष्टबाह्यनिमित्तानामसति विशेषे चिरमहं सुप्तवान् क्षिप्रमिति च परामर्शोऽन्यथा न युज्यते ॥

ननु च नात्र स्मृतयः, स्मृतीनाम् अन्वभवमित्येवंविशिष्टत्वात् । न हि सुषुप्तादुत्थितो विशेषं स्मरति—अत्रोच्यते—बालस्येह जन्मन्यननुभूतस्तन्यसंबन्धस्य जन्मानन्तरमेव तस्याभिलाषो दृश्यते । न च[स]स्वाभाविकः । अबालानां स्मृतिपूर्वप्रवृत्तिदर्शनात् । तथेहापि । तस्मात् प्रत्ययपूर्वकः सुषुप्तविषयः प्रत्यवमर्शः, प्रत्यवमर्शत्वात् जाग्रदुपलब्धविषयप्रत्यवमर्शवत् । तथा सुषुप्तोत्थितस्य गात्रगौरवादि कार्यं दुःखाद्यनुभवपूर्वं, गात्रादिविषयगौरवादिकार्यत्वात् प्रसिद्धदुःखानुभवकार्यगात्रगौरववदिति प्रत्ययविशेषो निद्रेति सिद्धम् ॥ १० ॥

स्मृतिमिदानीं व्याचष्टे—अनुभूतविषयासम्प्रमोषः स्मृतिः । स्मृतेः प्रमाणादिसर्ववृत्तिकार्यत्वादन्ते निवेशः । अनुभूतश्चासौ विषयश्च अनुभूतविषयः । योऽसावनुभूतः स एव विषयः, न पुनर्यो विषयः स एवानुभूत इति । तथा च स्मृतेरशब्दादित्वात् स्मृतिविषयायाः स्मृतेरस्मृतित्वं प्राप्नोतीति । इष्यते च स्मृतिविषयाऽपि स्मृतिः स्वसंवेद्यत्वात् । अनुभूतविषयस्यासंप्रमोषोऽनपहरणमतिरोभावः । पारोक्ष्येऽपि सादृश्यादिनिमित्तापेक्षयाऽनुभूतस्य विषयस्य दृश्यमानवदवभासः स्मृतिः ॥

---

1. पाणि. सू. 8. 1. 12.

[ भाष्यम् ]

किं प्रत्ययस्य चित्तं स्मरति, आहोस्वित् विषयस्येति । ग्राह्योपरक्तः प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासः तज्जातीयकं संस्कारमारभते । स संस्कारः स्वव्यञ्जकाञ्जनस्तदाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिं जनयति ॥

[ विवरणम् ]

तत्र प्रत्ययस्मरणयोर्विषयाकारावभासाविशेषात्, किङ्कृतस्तयोर्भेद इति तद्विवेकं प्रदर्शयितुकाम आह—किं प्रत्ययस्य चित्तं स्मरतीत्यादि ॥

यद्यप्यनुभूताननुभूयमानविषयत्वेन विवेकः, तथापि सादृश्यनिमित्तां भ्रान्तिं तयोः कार्यकारणत्वप्रदर्शनाय निवर्तयति । एतदेव च वैनाशिकानां बहिरर्थानुपपत्तेर्बुद्धिकारणम् । किं प्रत्ययस्य स्मरतीति कर्मण्युभयत्र षष्ठी । चित्तं स्मरतीति पुरुषकर्तृत्वं निवारयति स्मृतिप्रत्यययोरेककर्तृत्वप्रदर्शनार्थम् । न हि पुरुषस्य प्रत्ययकर्तृत्वं स्मृतिकर्तृत्वं वा । दृश्यत्वात् प्रत्ययानाम् । दृश्यानां च स्वात्मातिरिक्तदृश्यत्वं घटादिवदिति वक्ष्यामः ॥

किञ्चातः? यदि विषयस्य स्मरति, प्रत्ययस्यापि विषयविषयत्वादनर्थान्तरं स्मृतिः प्रत्ययात् । अथ प्रत्ययस्य स्मरति, तदा त्विदमयुक्तम् अनुभूतविषयासम्प्रमोष इति । तदा ह्यनुभवासम्प्रमोष इति स्यात्तत्राह—ग्राह्योपरक्तः ग्राह्यो विषय आलम्बनम् , तेनोपरक्तः लाक्षाद्युपरक्तस्फटिकवत् । ग्राह्यग्रहणोभयाकारनिर्भासः ग्राह्यस्य च घटादेः पृथुबुध्नाद्याकारेण स्वेन चावभासरूपेणोपजायमानत्वादुभयनिर्भासः ॥

स च प्रत्यय उत्पद्य विनिवर्तमानः स्वाश्रये प्रत्ययिनि संस्कारमादधाति । स च संस्कारः कारणानुविधायित्वादुभया(पात)कार एव । स्वव्यञ्जकाञ्जन इति । संस्काराधायिनः प्रत्ययस्य हेतुभूतं यत् कर्म दत्तफलं तत्तुल्यजातीयं यत्कर्मान्तरं फलप्रदानायाभिमुखीभवति तत् स्वव्यञ्जकम । तथा च वक्ष्यति—"[1]ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम्' इति । तत्कर्मप्रत्युपनीतं वा सादृश्यप्रणिधानादि । स्वेन व्यञ्जकेनाभिव्यज्यत इति स्वव्यञ्जकाञ्जनः । ग्राह्यग्रहणात्मिकां[2] स्मृतिं जनयति । अन्यथा तद्व्यञ्जकस्य कर्मणो विपाकानुपपत्तिः ॥

1. पा. 4. सू. 8.

2. ग्राह्यग्रहणोभयात्मिकाम् इति मुद्रितभाष्यग्रन्थपाठः

[ भाष्यम् ]

तत्र ग्रहणाकारपूर्वा बुद्धिः। ग्राह्याकारपूर्वा स्मृतिः। सा च द्वयी भावितस्मर्तव्या च अभावितस्मर्तव्या च। स्वप्ने भावितस्मर्तव्या। जाग्रत्समये त्वभावितस्मर्तव्येति। सर्वाः स्मृतयः प्रमाणविपर्ययविकल्पनिद्रास्मृतीनामनुभवात् प्रभवन्ति। सर्वाश्चैता वृत्तयः सुखदुःखमोहात्मिकाः। सुखदुःखमोहाश्च क्लेशेषु व्याख्येयाः—सुखानुशयी रागः, दुःखानुशयी द्वेषः, मोहः पुनरविद्या इति। एताः सर्वा वृत्तयो निरोद्धव्याः। आसां निरोधे सम्प्रज्ञातो वा समाधिर्भवति असम्प्रज्ञातो वा इति ॥ ११ ॥

[ विवरणम् ]

तत्र ग्रहणाकारपूर्वा बुद्धिः, ग्रहणम् [स्वी]करणं[स्वी]करणमेव पूर्वं प्रथममुत्पद्यमानस्य प्रत्ययस्य। न हि विषयविशेषमपेक्षते पूर्वमिष्टानिष्टग्रहणात्, निर्भिन्नघटप्रदीपविनिर्गतप्रभाजालवत् ॥

ग्राह्याकारपूर्वा स्मृतिः अनुभूतापेक्षत्वात्। यदि च ग्रहणपूर्विका स्मृतिः प्रत्ययवदभविष्यत्, अनुभूतं नापैक्षिष्यत। अपेक्षते तु। तस्माद्ग्राह्यो विषयः पूर्वोऽस्या न ग्रहणम्। तथापि तूभयात्मिकैव। स्मृतिसंस्कारयोरेकरूपत्वात्। नाप्यन्यतरप्रत्याख्यानेन सम्भवति। तथा चानुभूतविषयासम्प्रमोष इत्युपपद्यते। स्मृतिप्रत्यययोरपि[समान]विषयत्वात्, ग्रहणत्वस्य च सर्वत्र सम्भवात। तस्मात् पक्षद्वयेऽप्यभिहितदोषो न दृश्यत इति ॥

सा च द्वयी। कथम्? भावितस्मर्तव्या भावितं परिनिष्पन्नं असकृद्भावितत्वात्। यथा द्रव्यान्तरेणासकृद्भावितं तैलादि। असकृद्भावितत्वादेव प्रणिधानादिप्रयत्नान्तरं नापेक्षते। भावितं स्मर्तव्यं प्रणिधानादियत्नान्तरा[न]पेक्षया यस्याः सा स्वप्ने भावितस्मर्तव्या। जा[ग्र]त्समये त्वपेक्षते प्रणिधानादियत्नान्तरमिति तद्विपरीता ॥

सर्वाश्च प्रमाणादिवृत्तिपञ्चतयानुभवादुद्भवन्ति। सर्वाश्चैताः सुखाद्या-(रसत्त्वाद्या)त्मिकाः। तदात्मकश्च संसारः। सुखदुःखमोहाश्च क्लेशेषु व्याख्याताः सूत्रकारेण। "[1]सर्वं दुःखं विवेकिनः" इति हि वक्ष्यति। तद्धानं चेह विवक्षितम्।

1. पा. 2. सू. 15.

[ भाष्यम् ]

अथ आसां निरोधे क उपाय इति--

[ सूत्रम् ]

**अभ्यासवैराग्याभ्यां तन्निरोधः ॥ १२ ॥**

[ भाष्यम् ]

चित्तनदी नाम उभयतोवाहिनी वहति कल्याणाय वहति पापाय च । या तु कैवल्यप्राग्भारा विवेकविषयनिम्ना सा कल्याणवहा । संसारप्राग्भारा अविवेकविषयनिम्ना पापवहा । तत्र वैराग्येण विषयस्रोतः खिलीक्रियते, विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यत इत्युभयाधीनश्चित्तवृत्तिनिरोधः ॥ १२ ॥

[ सूत्रम् ]

**तत्र स्थितौ यत्नोऽभ्यासः ॥ १३ ॥**

[ विवरणम् ]

तस्मात् सुखदुःखमोहात्मकत्वात् निरोद्धव्या वृत्तयः । किञ्च—आसां निरोधे सम्प्रज्ञातो वा समाधिर्भवत्यसम्प्रज्ञातो वा ॥ ११ ॥

अथ आसां निरोधे क उपाय इति ॥

उपायं प्रवेदयति—अभ्यासवैराग्याभ्यां तन्निरोध इति ॥ अभ्यासवैराग्ये वक्ष्यमाणलक्षणे । ताभ्यां यथोक्तलक्षणानां [वृत्तीनां] निरोधः विरोधात् । निरोध उपशमः । अभ्यासवैराग्ययोर्विषयविवेकप्रदर्शनार्थमेतद्भाष्यम्—चित्तनदीत्यादि । चित्तेन नद्येव संसारिणः सततं विषये परिणीयन्ते । संसारप्राग्भारा संसारावसाना समुद्रावसानेव । खिलीक्रियते प्रतिबध्यत इति । उद्घाट्यते प्रवर्त्यते । उद्घाटः क्रियत इत्युद्घाट्यते । अन्यथा मित्वात् घटादयो मितः इति (ह्रतु) "मितां[1] ह्रस्वः" इति स्यात् । एवं उभयाधीनः उभयतन्त्र इत्यर्थः ॥ १२ ॥

तत्राभ्यासस्वरूपं प्रतिपादयिष्यन्नाह—तत्र स्थितौ यत्नोऽभ्यासः । तत्र तस्मिन्निरोधे । सा च निमित्तसप्तमी । निरोधनिमित्ता चित्तस्य या स्थितिः यत्नस्य फलभूता तस्या निमित्तो[त्तभूतो]यो यत्नः सोऽभ्यासः । तथा चाह—

1. पाणिनिसूत्रं अ. 6. पा. 4. सू. 92.

[ भाष्यम् ]

चित्तस्यावृत्तिकस्य प्रशान्तवाहिता स्थितिः। तदर्थः प्रयत्नः— वीर्यम्—उत्साहः। तत्सम्पिपादयिषया तत्साधनानुष्ठानमभ्यासः॥ १३॥

[ सूत्रम् ]

[स तु] दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः॥ १४॥

[ भाष्यम् ]

दीर्घकालासेवितः, निरन्तरासेवितः, सत्कारासेवितः—तपसा ब्रह्मचर्येण विद्यया श्रद्धया च सम्पादितः सत्कारवान्, दृढभूमिर्भवति—व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः॥ १४॥

[ सूत्रम् ]

दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्॥ १५॥

[ विवरणम् ]

अवृत्तिकस्य प्रशान्त[पङ्क]कर(ज्ञ)स्येवाम्भसः प्रशान्तवाहिता प्रसन्नरूपतय परिणामो [1]निरुद्धवृत्तिकस्य [2]चित्तस्य। यत्नो वीर्यमभ्युत्साह इति पर्यायाः। स्थितिसंपिपादयिषया यमनियमादियोगसाधनानुष्ठानमभ्यास इति॥ १३॥

स तु कथं स्थिरीभवतीत्यत आह—दीर्घकालनैरन्तर्यसेवितः दीर्घकालत्ववर्जितो वा [नैरन्तर्यवर्जितो वा न] दृढभूमिर्भवत्यभ्यासः। तस्मादुभयोरपि (विशेष्य)विशेषणत्वमेव। संस्कारासेवित इति त्वभ्यास एव विशेष्यते। दृढभूमिरित्यस्य व्याख्यानं व्युत्थानसंस्कारेणेति। व्युत्थानजेन संस्कारेण द्रागिति सहसा नाभिभूयते॥ १४॥

वैराग्यप्रतिपादनार्थमाह—दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञावैराग्यम्। विषयशब्दः प्रत्येकमभिसंबध्यते वितृष्णस्य इति च, दृष्टविषयवितृष्णस्य आनुश्रविकविषयवितृष्णस्य चेति॥

---

1. इदं अवृत्तिकस्य इति भाष्यपदस्यः व्याख्यानम्। अतः अवृत्तिकस्य इति प्रतीकादनन्तरं सन्निवेशनमुचितं प्रतिभाति।

2. इदं प्रशान्तपङ्केत्यादितः प्राक्सन्निविष्टश्चेत्समुचितं प्रतिभाति।

[ भाष्यम् ]

स्त्रियोऽन्नं पानमैश्वर्यमिति दृष्टविषये वितृष्णस्य, स्वर्गवैदेह्यप्रकृतिलयत्वप्राप्तावानुश्रविकविषये वितृष्णस्य दिव्यादिव्यविषयसम्प्रयोगेऽपि चित्तस्य विषयदोषदर्शिनः प्रसंख्यानबलात् अनाभोगात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यम् ॥ १५ ॥

[ सूत्रम् ]

तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥

[ विवरणम् ]

दृष्टश्चासौ विषयश्च तस्मिन् ॥ कः पुनरसौ ? स्त्रियोऽन्नं पानमैश्वर्यमिति व्यक्त्यपेक्षया । शब्दादीनामानन्त्येऽपि रागप्रबलत्वमेतेष्वतितरामिति स्त्र्यादिग्रहणं प्राधान्यात् । अत्र हि प्रबलतरो रागः । स प्रयत्नतरेण निषेद्धव्यः । एवम् आनुश्रविकविषयः । आनुश्रविको नाम आगमिक इह । स च स्वर्गादिप्राप्त्यानुभवनीयः प्रकृतिलयगतभोग्यो वैदेह्यप्राप्तौ उपभोग्यश्च ॥

ननु च वैतृष्ण्यमेव वैराग्यम्, तथा '[1]रागस्तृष्णा गर्द्धः' इति हि वक्ष्यति[2]। न—अवस्थाविशेषस्य विवक्षितत्वात् । तथा च यतमानसंज्ञा, व्यतिरेकसंज्ञा, एकेन्द्रियसंज्ञा, वशीकारसंज्ञेति चतसृणामासां सामान्यसंज्ञा वैराग्यमिति । एवं सति दृष्टानुश्रविकविषयवितृष्णस्येत्येतदुक्तं भवति—अधिगतपूर्वावस्थात्रयस्य चतुर्थी या अवस्था सा त्विह वैराग्यमिति विवक्षितम् । तस्मादिह वैतृष्ण्यादन्यवैराग्यमभिप्रेतम् । तथा च दर्शयति—विषयदोषदर्शिनः दोषदर्शनस्य विषयनिवृत्तिहेतुत्वात् । तद्गुणदर्शनं हि रागकारणम् । प्रसंख्यानबलात्—तद्दोषदर्शनाभ्यासबलात् । अनाभोगात्मिका विषयाव्यतिकरात्मिका । दिव्यादिव्ययोः सम्प्रयोगेऽपि हेयोपादेयशून्या रञ्जनाविमुक्तस्येव स्फटिकस्य विषयरागविमुक्तस्य चित्तस्यावस्थानम् । वशीकारसंज्ञा—वशीकर्तुं शक्यन्तेऽस्यामवस्थायां सर्वे गौणाः पदार्थाः वशीकर्तव्यत्वेन संज्ञायन्ते, वशीकृतानि च तस्यामवस्थायामिन्द्रियाणि संज्ञायन्ते, वशीकरणं वा संज्ञायतेऽस्यामिति ॥ १५ ॥

तच्च द्विविधम्—परं चापरं च विषयनिमित्तभेदेन । अपरं व्याख्यातम् । अधुना परमुच्यते—तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् । तदिति वैराग्यं परामृश्यते ।

---

1. पा. 2. सू. 7.
2. भाष्यकारः ॥

[ भाष्यम् ]

दृष्टानुश्रविकविषयदोषदर्शी विरक्तः पुरुषदर्शनाभ्यासात् तच्छुद्धिप्रविवेकाप्यायितबुद्धिः गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यो विरक्त इति । तद्द्वयं वैराग्यम् । तत्र यदुत्तरं तज्ज्ञानप्रसादमात्रम् । यस्योदये सति योगी प्रत्युदितख्यातिरेवं मन्यते—प्राप्तं प्रापणीयं, क्षीणाः क्षेतव्याः क्लेशाः, छिन्नः श्लिष्टपर्वा भवसङ्क्रमो यस्याविच्छेदाज्जनित्वा म्रियते मृत्वा च जायत इति । ज्ञानस्यैव परा काष्ठा वैराग्यम् । एतस्यैव हि नान्तरीयकं कैवल्यम् इति ॥ १६ ॥

[ विवरणम् ]

परमिति पूर्वोक्तवैराग्यादुत्तरकालभावीति । यदि वा—तस्य विषयनिमित्ताभ्यामुत्कृष्टनिमित्तविषयत्वात्, कैवल्यस्य वा प्रत्यासन्नतरत्वात् परमुत्कृष्टम् ॥

किं निमित्तमस्येत्याह—पुरुषख्यातेर्निमित्तात् । किंविषयमित्याह—गुणवैतृष्ण्यमिति । गुणेषु सत्त्वादिषु वैतृष्ण्यम् । दृष्टानुश्रविकविषयदोषदर्शीति । पूर्ववैराग्यनिमित्तविषयपरामर्शनमस्य विषयनिमित्तभेदविवेकार्थम् । पुरुषदर्शनाभ्यासात् निमित्तात् । तच्छुद्धिप्रविवेकाप्यायितबुद्धिः । तदिति पुरुषदर्शनं परामृश्यते । तस्य शुद्धिः तच्छुद्धिः निर्णिक्तक्लेशादिमलत्वम् । अथवा तस्य पुरुषस्य शुद्धिस्तच्छुद्धिः । तच्छुद्धेस्तदालम्बनदर्शनं प्रविविच्यते । तत्प्रविवेकेनाप्यायिता बुद्धिरस्य योगिनः ॥

गुणेभ्य इति विषयप्रतिपादनम् । पूर्वस्तु दृष्टानुश्रविकविषयेभ्यो(ऽपि) विरक्तः । एष तत्कारणेभ्यो गुणेभ्य एव । व्यक्ताव्यक्तधर्मकेभ्यः महदादिसंस्थिता व्यक्तधर्मकाः । प्रधानावस्थिता अव्यक्तधर्मकाः । तेभ्यो विरक्त इति । तत् द्वयं वैराग्यं पूर्वमिदं च । तत्र यदुत्तरं पुरुषदर्शननिमित्तं गुणविषयं तज्ज्ञानप्रसादमात्रम् । पुरुषदर्शनस्यैव परः प्रविवेक इति यावत् ॥

पुरुषदर्शी हि हेयोपादेयशून्यचित्तो भवति । तदाह—"प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेधर्ममेघः समाधिः' इति ॥

यस्योदये यस्य वैराग्यस्योदये । प्रत्युदितख्यातिः प्रत्युत्पन्नदर्शनः । एवं मन्यते प्राप्तं प्रापणीयम् इत्यादि । एतस्य हि नान्तरीयकं कैवल्यं ततः

1. पा. 4. सू. 29.

[ भाष्यम् ]

अथोपायद्वयेन निरुद्धचित्तवृत्तेः कथमुच्यते सम्प्रज्ञातः समाधिरिति ।

[ विवरणम् ]

परं साधनानपेक्षत्वात् । वैराग्यस्य ज्ञानप्रसादमात्रत्वे ज्ञानवैराग्ययोरनन्यत्वात् तद्विपरीतयोश्च रागाज्ञानयोरनर्थान्तरत्वमेव सिद्धम् । एवं सति रागोऽप्यविद्याया एवावस्थान्तरमिति पञ्चपर्वा अविद्येत्युपपन्नं भवति ॥

ननु चैवं बुद्धेरष्टगुणत्वं बाध्येत । षड्गुणत्वं हि ध्यानावस्थाभेदाभ्युपगमात् । ज्ञानत्वेऽपि वैराग्यस्य प्रसन्नतरत्वाभ्युपगमः । रागोऽप्यज्ञानस्यावस्थान्तरविशेषः ॥

ननु चैवं सति ज्ञानाज्ञानयोरनेकावस्थाभेदादष्टगुणत्वं पुनरपि न प्राप्नोति । नैष दोषः । फलवत्त्वप्रत्यनीकत्वनियमात् । ज्ञानावस्थाचतुष्टयस्य फलवत्त्वेन भेदनियमः । तथा अज्ञानावस्थाचतुष्टयप्रत्यनीकत्वेनाधर्मादिचतुष्टयनियम इत्यष्टगुणत्वसिद्धिः । धर्मादिप्रतिद्वन्द्विन एव हि गुणत्वेन नियम्यन्ते, नाज्ञानभेदाः सर्वे एव ॥ १६ ॥

उक्तं पुरस्तात्[1] 'सम्प्रज्ञातः समाधिर्वितर्काद्यनुगत इत्युपरिष्टात् प्रवेदयिष्यामः' इति । सोऽवसरप्राप्त इदानीं लक्ष्यते । उपायद्वयेन निरुद्धवृत्तेः वैराग्यद्वयं परापरत्वेन व्याख्यातम् । अभ्यासस्यापि द्वित्वं सामर्थ्यादवसीयते । कथम्? विशिष्टमसम्प्रज्ञातसमाधेरभ्यासं सूत्रेणैव वक्ष्यति—'[2]विरामप्रत्ययाभ्यासपूर्वः' इति । तेन सालम्बनविषयः पूर्वाभ्यास इति निश्चीयते । वक्ष्यति च—'तत्प्रतिषेधार्थम्[3] एकतत्त्वाभ्यासः' इति ॥

भाष्यकारोऽप्यवादीत्—'वैराग्येण[4] विषयस्रोतः खिलीक्रियते । विवेकदर्शनाभ्यासेन कल्याणस्रोत उद्घाट्यते' इति । नावोचत वृत्तिस्वरूपतिरस्कारमेव सम्प्रज्ञातसमाधेः । वृत्तिनिरोधप्रभवत्वमनिष्टविषयप्रवृत्त्युपरमोत्तरकालभावित्वापेक्षया, वृत्तिविषयविशेषानुगत एव हि सः ॥

तथा च द्वितीयसूत्रे सम्प्रज्ञातस्य निरोधो न लक्षणमिति व्याख्यातम् । अतः पूर्वोक्ताभ्यासवैराग्योपायद्वयेन निरुद्धवृत्तेश्चित्तस्य कथमुच्यते—कथं

---

1. प्रथमसूत्रव्याख्यानावसरे—
2. पा. 1. सू. 18.
3. पा. 1. सू. 32.
4. पा. 1. सू. 12.

[ सूत्रम् ]

**वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः ॥ १७॥**

[ भाष्यम् ]

वितर्कः–चित्तस्य आलम्बने स्थूल आभोगः । सूक्ष्मो विचारः । आनन्दो ह्लादः । एकात्मिका संवित् अस्मिता ।

[ विवरणम् ]

लक्षणमुच्यत इति यावत् । **वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः ।** अनुगमशब्दः प्रत्येकं संबन्धनीयः । वितर्कानुगमाद्विचारानुगमादानन्दानुगमादस्मितारूपानुगमादिति । रूपशब्दो मात्रार्थो वितर्कादिपूर्वधर्मत्रयवर्जितत्वख्यापनार्थः ॥

**वितर्कश्चित्तस्यालम्बने स्थूल आभोगः ।** स्थूल(।पि)मिश्रीभावः प्रथममालम्बनाकारेण परिणममानस्य चित्तस्य य आलम्बनव्यतिकरः स वितर्कः ॥ **सूक्ष्मो विचारः** आभोगः सूक्ष्म इति संबन्धः । **आनन्दो ह्लादः** विचारः सूक्ष्मतर आभोगस्तृतीयः । सानन्दता विशेषः । [1]**एकरूपात्मिका संविदस्मिता** स्वस्यां प्रकृतावस्मितायां समापन्नस्य **अस्मिता** प्रत्ययमात्रता एकरूपात्मकत्वम । तथा चोदाहरिष्यति— [2]तमणुमात्मानमन्ववेत्यास्मीत्येतावत्संजानीत इति ॥

ननु चास्मितां क्लेशेषु पठिष्यति 'दृग्दर्शन[3]शक्त्योरेकात्मतेवास्मिता' इति । तत्कथमिवास्मितारूपेण क्लेशेन समाधिरनुगम्यत इति । सत्यमेवं— प्रकृष्टस्वकारणाकारावभासकत्वादन्यविषयविनिवृत्तात्मकत्वाच्चास्मितायाः समाधिरूपत्वेऽप्यदोषः ॥

यदि वा अस्मितारूपस्यालम्बनस्याविद्यात्वेऽपि न योगिप्रत्ययस्याविद्यात्वम् । न हि खलु परचित्तविविदिषायां परस्याविद्यात्वम् । न हि खलु परचित्तप्रत्ययं गृह्णन् परकीयाविद्याप्रत्ययरूपालम्बनदोषेण स्वयमविद्यावान् भवति ॥

---

1. मुद्रितग्रन्थे तु भाष्यपाठः 'एकात्मिका' इति ।

2. पा. 1. सू. 36. अत्र 'तमणुमात्रमात्मानमनुविद्यास्मीत्येतावत्संप्रजानीते' इति मुद्रितभाष्यपाठः ।

3. पा. 2. सू. 6.

[ भाष्यम् ]

तत्र प्रथमः चतुष्टयानुगतः समाधिः सवितर्कः । द्वितीयो वितर्कविकलः सविचारः । तृतीयो विचारविकलः सानन्दः । चतुर्थः तद्विकलोऽस्मितामात्र इति । सर्व एते सालम्बनाः समाधयः ॥ १७ ॥

अथासम्प्रज्ञातः समाधिः किमुपायः ? किंस्वभावो वा ? इति—

[ सूत्रम् ]

**विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥ १८ ॥**

[ विवरणम् ]

यः पुनः क्लेशः स विपर्ययविशिष्ट एव । यथा—अहं गच्छामि कृशोऽहमिति । योगिचित्तस्य तन्न्यग्भूते रजस्तमसी इति न तथा ॥

तत्र पूर्वः पूर्वः स्वकीयोत्तरोत्तरधर्मानुगतः । परः परस्तु पूर्वपूर्वधर्मविकलः । यस्माच्चैतद्धर्मचतुष्टयानुगत एवायं सम्प्रज्ञातः समाधिस्तस्मादेतल्लक्षण इति लक्षणार्थं सूत्रम् । लोकेऽपि यो यदसाधारणधर्मानुयातः स तल्लक्षणः, यथा सास्नादिलक्षणो गौरिति ॥

अस्मितामात्रग्रहणान्निरालम्बनतामेषां समाधीनां मा कश्चिदाशङ्किष्टेत्याह—सर्व एते सालम्बना इति । यः पुनर्मन्यते निर्विकल्पत्वमस्मितेति—तदसत् । अस्मिताशब्दस्याहङ्कारे प्रसिद्धत्वात् । तथा चाह—अस्मिभावोऽस्मिता ॥ १७ ॥

अथ असम्प्रज्ञातः 'योगश्चित्तवृत्तिनिरोध' इत्युपपादितलक्षणः किमुपायः किंसाधनः केनोपायेनोपेत्य इत्यर्थः । किंस्वभावः किंस्वरूपः किमवस्थ इति स्वभावविशिष्टसाधनसंबन्धप्रदर्शनार्थमाह—विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ॥

विरामप्रत्ययाभ्यासपूर्व इत्येतावता साधनसम्बन्धमाचष्टे । संस्कारशेष इति तु स्वभावव्याख्यानम् । अन्य इति अनन्तरोक्तलक्षणात् सम्प्रज्ञातादन्योऽयं निर्बीजः असम्प्रज्ञातः ॥

अन्य इत्युभाभ्यां संबध्यते—विरामप्रत्ययाभ्यासपूर्वश्च संस्कारशेषश्च । कोऽसावुभयविशिष्ट इत्याह—अन्य इति ॥

[ भाष्यम् ]

सर्ववृत्तिप्रत्यस्तमये संस्कारशेषो निरोधश्चित्तस्य समाधिरसम्प्रज्ञातः। तस्य परं वैराग्यमुपायः। सालम्बनो ह्यभ्यासस्तत्साधनाय न कल्पत इति विरामप्रत्ययो निर्वस्तुक आलम्बनीक्रियते। स चार्थशून्यः। तदभ्यासपूर्वकं हि चित्तं निरालम्बनमभावप्राप्तमिव भवतीत्येष निर्बीजः समाधिरसंप्रज्ञातः॥ १८॥

[ विवरणम् ]

विरमणं विरामः। विरामश्चासौ प्रत्ययश्च विरामप्रत्ययः। विरामरूपत्वात् स एव प्रत्ययो विराम इत्युच्यते। सर्वविषयेभ्यो विनिवर्तमानस्य विनिवर्तनकाले प्रागप्रत्ययापत्तेः प्रत्ययरूपत्वम्। एतद्यथा—पावकस्य ज्वलतः प्रक्षीयमाणेन्धनस्य शनैश्शनैरुपशाम्यतः प्रागङ्गारतापत्तेर्ज्वालात्मकता॥

तस्माद्विरामरूपः प्रत्ययो **विरामप्रत्ययः** तस्य **अभ्यासः पूर्वो** मुखं यस्य सः **विरामप्रत्ययाभ्यासपूर्वः**। संस्कार एव शेषो यस्य स **संस्कारशेषः**। प्रत्ययोपरमे तु प्रत्ययसंस्कार एवावशिष्यते। विषयप्रत्ययेभ्य उपरतं चित्तं संस्कारशेषमेवेत्यर्थः। **तस्य परं वैराग्यमुपायः** तस्य समाधेः परमुत्तरम्॥

ननु च परं वैराग्यं चेति वक्तव्यम्, अभ्यासवैराग्याभ्यां वृत्तिनिरोधस्याभिप्रेतत्वात्। नैष दोषः। विरामप्रत्ययाभ्यासस्य सूत्रोपात्तत्वादनाशङ्कयस्तदभ्यासः। वैराग्यं पुनरनुपात्तत्वादाशङ्क्येत। तस्मात्तदेव प्रापयता न चा [चः] पठितः॥

यद्येवं कस्मान्न सूत्र एव वैराग्यग्रहणं कृतम्? पूर्वत्र पठितत्वात्। तत्र किमर्थं पठितमिति चेत्—वैराग्यप्रसङ्गात्। पूर्ववैराग्यविशेष एवोत्तरं वैराग्यमिति प्रसङ्गादुत्तरम् [दुक्तम्]। पूर्वस्य च वैराग्यस्य सम्प्रज्ञातविषये(ऽपि)विनियोगादवशिष्टत्य परस्य साधनत्वादन्यविषयत्वाच्च निर्बीजेनैव सम्बन्ध इति न सूत्रे वैराग्यग्रहणं कृतम्। सामर्थ्यप्राप्तं तु भाष्यकारो दर्शयति॥

'अभ्यासवैराग्याभ्यां तन्निरोध' इति हि प्रतिपादितम्। **सालम्बनो ह्यभ्यासो** विरुद्धत्वान्निरालम्बनस्य समाधेः **साधनत्वाय न कल्पत इति निर्वस्तुकोऽपि विरामप्रत्ययो** निरालम्बनसमाध्यनुरूपत्वादालम्बनीक्रियते। तस्मात्तदभ्यासवैराग्योपायपूर्वकं **चित्तं** निरालम्बनमभावप्राप्तमिव **भवति**। **स एष निर्बीजः** संस्कारशेषस्वभावः **समाधिरसम्प्रज्ञात इति**॥ १८॥

[ भाष्यम् ]

स खल्वयं द्विविधः—उपायप्रत्ययो भवप्रत्ययश्च । तत्रोपायप्रत्ययो योगिनां भवति ।

[ सूत्रम् ]

भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥

[ भाष्यम् ]

विदेहानां देवानां भवप्रत्ययः । ते हि स्वसंस्कारमात्रोप(यो)भोगेन चित्तेन कैवल्यपदमिवानुभवन्तः स्वसंस्कारविपाकं तथाजातीयकमतिवाहयन्ति । तथा प्रकृतिलयाः साधिकारे चेतसि प्रकृतिलीने कैवल्यपदमिवानुभवन्ति, यावन्न पुनरावर्ततेऽधिकारवशाच्चित्तम् इति ॥ १९ ॥

[ विवरणम् ]

स खल्वयं द्विविधः । सः निर्बीजः समाधिः उपायप्रत्ययो भवप्रत्ययश्च । उपायेन प्रतीयते प्राप्यत इत्युपायप्रत्ययो योगिनां भवति । यद्यपि विदेहा अपि योगिन एव । तथापि यमादियोगसाधनानुष्ठायिनोऽभिप्रेताः । तेषां श्रद्धावीर्याद्युपायलभ्यः समाधिः ॥

विदेहप्रकृतिलयानां तु जन्मनैव लभ्यः । तेहि तनुतरप्रतिबन्धावशेषाः । स तु प्रतिबन्धावशेषस्तेषां सकृदासादितपुनर्जन्मनां समाधिव्याघाताय न पर्याप्नोति । स तु जन्मप्रतिलम्भमात्रनिमित्तम् । (त्वात्)ज्ञानवैराग्याद्यनुष्ठानकार्यत्वाद्विदेहप्रकृतिलयत्वस्य तदनुष्ठानस्तुत्यर्थं सूत्रम् । ईदृशं हि तदनुष्ठानमाहात्म्यम् । यदुत सामर्थ्यादिवैकल्यादभीप्सितफलानवाप्तावपि महनीयतरं विदेहप्रकृतिलयत्वं प्राप्यते ॥

विदेहा नाम देवाः पुर्यष्टकशरीरोपबन्धाः । ते स्वसंस्कारमात्रोपभोगेन वैराग्याभ्यासाहितः संस्कारशेषस्तन्मात्रोपभोगेन चित्तेन कैवल्यमिहानुभवन्त इति । सत्त्वगुणविनिर्मोकात्तथाजातीयकं स्वसंस्कारपरिपाकं क्षपयन्ति ॥

प्रकृतिलयाः—साधिकारे अपर्यवसिता[धि]कारे । यावद्धि न कृता गुणपुरुषान्तरख्यातिः, तावदपरिसमाप्ताधिकारमेव चित्तं तस्मिन् प्रकृतिलयापन्ने कैवल्यमिवानुभवन्तीति । पूर्ववत् । यावन्न पुनरावर्ततेऽधिकारवशात् क्रियाकर्तव्यतावशात् तावदनुभवन्ति कैवल्यमिव ॥ १९ ॥

[ सूत्रम् ]

श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥

[ भाष्यम् ]

उपायप्रत्ययो योगिनां भवति । श्रद्धा चेतसः सम्प्रसादः । सा हि जननीव कल्याणी योगिनं पाति । तस्य हि श्रद्दधानस्य विवेकार्थिनो वीर्यमुपजायते । समुपजातवीर्यस्य स्मृतिरुपतिष्ठते । स्मृत्युपस्थाने च चित्तमनाकुलं समाधीयते । समाहितचित्तस्य प्रज्ञाविवेक उपावर्तते, येन यथार्थं वस्तु जानाति । तदभ्यासात्तद्विषयाच्च वैराग्यात् असम्प्रज्ञातः समाधिर्भवति ॥२०॥

ते खलु नव योगिनो भवन्ति मृदुमध्याधिमात्रोपायाः । तद्यथा—मृदूपायो मध्योपायोऽधिमात्रोपाय इति । तत्र मृदूपायस्त्रिविधः—मृदुसंवेगो मध्यसंवेगस्तीव्रसंवेग इति । तथा मध्योपायस्तथाऽधिमात्रोपाय इति । तत्राधिमात्रोपायानाम्—

[ विवरणम् ]

येषामुपायप्रत्ययो योगिनां, तेषां **श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वकः** समाधिः, **श्रद्धा** नामापवर्गप्राप्तौ तत्साधनश्रवणे च कतकफलसंपर्क इव सलिलस्य **चेतसः** [सम्प्रसादः] संप्रसत्तिः । **सा हि जननीव कल्याणी योगिनं पाति** रक्षत्यशुभेभ्यः । **तस्य हि विवेकार्थिनः** सम्यग्दर्शनार्थिनो **वीर्यम्** उत्साह **उपजायते** योगसाधनानुष्ठानं प्रति । सञ्जातवीर्यस्यागमज्ञानादिविषया दृढतरा **स्मृतिरुपतिष्ठते । विवेकार्थिन** इति सर्वत्रानुषज्यते ॥

दृढ**स्मृत्युपस्थाने च चित्तमनाकुलं समाधीयते । समाहितचित्तस्य प्रज्ञा**या बुद्धेः **विविक्त**ता सर्वार्थप्रकाशनसामर्थ्यम् । त(था)त् विशिनष्टि—**येन यथाभूतम्** आत्मादि **वस्तु जानाति** इति ॥

**तदभ्यासात्**—एतदुक्तं भवति—आत्मदर्शनविरामप्रत्ययाभ्यासादिति । **तद्विषयाच्च वैराग्या**(त्ख्यातिविषया)त् परस्माद्वैराग्यादिति । **असम्प्रज्ञातः समाधिः** इति ॥ २० ॥

तेऽपि श्रद्धादिसाधना नव(नुप)योगिनो भवन्ति । तद्दर्शयति—**तद्यथा मृदूपायो मध्योपायोऽधिमात्रोपाय इति** । तेषामेकैकस्त्रिधा भिद्यते—**तत्र मृदूपाय इति** । साधनानुष्ठानं प्रति मन्दोपक्रमो मध्योपक्रमः ती(व्रसंवेगो)व्रोपक्रम इति । एवमितरत्रापीति । नात्र तिरोभूतम्(त्) ॥

[ सूत्रम् ]

तीव्रसंवेगानामासन्नः ॥ २१ ॥

[ भाष्यम् ]

समाधिलाभः समाधिफलं च भवति इति ॥ २१ ॥

[ सूत्रम ]

मृदुमध्याधिमात्रत्वात्ततोऽपि विशेषः ॥ २२ ॥

[ भाष्यम् ]

मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति । ततोऽपि विशेषः तद्विशेषादपि, मृदुतीव्रसंवेगस्यासन्नः, ततो मध्यतीव्रसंवेगस्यासन्नतरः, तस्मादधिमात्रतीव्रसंवेगस्याधिमात्रोपायस्याप्यासन्नतमः समाधिलाभः समाधिफलं चेति ॥ २२ ॥

[ भाष्यम् ]

किमेतस्मादेवासन्नतरः समाधिर्भवति, अथास्य लाभे भवत्यन्योऽपि कश्चिदुपायो न वा इति—

[ सूत्रम् ]

ईश्वरप्रणिधानाद्वा । २३ ॥

[ विवरणम् ]

तत्राधिमात्रोपायानां तीव्रसंवेगानामासन्नः समाधिलाभः समाधिफलं च ॥ २१ ॥

तेषामपि मृदुमध्यतीव्रोपक्रमतया विशिष्यमाणत्वात्ततो[ऽपि]विशेषः साधनानुष्ठानसंस्कारस्य । तद्विशेषादप्युत्तमस्य समाधिलाभः प्रत्यासीददिततराम् ॥ एतदस्य सूत्रस्य प्रयोजनम्—योगसाधनानुष्ठानं प्रति योगिनः कथमुपबृंहितोत्साहा भवेयुरिति । यथा लोके द्रुततरं सीमान्तं परि[प्रति]धावतामेतत्फलं भवतीति तद्वत् । अथवा—मन्दमन्देतरोपक्रमाणामपि योगिनामभिमतफलावाप्तिप्रकाशनादनवसन्नचेतसः प्रवर्तेरन्निति । इतरथा तीव्रतरायासजनितभीतयोऽवसीदेयुरिति ॥ २२ ॥

किमेतस्मादेवासन्नतरो भवति ? अथ (तस्य) अस्य लाभे भवत्यन्योऽपि कश्चिदुपायो न वेति । उपायान्तरमस्तीत्याह—ईश्वरप्रणिधानाद्वा । ईश्वरशब्दार्थमुत्तरत्र व्याख्यास्यति । प्रणिधानमिह व्याचष्टे—भक्तिविशेषा-

[ भाष्यम् ]

प्रणिधानात् भक्तिविशेषादावर्जित ईश्वरः तमनुगृह्णात्यभिध्यान-मात्रेण । तदभिध्यानमात्रादपि योगिन आसन्नतरः समाधिलाभः समाधिफलं च भवति इति ॥ २३ ॥

अथ प्रधानपुरुषव्यातिरिक्तः कोऽयमीश्वरो नामेति ।

[ सूत्रम् ]

**क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः॥ २४ ॥**

[ भाष्यम् ]

अविद्यादयः क्लेशाः । कुशलाकुशलानि कर्माणि । तत्फलं विपाकः । तदनुगुणा वासना आशयाः । ते च मनसि वर्तमानाः पुरुषे व्यपदिश्यन्ते । स हि तत्फलस्य भोक्तेति । यथा जयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते । यो ह्यनेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः ।

[ विवरणम् ]

दावर्जित इति । अनुग्रहं प्रत्यभिमुखीभावमापादितः तं भक्त्यतिशययोगिनं योगिनम् अभिध्यानमात्रेण परमेश्वरत्वादेव निरायासतया सत्यसंकल्पत्वात् अनुगृह्णाति । तदनुग्रहादपि प्रत्यासन्नतरः समाधिलाभः फलं च इति ॥ २३ ॥

अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वर इति सांख्यशास्त्रे प्रसिद्धय-भावादीश्वरसद्भावे चोपपत्तिमवश्यमनवगतेश्वरविशेषो वा पृच्छति । तत्र तावत् प्रतिजानीते—क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥

क्लेशा इति । अविद्यादयः क्लेशयन्तीति क्लेशाः । तत्पूर्वानुष्ठितानि कुशला-कुशलानि कर्माणि । कुशलानि चाकुशलानि [च कुशलाकुशलानि] चेत्येकशेषः । कुशलाकुशलानीति कुशलाकुशलविमिश्राणीति यावत् । तत्फलं विपाकः जात्यायुर्भोगलक्षणः । त एव क्लेशादय आ निर्वाणाच्छेरत इति क्लेशकर्म-विपाका आशयाः । यदि वा क्लेशादीनां राशयः क्लेशकर्मविपाकाशयाः ॥

ते मनसि वर्तमाना मनोवृत्तिप्रभवत्वात् पुरुषे व्यपदिश्यन्ते । कस्मात्? स हि तत्फलस्य भोक्तेति । यथा राजनि जयपराजयौ योधेषु वर्तमानावपदिश्येते तत्फलं राजसंबन्धि इति ॥

[ भाष्यम् ]

कैवल्यं प्राप्तस्तर्हि ? सन्ति च बहवः केवलिनः ।

ते हि त्रीणि बन्धनानि च्छित्त्वा कैवल्यं प्राप्ताः । ईश्वरस्य च तत्सम्बन्धो न भूतो न भावी । यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते नैवमीश्वरस्य । यथा वा प्रकृतिलीनस्योत्तरा बन्धकोटिः सम्भाव्यते नैवमीश्वरस्य । स तु सदैव मुक्तः सदैवेश्वर इति ।

योऽसौ प्रकृष्टसत्त्वोपादानात् ईश्वरस्य शाश्वतिक उत्कर्षः, स किं सनिमित्तः ? आहोस्वित् निर्निमित्तः? इति—तस्य शास्त्रं निमित्तम् ।

[ विवरणम् ]

या ह्यनेन योगेनापरामृष्ट इति उच्यते । न कालविवक्षा, उपलक्षणार्थत्वं—न परामृश्यते, नापि परामृक्ष्यते, नापि परामृष्ट इति । क्लेशकर्मविपाकाशयासंबन्धी(न्धयोगी)त्यर्थः ॥

सूत्रार्थविशुद्धिं कुर्वन्नाह—कैवल्यं प्राप्तस्तर्हीति । क्लेशाद्यपरामर्शस्य कादाचित्कतयाऽपि संभवात् । सन्ति बहवः केवलिनः किं तदी[तेऽपी]श्वरा इति ? । परामर्शस्यापि संभवान्न त एकान्तेन क्लेशादिभिरपरामृष्टाः । परामर्शापरामर्शौ हि स्तः तेषाम् । ईश्वरस्त्वपरामृष्ट एव । न ह्यनवधृतः शब्दार्थो लक्षणत्वेनोपादेयः अपरामृष्ट इति । तस्माद्य एकान्तेनापरामृष्टः स एवापरामृष्ट इत्युच्यते ॥

ते हि त्रीणि बन्धनानि प्राकृतवैकृतदाक्षिणानि सम्यग्दर्शनेन छित्वा कैवल्यं प्राप्ताः । ईश्वरस्य तु तत्संबन्धः क्लेशादिसंबन्धो न भूतो यथा मुक्तस्य पूर्वा बन्धकोटिर्मुक्तत्वोपपत्तेरेव ज्ञायते । बन्धपूर्विका हि मुक्तिः । नापि भावी । यथा प्रकृतिलीनस्य । तस्य ह्यनारब्धसंसारस्य उत्तरा बन्धकोटिः सम्भाव्यते । प्रवृत्तसंसारस्य चाप्रकृतिलीनचित्तस्य सा(समा)धिकारत्वात् पूर्वोत्तरबन्धकोटी संभवतः । तदिदं सर्वमत्रापरामृष्ट इति कालाविवक्षाप्रदर्शनार्थम् । स तु सदैव मुक्तः सदैवेश्वरः ॥

तत्र पुरुषविशेष ईश्वर इत्युक्तत्वात्, ईश्वरस्य पुरुषस्यानैश्वर्यधर्मत्वात्, चित्तस्य चैश्वर्यधर्मत्वात्, निरतिशयैश्वर्यस्य च प्रकृष्टचित्तसंबन्धापेक्षत्वात् प्राप्तमेवोत्तरार्थमनुवदति—योऽसौ प्रकृष्टसत्त्वोपादानादीश्वरस्य शाश्वतिक उत्कर्ष इति । नित्यनिरतिशयसर्वज्ञानैश्वर्यशक्तिसम्पत्तिरुत्कर्षः ॥

[ भाष्यम् ]

शास्त्रं पुनः किन्निमित्तम्? प्रकृष्टसत्त्वनिमित्तम्।

[ विवरणम् ]

तत्र प्रतिज्ञाविशुद्ध्यर्थं प्रश्नपूर्वमुपक्रमते—स किं सनिमित्त आहोस्विन्निर्निमित्त इति। निमित्तशब्दः कारणपर्यायः। स किं सकारण आहोस्विन्निष्कारण इति। किञ्चातः? यदि तावत् सकारणस्तदा सदैवेश्वर इत्ययुक्तम्, अनित्यत्वात्। अथ निष्कारणः, तथा चोत्कर्षस्य कार्यत्वादसत्त्वप्रसङ्गः। न हि निष्कारणं कार्यं दृश्यते लोके॥

अत्रोच्यते—न निष्कारणः शास्त्रनिमित्तत्वात्। शास्त्रं ज्ञानम्। शास्त्रस्य हेतुत्वात्। यतः सर्वविषयं ज्ञानं नित्यं द्रव्यस्वभावसाध्यसाधनव्यवहितविप्रकृष्टास्पदम्॥

यद्येवं ज्ञानस्यान्यतोऽधिगमपूर्वत्वात्प्रागनुत्कर्षः प्राप्त इत्यत आह—शास्त्रं पुनः किन्निमित्तमिति। यदि स्वाभाविकं ज्ञानं, मत्तोन्मत्तज्ञानवदनुत्कर्षहेतुत्वम्। अथ पुनः सनिमित्तकं, निमित्तात् प्रागनुत्कर्ष इति मन्यते॥

न तावन्निर्निमित्तम्। यतः प्रकृष्टसत्त्वनिमित्तं प्रकृष्टसत्त्वाश्रयमिति यावत्। अत एव स्वभावज्ञानदोषाभावः॥

किञ्च- स्वाभाविकज्ञानत्वेऽपि न मत्तादिज्ञानवदपकर्षहेतुत्वम्। नित्यमुक्तक्लेशादिसत्त्वाश्रयत्वात्। तत्र यथैव ज्ञानसंस्कारस्मृतिप्रबन्धानामन्योन्यनिमित्तनैमित्तिकभावेन बीजाङ्कुरवदनादिसंबन्धः, तथैव शास्त्रप्रकर्षयोरीश्वरचेतसि नित्यप्रवृत्तप्रबन्धरूपेण प्रवर्तमानयोरनाद्यन्तः संबन्धः। तत्रोत्कर्षो ज्ञानस्य कार्यमेव। ज्ञानमपि तस्य कारणमेव॥

अन्येषां[1] व्याख्यानम्—निमित्तशब्दः प्रमाणवाची। तस्य शास्त्रं निमित्तं प्रमाणम्, तेन हि तदुत्कर्षः प्रमीयते। शास्त्रं पुनः किंप्रमाणकम्? ईश्वरनिर्मलसत्त्वप्रमाणम्। विशुद्धसत्त्वप्रणीतत्वाद्धि शास्त्रस्य प्रामाण्यम्, यथा मन्वादीनाम्। तथा च श्रुतिः—'यत्किंचिन्मनुरभ्यवदत्तद्भेषजम्' इति। यथा च लोके गुरुणाऽभिहितमिति॥

---

1. अन्ये वाचस्पतिमिश्राः। यद्वा—तेषामपि मार्गप्रदर्शकाः प्राचीना व्याख्यातारः।

[ भाष्यम् ]

**एतयोः शास्त्रोत्कर्षयोरीश्वरसत्त्वे वर्तमानयोरनादिः सम्बन्धः। एतस्मादेतद्भवति—सदैवेश्वरः सदैव मुक्त इति। तच्च तस्यैश्वर्यं साम्यातिशयविनिर्मुक्तम्। न तावदैश्वर्यान्तरेण तदतिशय्यते। यदेवातिशायि स्यात्तदेव तत्स्यात्। तस्माद्यत्र काष्ठाप्राप्तिरैश्वर्यस्य स ईश्वर इति। न च तत्समानमैश्वर्यमस्ति। कस्मात्? द्वयोस्तुल्ययोरेकस्मिन् युगपत्**

[ विवरणम् ]

**एतयोः शास्त्रोत्कर्षयोः** प्रमाणप्रमेयतया निराद्यन्तः **सम्बन्धः**॥

ननु च नैवेश्वरसत्त्वे[ऽ]वर्तमानेन शास्त्रेण तदुत्कर्षः प्रमीयते। नैष दोषः। तत्प्रभवत्वात्तत्र वर्तमानम्। वर्त(मान)त एव तत्प्रभवमपि शास्त्रं तस्मिन् सर्वज्ञत्वादेव। लोकेऽपि यतो यत्प्रभवति वर्तते तत्तस्मिन्, यथा तन्त्वादिषु पटादि। तत्प्रभवत्वमनुमानागमाभ्यामवगम्यते। शास्त्रप्रमाणकः उत्कर्षः, ईश्वरप्रमाणकं शास्त्रमिति भिन्नाश्रयत्वाच्छास्त्रोत्कर्षयोर्नेतरेतराश्रयत्वम्॥

ननु च शास्त्रादीश्वरप्रामाण्यं, तत्प्रामाण्याच्च शास्त्रप्रामाण्यमिति स्यादन्योन्याश्रयत्वम्—उच्यते—ईश्वरप्रामाण्यस्यानुमानेन सिद्धत्वाददोषः॥

**एतस्मादेतद्भवति**। कस्मात्? ईश्वरप्रकृष्टसत्त्वाश्रययोर्निरतिशयज्ञानोत्कर्षयोः कार्यकारणरूपे प्रबन्धनित्यतया नित्यत्वादेतद्भवति—**स तु सदैव मुक्तः सदैवेश्वर इति**। (इत्यत्राह) **तच्च तस्यैश्वर्यं साम्यातिशयविमुक्तमिति** वक्ष्यमाणप्रमाणफलम्। एतत्सूत्रपिण्डार्थो वा॥

अतिशयविमुक्ततां व्याचष्टे—**न तावदैश्वर्यान्तरेण तदतिशय्यते**। कुतः? **यदेवैश्वर्यान्तरं तदतिशयानं** मन्यसे **तदेव तत्** ऐश्वर्यं मयाऽभिहितम्। यत्रैवैश्वर्यान्तरातिशायि भवत्यैश्वर्यं स एवेश्वर इति यावत्। **न च तत्समानमैश्वर्यमस्ति**। समानधर्मप्रकर्षासंभवात्॥

न ह्येकस्मिन् राज्ये द्वयोः संभवो राज्ञोः। एकस्य वा द्वे राज्ये। तथा प्रतिपादयति—तद्द्वयोस्तुल्यत्वं प्रसक्तम्। न ह्येकस्यान्यतरत्र प्राकाम्यमबाधित्वा अन्यतरस्मिन् प्रवृत्तिरुपपद्यते। द्वयोश्च युगपदेकार्थयोरेकस्य प्राकाम्येण प्रवृत्तिरेव नास्ति। प्रकामिते वस्तुनि समानप्रकर्षस्यार्थस्य विरुद्धत्वात्। येन च समानप्रकर्षता तस्य तेनैव स बाध्यते। (ते च) तच्च न वाचा बाधनमितरस्य रूपातिशया आवृत्त्यतिशयाश्च विरुध्यन्ते। सामान्यानि त्वतिशयैः सह वर्तन्त इति वक्ष्यामः॥

[ भाष्यम् ]

कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्तु इत्येकस्य सिद्धौ इतरस्य प्राकाम्यविघातादूनत्वं प्रसक्तम्। द्वयोश्च तुल्ययोर्युगपत् कामितार्थप्राप्तिर्नास्ति। अर्थस्य विरुद्धत्वात्। तस्मात् यस्य साम्यातिशयैर्विनिर्मुक्तमैश्वर्यं स एवेश्वरः। स च पुरुषविशेष इति॥ २४॥

[ सूत्रम् ]

**तत्र निरतिशयं सर्वज्ञबीजम्॥ २५॥**

[ भाष्यम् ]

किञ्च—यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहणमल्पं बह्विति सर्वज्ञबीजमेतद्विवर्धमानं यत्र निरतिशयं स सर्वज्ञः। अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्य, सातिशयत्वात्, परिमाणवत् इति। यत्र काष्ठाप्राप्तिर्ज्ञानस्य स सर्वज्ञः। स च पुरुषविशेष इति॥

[ विवरणम् ]

तस्माद्यस्य साम्यातिशयविप्रोषितमैश्वर्यं स ईश्वर इति प्रधानपुरुषव्यतिरिक्तः पुरुषविशेष ईश्वरः सिद्धः॥ २४॥

यथाप्रतिज्ञातस्येश्वरस्य सिद्धौ प्रमाणमुपन्यस्यते—तत्र निरतिशयं सर्वज्ञबीजम्। तत्र तस्मिन् यथाप्रतिज्ञातलक्षण ईश्वरे निरतिशयं भवितुमर्हति। किं तदिति? यदिदम् अव्यभिचारि प्रत्यक्षानुमानज्ञानम् अतीतविषयम् अनागतविषयं (वर्तमानकाल)प्रत्युत्पन्न[विषय]मतीतादिसमुच्चयविषयम् अतीन्द्रियविषयं च। अतीन्द्रिययोरतीतानागतयोः संभवादतीन्द्रिय[ग्रहण]मित्युच्यते॥

तच्चातीन्द्रियग्रहणं त्रिविधम्—सूक्ष्मविषयं व्यवहितविषयं विप्रकृष्टविषयञ्च। अल्पं बह्विति। यथाप्रसिद्धमेतद्विवर्धमानं सातिशयत्वेन सर्वज्ञबीजं यथा धूमविज्ञानमग्निविज्ञानस्य। कथम्? यत्र प्रकर्षकाष्ठां प्रतिपद्यते। ज्ञानस्य ज्ञात्राश्रयत्वात् यत्रेति ज्ञातोच्यते—यस्मिन् ज्ञातरीति। स सर्वज्ञः सिद्धः॥

तथा शक्तिरपि सातिशयत्वेन विवर्धमाना यत्र काष्ठां प्राप्नोति, स सर्वशक्तिः। तेन जगन्निर्माणस्थापनोपसंहारादिकर्तृत्वसिद्धिः। तथैश्वर्यस्यापि वर्धमानस्य यत्र काष्ठाप्राप्तिः, स परमेश्वरः। ततश्च अशक्त्यादिविपर्ययदोषाभावसिद्धिः॥





अथापि स्यात्—अज्ञानस्यापि विवर्धमानस्य स्वभावसिद्धस्य काष्ठाप्राप्तस्य तस्मिन्नीश्वरे सिद्धिरिति—न—ज्ञानविरोधात् । न हि ज्ञानाज्ञानयोर्विरुद्धयोरेकस्मिन्नभिसंयोगोऽस्ति । न हि ज्ञाने प्रकर्षवति तत्राज्ञानं संभवति ॥

यत्र हि ज्योतिर्विवर्धते तत्र तमोऽपकृष्यत एव । विपर्ययोऽपीति चेत्—तच्च न—सति ज्योतिषि तमसोऽनुपलम्भात् । त्रियमानं हि तमो ज्योतिषा तिरस्क्रियते, न कदाचिद्विद्यमानं ज्योतिस्तमसाऽभिभूयते ॥

यदपि जलधरोपरोधात् प्रावृषि रवेरदर्शनम्, तदपि दृष्टिव्यवधानमात्रम् । न पुनः प्रकाश एव तिरोधीयते तमोवत् । तस्मान्न, यत्र ज्ञानविवृद्धिस्तत्राज्ञानस्य भावः सवितरीव तमसः । नित्यात्यन्ततिरोहितरजस्तमोगुणसत्त्वोपादानात् ॥

किञ्च—नाज्ञानस्यावस्तुविषयत्वाद्विवृद्धिः संभवति । ज्ञानस्य ज्ञेयवस्तुविषयत्वादभिवृद्ध्युपपत्तिः । अज्ञानस्य हि वस्तुविषयत्वे ज्ञानत्वप्राप्तिः ॥

यश्चापि स्थावरादिष्वज्ञानप्रकर्ष इति, नासौ प्रकर्षः । अत्यन्तज्ञानाभावापेक्षया हि स उच्यते । अज्ञानस्य प्रकर्षे हि सत्यज्ञानसहस्रस्य न ज्ञानेनैकेन बाधः स्यात् । तथा[दा]हि प्रत्यज्ञानं ज्ञानेनोत्पन्नेनानेकेन बाधनं स्यात् । तस्मान्नाज्ञानस्य प्रकर्षः स्वरूपेण ॥

यस्य हि सातिशयत्वं तस्य काष्ठाप्राप्तिर्दृश्यते । यथा फलादिपरिमाणानामाकाशपर्यन्तता । तथा सर्वज्ञबीजमपि परां काष्ठां प्राप्तुमर्हति ॥

समस्तं व्यस्तं च सर्वं वस्तुजातमेकस्य प्रत्यक्षं, ज्ञेयत्वात्, घटादिवत् ॥

ज्ञानविषयत्वेन पुरुषार्थत्वात्, घटादिवदेव ॥

उत्पत्तिमती च पृथिवी, सावयवत्वात्, घटादिवत् ॥

प्राणिकर्मतत्साधनफलविभागविदेक(गधैक)निष्पादितं जगत्, तदुपभोग्यस्थानादिरचनाविशेषवत्त्वात्, प्रासादादिवत् ॥

अनेकप्राण्युपभोगविज्ञानवदेकनिर्वर्तिता पृथिवी, अनेकप्राणवदुपभोग्यत्वात्, व्रीहियवादिवत् ॥

अनेकप्रयोजनार्थिना एकेन निर्मिता पृथिवी, गृहादिवदेव ॥

सर्वप्राण्याश्रयो गिरिनदीसमुदायः तन्निवासिपरिभोगयोग्यविज्ञानवदेककुशलोत्पादितः, प्रकृतहेतुनिदर्शनाभ्यामेव ॥

अनेकप्राणभाक्प्रकाशादिसामर्थ्यज्ञानवता एकेन निर्वर्तितः सविता, प्रकाशात्मकत्वात्, प्रदीपादिवत् ॥

नियतकालमादित्योदयास्तमयादिसञ्चरणम् एतत्प्रयोजनज्ञानवदेकप्रयुक्तं, प्रतिनियतकालत्वात्, कृष्यादिवत् ॥

बुद्धिमदेकेश्वरप्रयुक्ता सूर्यग्रहचन्द्रनक्षत्रादिप्रवृत्तिः, प्रवृत्तेर्दुःखात्मकत्वे सति नियतसमयत्वात्, धर्मज्ञशिष्यभृत्यादिप्रवृत्तिवत् ॥

चन्द्रमसो वृद्धिक्षयौ तिथ्यादिकालज्ञानवतैकेन प्रयुक्तौ, कालपरिच्छेदकत्वात्, घटिका[हरा]दिवत् ॥

कालपरिच्छेदज्ञानवतैकेन निर्वर्तितश्चन्द्रमाः, वृद्धिक्षययुक्तत्वात्, घटिकादिवदेव ॥

बुद्धिमदेकस्वामिकं जगत्, अन्योन्यविरुद्धसंहतानेकप्राणिनायकाधिष्ठितबहुमण्डलत्वात्, इत्थंजातीयकैकराज्यवत् ॥

सर्वमेतत्साधनसाध्यव्यापारावस्थं प्रत्यक्षं कस्यचिदेकस्य, अवान्तरविरोधानुग्रहवत्तयैकप्रयोजनत्वात्, सांग्रामवस्तुवत् ॥

संहतत्वात्, कुलालादिवस्तुवत् । सैव प्रतिज्ञा ॥

युगपच्च सर्वं प्रत्यक्षमेक(त)स्य, अनेकत्वे (त्व)सत्यन्योन्यसंबन्धात्, प्रसिद्धसम्बन्धानेकार्थवत् ॥

अग्निहोत्रादिसाधनसाधनीये कस्यचित्प्रत्यक्षे, साध्यसाधनरूपत्वात्, भुजितृप्तिवत् ॥

सर्वाः शक्तयः कस्यचित् प्रत्यक्षाः, वस्तुत्वात्, घटादिवत् ॥

अ[वा]न्तरप्रतिबन्धाभावे सर्वं वस्तुजातं नैरन्तर्येण कस्यचित् प्रत्यक्षं, शब्दादिमत्त्वेन सम्बन्धात्, द्राघीयसीमिव शष्कुलीं भक्षयतः शब्दादयः ॥

स्वतन्त्रतया केनचिदेकेन सर्वं प्रत्यक्षत उपलभ्यते, ज्ञेयत्वेनाभिमतत्वात्, नाट्यवस्तुवत् ॥

अप्रतिबन्धेन कस्यचित् प्रत्यक्षोपलभ्यं सर्वम्, अनेक(सत्त्वे)त्वे सत्यन्योन्यसंबन्धात्, नाट्यसंबन्धिनर्तकादिवत् ॥

संसाररहितः सर्वज्ञः, अज्ञानाभावात्, मुक्तात्मवत् । क्लेशादिरहित ईश्वरः, अप्रतिबन्धज्ञानत्वात्, सिद्धयोगिवत् ॥

एतेन क्लेशादिप्रतिबन्धाज्ञानरहितत्वेन चक्षुरादीन्द्रियग्रामनिरपेक्षसर्वविषयज्ञानत्वं सिद्धम् । सर्वार्थग्रहणसमर्थस्य परमेश्वरचित्तस्य सर्वव्यापिनो युगपत्सर्वविषययोगित्वात् । एवं सति समस्तवस्तुग्रहणाभावे कारणाभा(वानु)वोपपत्तिः ॥

नापि मूर्तिमत्प्रतिबन्धोऽप्याकाशवदेव सर्वविषययोगिनोऽपि चित्तस्य । विषयानवस्थानादाविर्भावतिरोभावस्मृतिसंकल्पानवस्थितत्वोपपत्तिः । विषयाकारतया वृत्तिलाभादर्कप्रभावत् ॥

न हि क्लेशाद्यावरणावच्छन्नं चित्तसत्त्वम्, तस्याधर्मादियोगात् । सर्वगतस्य सर्वार्थस्यापि सत्त्वस्याधर्मादिप्रतिबन्धकनिरुद्धस्वकीयप्रवृत्तिमार्गत्वादिन्द्रियादिद्वारापेक्षित्वमुपपद्यते । यथा अपवरकाद्यावरणावृतः प्रदीपस्तदावरणगतच्छिद्रद्वारेण बहिः प्रकाशयति । स एव तु प्रदीपः प्रभिन्नापवरकावरणः सन्नन पेक्ष्य तत्तच्छिद्रमार्गं समन्ततः प्रकाशयति ॥

तथैवेश्वरसत्त्वं क्लेशाद्यावरणयोगाभावादसति विषयविशेषनिरोधिकारणे युगपदशेषार्थग्रहणम् । ततश्च स्वातिलङ्घनानतिलङ्घनादिदोषाभावः ॥

सर्वस्य विषयत्वात् सर्वमेकेश्वरं जगत्, परिपालकापेक्षस्थानाद्यनेकवस्तुविशेषत्वात्, प्रसिद्धैवंभूतैकराज्यवत् ॥

तथा, नियतस्थितिहेत्वनेकोपकरणवत्त्वात्, अन्योन्याभिभवनीयप्रभूततरदुर्गयुक्तानेकदेशत्वात्, अभङ्गुरव्यवस्थशरीरभेदवत्त्वाच्च, प्रतीतैवंविधैकराज्यवत् ॥

अनेककर्तृभोक्तृक्रियासाधनफलसंबन्धविशेषज्ञानवदुपदिष्टानि वर्णाश्रमाद्यनुष्ठानानि, फलार्थिभिः प्रत्यवायभीरुभिस्तैश्चानुष्ठीयमानत्वात्, भैषज्यरसायनाद्यनुष्ठानवत् ॥

तथा तदुपदेशाः, परार्थत्वात्, उपदेशत्वात्, विद्वच्छ्रद्धेयत्वात्, उपदेशादृते मनुष्यानवगम्यार्थत्वाच्च, भैषज्याद्युपदेशवत् ॥

शरीरेन्द्रियाणि सर्वतत्प्रयोजनविदेकनिमित्तकारणाभिनिर्वर्तितानि, नियतक्रियास्थितिहेतुसाधनवत्त्वात्, प्रासादगृहदारुयन्त्रादिवत् ॥

नियतप्रयोजनरचनावत्त्वाच्च, तद्वदेव ॥

तथेन्द्रियाणि, करणत्वात्, वासीवृक्षादानादिवत् ॥

तथा सर्वं, कार्यनियतोपादानत्वात्, भोक्त्रर्थत्वात्, भोगसाधनत्वाच्च, घटादिवत् । उत्पत्तिमत्त्वेऽप्येते हेतवः ॥

एवं मध्यमपरिमाणत्वात्, अनेकविनाशहेतुसंबन्धयोग्यत्वात्, भोगाधिष्ठानत्वात्, क्रियाफलसाधनतद्रूपादिमत्त्वाच्च, आधीयमानापचीयमानापूर्यमाणापनीयमानदह्यमानभिद्यमानानेकदेशत्वात्, विनश्वरी पृथिवी ॥

शरीरादिवन्नश्वराणि पृथिव्यादिभूतानि, अन्योन्यनाशकशक्तिमत्त्वात्, शस्त्रपुरुषादिवत् ॥

तथैव विरोधात्, पुरुषविपरीतत्वाच्च, उत्पत्तिविनाशधर्मकमाकाशं, साक्षादुपकरणत्वात्, घटादिवत् बाह्येन्द्रियग्राह्यगुणाश्रयत्वाच्च ॥

तस्मान्निरतिशयशक्तिज्ञानैश्वर्यैः परमेश्वरः सिद्धः ॥

अत्रोच्यते—ईश्वरशब्दार्थः सर्वज्ञो न भवति, प्रमेयत्ववस्तुत्वशब्दाभिधेयत्वात्मत्वसाधनापेक्षोपलब्धृत्वादिभ्यः, अस्मदादिवत् ॥

ईश्वरशब्दोऽपि निरतिशयज्ञानयुक्ताभिधायी न भवति, शब्दत्वात्, घटादिशब्दवत् ॥

सर्वज्ञसर्वेश्वरशून्यं जगत्, अनेकप्राणिव्यपाश्रयत्वात्, अन्योन्यविरुद्धानेकनायकराज्यवत् ॥

भूतभविष्यत्कालयोरपि इदानीमिव सर्वज्ञस्यानुपलब्धारः सर्वप्राणिनः, प्राणित्वात्, अस्मदादिवत् ॥

वाद्यन्तरपरिकल्पितः सर्वज्ञः सर्वेश्वरश्च नास्ति, अनुपलभ्यमानत्वात्, शशविषाणवत् ॥

तथा असर्वज्ञोऽनीश्वरश्च, अशरीरत्वात्, मुक्तात्मवत् । सशरीरश्चेद्धर्माद्यपेक्षशरीरत्वं, तथा च संसारित्वमस्मदादिवदेव । अशरीरत्वमेवेति चेज्जगत्कर्तृत्वानुग्राहकत्वाद्यनुपपत्तिः, मुक्तात्मनिदर्शनेन ॥

विशिष्टपरिभोगयोग्यजगद्रचनाविशेषोपपत्तिः स्वभावादेव, कण्टकतीक्ष्णत्व कुमुदकमलसङ्कोचविकोचादिवत् । निशाकरदिवाकरतारकादिगमनागमनाद्यपि स्वाभाविकं, लोहायस्कान्तमणिवत् ॥

अत्राभिधीयते—स्वाभाविकी तावन्न भवति पृथिव्यादिरचना । दृष्टान्तो नैव तत्साधनस्य विद्यते । कण्टकादीनां च तैक्ष्ण्यं न स्वाभाविकमभ्युपेयते ॥

अग्न्यादीनामिवौष्ण्यादि स्वभावो वस्तुधर्मत्वाद्धेतोः पृथिव्यादिरचनेति चेत्—प्रासादादिरचनाया वस्तुधर्मत्वात् स्यादनैकान्तिकत्वम् ॥

अथ स्वाभाविकत्वादिति चेत्—असिद्धत्वम्, जगद्रचनाया धर्माधर्मफलोपभोगार्थप्रयुक्तत्वाभ्युपगमात् । कर्तृधर्माधर्मास्तित्वमुपरिष्टात् साधयिष्यते ॥

तस्मात् पृथिव्यादिरचना स्वाभाविकी न भवति, प्राण्युपभोगार्थत्वात्, प्रासादादिरचनावत् । चन्द्रादिप्रवृत्तिर्न स्वाभाविकी, प्रवृत्तित्वात्, अस्मदादिप्रवृत्तिवत् ॥

अस्मदादिप्रवृत्तिरपि स्वाभाविकीति चेत्—न—अग्न्युष्णत्ववन्नित्यत्वप्रसङ्गात् । न ह्यग्न्युष्णत्वं स्वाभाविकं सन्नियतं निमित्तमात्मलाभाय काङ्क्षति धर्मिसत्ताव्यतिरेकेण । क्रियाफलरचनादीनां तु विशिष्टनिमित्ताकाङ्क्षणमात्मप्रतिलम्भायेति न स्वाभाविकत्वम् ॥

नियतनिमित्ताकाङ्क्षणमपि प्रासादादिरचनानां स्वभाव इति चेत्—अस्तु तथाविधस्वभावत्वम् । तथाऽपि पृथिव्यादिरचनाया नियतनिमित्ताकाङ्क्षणस्वभावत्वं प्रासादादिवदेव । ततश्च नास्मि विप्रतिपत्तिर्न दोषाय, कारकान्तरापेक्षत्वादिति प्रतिज्ञा प्रतिरूपकारिणी च ॥

भवद्भिरुक्तानि [अनुमानानि] लोकानुमागमविरोधात् [अप्रमाणानि] । अनुमानविरोधं तावत् सातिशयत्वादिभ्यो ब्रूमः ॥

आगमविरोधं च "यः सर्वज्ञः[1] सर्ववित्" "एको[2] वशी" इत्येवमादिभ्यः समाचक्ष्महे ॥

समस्तलोकविरोधं चापि । सर्व एवानारीगोपालं संव्यवहरमाणाः सततं शिवनारायणादिनाम्ना प्रणिहितचेतसः प्रतिषेधत्स्वपि संभिन्नबुद्धिषु अकर्णीकृततत्प्रतिषेधविषयपल्लवाः परमेश्वरं प्रणतमूर्धानः कुसुमाञ्जलिप्रभृतिभिरर्चयन्ति । फलं चापि तत एव प्रार्थयन्ते ॥

---

1. मुण्डकोपनिषत 1. 1. 9.
2. कठोपनिषत् 5. 12.

अथ चेद्ब्रूयात्—सर्वज्ञाभावप्रतिपादिभिरस्मदनुमानैरितरप्रतिज्ञानां विरोध इति—अत्रोच्यते—

नैतान्यनुमानानि। कथम्? प्रथमं तावत् प्रतिज्ञैव दुष्टा। यदि तावदीश्वरशब्दार्थः सर्वज्ञो न भवतीति युष्मदभिप्रेत ईश्वर उच्येत, तथा च सिद्धसाध्यता स्यात्॥

अथास्मदभिप्रेतः, तथापि युष्माकमसिद्धविशेष्यता भवेत्॥

अथेश्वरत्वस्यासर्वज्ञत्वमुच्यते, तथापि सिद्धं साध्यते॥

तथैवाभ्युपगमविरोधोऽपि। कथम्? ऐश्वर्यसर्वज्ञबीजत्वयोर्विवर्धमानत्वात् काष्ठाप्राप्तिः परिमाणवदेवाभ्युपगमनीया। तथा काष्ठाप्राप्तैश्वर्यसर्वज्ञत्ववाचिनावपीश्वरसर्वज्ञशब्दावेषितव्यौ। काष्ठाप्रतिश्च निरवधिकत्वम्। यथा परिमाणादीनामात्माकाशाद्यनन्तपरिमाणान्तत्वम्। तथा चानुमानाभ्युपगमस्ववचनविरोधाः स्युः॥

किञ्चान्यत्—काष्ठाप्राप्तेश्वरत्वस्य च शब्दार्थस्य परित्यागे शब्दार्थवादः प्राप्नोति। न हि शब्दः परित्यक्ताभिधेयैकदेश उच्चरितः॥

अथ परिमाणादेरपि निरवधिकनिष्ठत्वं नेष्यते—सिद्धान्तविरोधः। आत्माकाशादीनां हि सर्वगतत्वाभावे, मध्यमपरिमाणत्वानित्यत्वादिदोषप्रसङ्गश्च। अथाप्यात्मनः सर्वत्र कार्यदर्शनात् सर्वगतत्वम्, तत्रापि शकुन्याद्यात्मनां मनुष्यगोचराकाशादिगतत्वं सामान्यतोदृष्टादेवानुमानात् स्यात्। तथा चेहापि सामान्यतोदृष्टानुमानत्वं केन वार्यते॥

अथानुमानविरोधान्नावधार्यत इति चेत्—आत्मादीनामपि प्रमेयत्ववस्तुत्वादिभ्यः पृथिव्यादिवदित्यनुमानविरोधोद्भावना शक्यते [कर्तुम्] वक्तुम्। न च तावताऽत्रानुमानविरोधित्वम्, अनुमानाभावप्रसङ्गात्॥

तथा अनुमानाभाव इष्यत इति चेत्—प्रत्यक्षेऽप्यनाश्वासः स्यात्। अथ निश्चीयमानबुद्ध्युत्पत्तेः प्रत्यक्षप्रमाणत्वम्, अनुमानस्यापि तर्हि निश्चितबुद्धिसमुद्भवादस्तु प्रामाण्यम्। अथ दृष्टसम्बन्धधूमादिविषयमेवानुमानमिति चेत्—तत्राप्यनुमानाभाव एव—अनग्निः धूमवान् प्रदेशः, प्रत्यक्षानुपलभ्यमानाग्निसम्बन्धे सति प्रदेशत्वात्, अग्निशून्योपलभ्यमानप्रदेशवदिति॥

अथ प्रमाणान्तरसंवादाददृष्टसम्बन्धविषयेऽनुमानस्यानुमानत्वमुच्यते, प्रत्यक्षमपि प्रमाणान्तरसंवादात् प्रमाणं भवेत्, प्रमाणत्वात्, अनुमानवदेव।

अप्रमाणं स्यात्, प्रमाणान्तरसंवादाभावात्, सामान्यतोदृष्टादिवदिति। तस्मान्न सामान्यतोदृष्टस्य प्रमाणत्वं निश्चितबुद्धित्वाद्बाधितुं शक्यम् ॥

किं च—सामान्यतोदृष्टस्य मानत्वमनभ्युपगच्छतः स्वशरीरमरणसम्बन्धलक्षणस्यानुपलब्धपूर्वत्वात् सर्पादिभ्यो भयानुपपत्तिः। व्याधिप्रतीकाराय चिकित्सादिप्रयोगो न घटेत। मरणशङ्काकारणाभावात्। तथा जन्मनोऽप्युपलम्भाभावादात्मशरीरस्याजत्वं चिन्त्येत। हानोपादाननियोगाभावश्च स्यात् ॥

तस्मात् सामान्यतोदृष्टपरिमाणत्वादिसातिशयत्वसामान्यादीश्वरज्ञाननिरवधिकत्वसिद्धिः ॥

किं चान्यत्—ईश्वरसर्वज्ञत्वस्य प्रतिषिद्ध्यमानत्वात् सत्त्वाभ्युपगमः, अ(नुप)पदार्थस्य प्रतिषेधासम्भवात्। न हि केवलो नेति (न) प्रयुज्यते। ईश्वरः सर्वज्ञो न भवतीत्युच्यते। तत्र क्वचित् सर्वज्ञत्वमभ्युपगतं भवति ॥

तद्यथा—शशस्य विषाणं नास्ति, वन्ध्यायाः सुतो नास्ति, कुसुममाकाशस्य नास्तीति क्वचिद्विद्यमानानामेव विषाणसुतकुसुमादीनां शशादिसंबन्धेन प्रतिषेधः, तद्वदिहापि स्यात् ॥

किं च—ईश्वरः सर्वज्ञो न भवतीति, ईश्वरशब्दार्थसर्वज्ञत्वसम्बन्धप्रतिषेधादिना ईश्वरादन्यस्य सर्वज्ञत्वाभ्युपगमः। सम्बन्धिनावनभ्युपगम्य सम्बन्धप्रतिषेधो हि न शक्यः कर्तुम् ॥

स एष युक्तः सम्बन्धः प्रतिषिध्यते, अयुक्तश्चाभ्युपगम्यते। तत्परिश्रममात्रम्। ईश्वरसर्वज्ञयोः प्रसिद्धपदार्थयोरप्रतिषेधात्। न ह्यनन्तपरिमाणमाकाशं न भवतीत्याकाशस्य प्रसिद्धमनन्तपरिमाणत्वं प्रतिषिध्याप्रसिद्धानन्तपरिमाणत्वेषु घटादिषु तत् व्यवस्थापयितुं युक्तम् ॥

अथ सम्बन्धिनावेवेश्वरसर्वज्ञत्वे प्रतिषिध्येते, स्ववचनविरोधिनी प्रतिज्ञा स्यात्। ईश्वरसर्वज्ञत्वयोरीश्वरसर्वज्ञशब्दार्थत्वाभ्युपगमात्। न हि भवत्यग्निरग्निशब्दार्थो न भवतीति ॥

अथाप्रसिद्धपदार्थावीश्वरसर्वज्ञशब्दौ, तथाऽपि तदर्थप्रतिषेधानुपपत्तिः। अप्रसिद्धस्यार्थस्य प्राप्त्यभावात्। न हि किंचिदप्रसिद्धमेतच्छिखरे मेषकुटुम्बिनीं प्रतिषेद्धुमर्हति। किं च शब्दोपादानानर्थक्यं च। अप्रसिद्धपदार्थत्वात् ॥

अथ प्रसिद्धार्थयोरीश्वरसर्वज्ञशब्दयोर्निरवधिकेश्वरसर्वज्ञत्वाभ्यामप्रसिद्धाभ्यां गगनस्येव कुसुमैः संबन्धः कैश्चित् कल्पितः, स प्रतिषिध्येत—तथाऽप्यभ्युपेतार्थ-प्रतिषेधात् स्ववचनविरोधिन्येव प्रतिज्ञा स्यात्। सातिशयनिरतिशयानेकेश्वरसर्व-ज्ञव्यक्तिमत्सामान्ययोरीश्वरसर्वज्ञशब्दार्थत्वेनाभ्युपगमात् ॥

प्रसिद्धं हि लोके ईश्वरसर्वज्ञशब्दयोरुत्कर्षापकर्षयुक्तानेकव्यक्तिविषय-बुद्ध्युत्पादकत्वम्। न हि ग्रामाधिपतिरीश्वर इति द्वित्रिग्रामविषयाधिपतय उत्तरोत्तरेश्वरा न भवन्ति। यो वा कुटुम्बाधिपतिरीश्वरो न भवति सर्वैश्वासावर्थ-वानीश्वरशब्दः ॥

तथा वैयाकरणः सर्वज्ञ इत्युक्ते नाधिकविज्ञानयुक्तो न भवति। निरवधिकौ सावधिकौ वेश्वरसर्वज्ञावीश्वरसर्वज्ञशब्दयोरर्थावभ्युपगम्येयाताम्। अत-स्तत्प्रतिषेधादभ्युपगमविरोधिनी प्रतिज्ञा स्यात्, आत्माकाशादीनां महत्त्वस्य महच्छब्दार्थत्वप्रतिषेधवत् ॥

अथेश्वरसर्वज्ञौ निरवधिकौ न स्तः, अनुपलभ्यमानत्वात्, अनीश्वरद्वितीय-शिरोवदित्युच्येत, तथाऽपि शब्दार्थाभ्युपगमादभ्युपगमविरोधिनी प्रतिज्ञा ॥

सातिशयत्वादिभिरैश्वर्यसर्वज्ञत्वबीजादिलिङ्गैर्निरवधिकेश्वरसर्वज्ञत्वयोरुप-लभ्यमानत्वान्निरवधिकपरिमाणत्ववदित्यसिद्धिरनुपलब्धेः ॥

अथ अविशेष्यैवेश्वरशब्दार्थः सर्वज्ञो न भवतीत्युच्येत वस्तुत्वादिहेतु-भिरस्मदादिवदिति, तदा सर्वप्रमाणविरोधिनी प्रतिज्ञा स्यात्। प्रसिद्धेश्वरशब्दार्थस्य-प्राकृतसर्वज्ञत्वस्य सर्वप्रमाणसिद्धत्वात्। यथा ईश्वरशब्दार्थः [सर्वज्ञो न भवति] प्रमेयत्वादिभिर्हेतुभिर्घटादिवदित्युक्ते यत् ब्रूयात्तदेवाहं वक्ष्यामि ॥

इह सर्वज्ञशून्यं जगत्। कालो वा दिश आकाशं वा प्राणिमद्देशो वा प्राणिनो वा सर्वे सर्वज्ञशून्याः। प्रमाणानि वा सर्वाणि सर्वज्ञाविषयाणि। प्रमातारो वा सर्वज्ञस्याप्रतिपत्तारः, इत्येवंजातीयासु प्रतिज्ञासु निरवधिकेश्वरे सर्वज्ञे वा प्रतिषिध्यमाने, प्रसिद्धेश्वरसर्वज्ञशब्दार्थाभ्युपगमविरोधाः प्रतिज्ञादोषा वचनीयाः ॥

ननु च वन्ध्यासुतो नास्तीति, तच्छून्यं जगत् कालो वेति, प्रतिज्ञायमाने यथोक्तप्रतिज्ञादोषप्राप्तिर्भवेत्—नैष दोषः—वन्ध्यासुतसत्तालक्षणस्य प्रति-षेद्धव्यस्य वाक्यार्थस्येश्वरसर्वज्ञशब्दार्थवदप्रसिद्धत्वात् केवलशब्दप्रापितसन्निधान-बुद्धिमात्रप्रतिपन्ने पदार्थ[पदार्थे प्रतिषेध]व्यापारोऽस्तीति वन्ध्यासुतास्तित्वस्य (वा नास्तित्वस्य) नाभ्युपगमोऽस्ति। ततो नाभ्युपगतप्रतिषेधदोषः ॥

ननु चेश्वरः सर्वज्ञो न भवतीत्यत्रापि बुद्धिमात्रं प्राप्यमाणं प्रतिषिध्यते, न क्वचिदपि प्राप्नुवद्वस्तु (न) प्रतिषेद्धुं शक्यते प्रतिहस्तिनेव हस्ती। यदि च नञा वस्तु निराकरिष्यते, नञ्मात्रेणैश्वरवादिपक्षत्वमपि[पक्षोऽपि]निराकरिष्यते, (अतः) तस्मादिहापि बुद्धिमात्रप्रतिषेध इति नाभ्युपगतप्रतिषेधः प्रतिज्ञादोषः ॥

सत्यमेवम्। किं त्वस्ति विशेषः। प्रमाणसिद्धवस्तुविषया बुद्धिर्वस्त्वन्तरे कालविशेषे वा प्रतिषिध्यते वस्तुसामान्यात् प्राप्नुवती यथा घटो नास्तीति। क्वचिद्विनाप्यर्थेन बुद्धिरेव शब्दप्रत्युपनीतसन्निधाना कल्पितवस्त्वन्तरा प्रतिषिध्यते। यथा वन्ध्यासुतो नास्तीति ॥

यत्र तु प्रमाणान्तरसिद्धसद्वस्तुप्रतिषेधस्तत्रापि[स्ति]अभ्युपगतार्थप्रतिषेध-दोषः। यथा ईश्वरशब्दार्थः सर्वज्ञो न भवतीति। ईश्वरसर्वज्ञशब्दयोरभिवर्धमानेश्वर-सर्वज्ञव्यक्त्यनुगतसामान्यवचनत्वेन लिङ्गेन निरवधिकेश्वरसर्वज्ञसत्ताद्योतित्वं सिद्धमेव। महद्बहुसर्वानन्तपरिमाणादिशब्दवत् ॥

यथैवैते महदादिशब्दाः प्रसिद्धसातिशयमहदाद्यनुगतसामान्यार्थाभिधायिनः सन्तो निरवधिकमहद्बहुसर्वानन्तपरिमाणव्यक्तीनामस्तित्वावद्योतनलिङ्गा भवन्ति। महदादिसामान्यानां सातिशयव्यक्त्यनुगतानां निरवधिकमहदादिव्यक्तिव्यापन (रव्याक्षीण)शक्तित्वात्। न हि सन्तं व्याप्यमर्थं तद्व्यापकः सन्नर्थो न व्याप्नोतीति। निरवधिकात्तु परो व्याप्यो नास्तीति व्यापकस्य सामान्यस्य क्षयः व्याप्यविषयत्वेनैव प्रसिद्धत्वात्तत्र। तस्मात् प्रमाणसिद्धत्वादीश्वरसर्वज्ञशब्दार्थयोरभावं साधयतोऽभ्यु-पगतार्थप्रतिषेध एवेति दुष्टा प्रतिज्ञा ॥

न चेश्वरसर्वज्ञशब्दयोरतदर्थत्वमन्यार्थत्वं वा कर्तुं [वक्तुं] शक्यते। तथा शक्तिज्ञानैश्वर्याणां प्रतिपुरुषं समुच्चितानां सातिशयानां निरवधिकं तत्त्वं अतः[नानुन्मत्तः]प्रतिषेद्धुमुत्सहेतेत्यनुमानविरोधित्वं प्रतिज्ञायाः ॥

किं चान्यत्- परि[पर]कल्पितस्येश्वरस्य प्रतिषेधं कुर्वन्तः प्रत्यक्षपरचित्ता-निष्ठाः प्राप्नुवन्ति। परवाक्यादिति चेन्न —सातिशयत्वादिसर्वज्ञसाधकलिङ्ग-प्रतिपादकत्वदविशिष्टत्वात् परवाक्यस्य। तादृशवाक्यार्थप्रतिषेधे चाभ्युपगत-प्रतिषेधः, पूर्ववदेवानुमानविरोधश्च ॥

किं च—प्रमेयत्वादिहेतूनामपि असिद्धत्वम। कुतः? अस्माभिर्निरतिशय-ज्ञानैश्वर्यविशिष्टत्वस्याभ्युपगतत्वात्। अथ स्वयमपि तादृशमभ्युपगच्छेत्तदा सर्वज्ञसिद्धिः, अभ्युपगतत्वात् ॥

किं चान्यत्—अभ्युपगततादृक्प्रतिषेधे, यथा घटो घटो न भवति, वस्तुत्वात्, पटवदिति, एवमिहापि स्यात् ॥

किं च—निरवधिकस्यानभ्युपगमे, प्रमेयत्वादीनाम् [अ]पक्षधर्मत्वमाश्रयासिद्धत्वं च । तदभ्युपगमे हि किं साध्यं भवेत्? यो हि तृप्तवन्तं ब्रूयात् माऽत्रास्सीरिति, किं तेन कृतं स्यात् ॥

अथापि स्यात्—निरवधिकमीश्वरमभिसन्धाय तस्य सर्वज्ञत्वं निषेधामीति । नैदतपि युक्तम्—सर्वज्ञत्वस्यापि निरवधिकत्वात् ॥

अपि च सातिशयैश्वर्यसर्वज्ञत्वयोरुत्कर्षानुत्कर्षविषयत्वेन व्यभिचारान्नेश्वरसर्वज्ञशब्दमुख्याभिधेयत्वम् । यथा महदादयः शब्दा व्यभिचरितमहत्त्वादिषु घटादिष्वमुख्याः, नाकाशादिषु, तथैवात्रापि निरतिशयमैश्वर्यं सर्वज्ञत्वं चाव्यभिचारीति स एव मुख्यः शब्दार्थः । न च मुख्यनिराकरणं साधिमानमृच्छति ॥

किं च—यथा भवता अनुमानागमप्रसिद्धेश्वरस्य प्रमेयत्वादिधर्मविकल्पतया सर्वज्ञत्वं निराक्रियते, तथैव प्रमेयत्वादिभिरचेतनत्वमपि घटादिवदेव प्राप्नुयात् । अविरोधात् । यथा प्रमेयत्वं[अ]सर्वज्ञत्वेन व्याप्तमेवमचेतनत्वादिभिरपि ॥

प्रत्यक्षविरोध इति चेत्—इहापि अनुमानागमविरोधं किं कटाक्षेणापि नेक्षसे ॥

नापि च प्रमेयत्वादिधर्मसामान्येन सपक्षे विपक्षे वा किञ्चित् क्वचिदध्यारोपयितुं शक्यम् । वस्तुविषये सर्वत्र प्रमेयत्वादीनामस्तित्वात् । न मतिमोहनार्थः प्रमेयत्वाद्युपन्यासः ॥

अथ आत्मत्वादिति चेत्, मुक्तात्मवदज्ञत्वप्रसङ्गः स्याद्भवदीश्वराणाम् । प्रत्यक्षादिविरोध इति चेत्—अत्राप्यनुमानादिविरोधः पूर्ववदेव ॥

भूतभविष्यत्कालयोरपि ईश्वरस्यानुपलब्धार इतीदानीन्तनेश्वराणामुपलब्धृभिरनैकान्तिकं प्राणित्वादित्यादि । किं च अतीतानागतकालयोरपि सातिशयत्वादिलिङ्गैरुपलब्धवन्त उपलप्स्यमानाश्च प्राणिनः प्रमाणकुशलाः, प्रमाणकुशलत्वात्, अस्मदादिवत् ॥

अथ अशरीरत्वादसर्वज्ञः, मुक्ताकाशादिवत् इति चेत्—न—सशरीरत्वात्। व्यक्ताव्यक्तं हि सर्वमशरीरं सशरीरत्वादनित्येश्वरत्वं धर्माद्यपेक्षत्वादित्युक्तत्वादिति

चेत्—न—अशरीरत्वात् । सशरीराशरीरत्वविरोध इति चेत्—न—मुक्तमुच्यमानैकात्मनोऽशरीरत्वसशरीरत्वदर्शनात् । तत्र भिन्नकालत्वादविरोध इति चेत्—न—अत्रापि भिन्नकालाभ्युपगमात् ॥

किं च—युगपदीश्वरत्वादेव द्वयसम्भवः । सकरणता अकरणताऽपि ईश्वरत्वादेव युक्ता । तथा च श्रुतयः—"अशरीरं शरीरेषु[1]" इति । तथा "यः सर्वेषु भूतेषु तिष्ठन्[2]" इति । तथा 'यः[3] सर्वज्ञः सर्ववित्' इत्यादयः ॥

श्रुतीनां विप्रतिषेधार्थत्वादीश्वराप्रत्यायकत्वम् इति चेत्—न—अनन्यशेषत्वात् । न हि कर्मशेषत्वे श्रुतिलिङ्गादीनामन्यतमदपि प्रमाणमस्ति ॥

स्वाध्यायविधिपरिग्रहाद्दर्शपूर्णमासादिशेष इति चेत्—न—ज्योतिष्टोमादिवद्विध्यन्तरस्य भावात् । यथैव ज्योतिष्टोमादीनां (प्रथमप्र?)पृथक्प्रकरणादिकारणादन्योन्यशेषशेषिभावो नास्ति । तथैव 'मन्तव्यो निदिध्यासितव्यः'[4] इत्यादिविषयत्वान्नाग्निहोत्रादिशेषत्वं युक्तम् ॥

फलाभाव इति चेत्—न—"सर्वांश्च[5] लोकानाप्नोति सर्वांश्च कामान्यस्तमात्मानमनुविद्य विजानाति" इत्यादिफलमुद्दिश्य विधानात् ॥

अथैवमप्युपासनाविधिशेषत्वात् स्तुतिरेवेति चेत्—नात्यन्तमसता स्तुतिरस्ति । न हि "वायुर्वै क्षेपिष्ठा देवता" इति वायोरक्षेपिष्ठत्वम् । क्वचिदसताऽपि स्तुत्यादिसम्भव इति चेत्—न—अनुमानसिद्धस्येहोपादानात् ॥

अथ सर्वकार्यकरणयोगादीश्वरस्य सर्वप्राणिसुखदुःखादिसंबन्ध इति चेत्—न—निमित्तभेदात् । धर्मादिनिमित्तः संसारिणां शरीरादिसम्बन्धः । धर्मादिनिमि(त्तानां)त्तो दुःखादियोगः । नेश्वरस्य धर्मादयः । निरतिशयैश्वर्यादिहेतुत्वाच्छरीरादिकार्यकरणसंबन्धस्य । यथा ग्रहतदाविष्टयोः ॥

अथ चक्षुरादिकरणत्वादस्मदादिवत् सर्वानुपलब्धिरिति चेत्—न—सर्वविषयग्रहणसमर्थानां प्रतिबन्धकारणाभावात् । सर्वगतानां हि करणानां [अ]धर्मादिसंवरणेन स्वविषयसङ्कोचः क्रियते । यस्य पुनरावरणं प्रतिबन्धक[म]धर्मादि न विद्यते, तस्य तदभावादशेषस्वविषयग्रहणानि करणानीति न दुष्यति ॥

---

1. कठोपनिषत् . 2. 21.
2. बृ. उ. 3. 7. 15.
3. मु. उ. 1. 1. 9.
4. बृ. उ. 2. 4. 5.
5. छा. उ. 8. 7. 1.

अथ वा सर्वप्राणिकरणैः [ईश्वरः] पृथगात्मनः करणाभावेऽप्यावेशग्रह इव सर्वमनुभवति । न च प्राणिशून्यो विषयः कश्चिद्विद्यते, 'यः[1] पृथिव्यां तिष्ठन्' 'योऽप्सु तिष्ठन्' इत्येवमादिश्रुतेरन्तर्यामिनाम्न ईश्वरस्य सर्वेष्ववस्थितत्वश्रवणात् ॥

अपि वा प्रकृष्टमेव स(त्वं)त्वं नित्यानतिशायितशक्तिज्ञानेश्वरत्वधर्मकम्, सर्वगतत्वादाकाशवत् सर्वयोगि, सर्वार्थत्वात् सर्वविषयप्रकाशकम्, धर्माधर्मादिविप्रयोगादप्रतिबन्धशक्तिकं च इति अकायानिन्द्रियत्वपक्षेऽपीश्वरसर्वज्ञत्वसिद्धिः ॥

चक्षुराद्यपेक्षमेव चित्तस्य रूपादिप्रतिलम्भसामर्थ्यमिति चेत्—न—ऐश्वर्यधर्माद्यभावाभ्यां परिहृतत्वात् ॥

अपि च चक्षुर्ग्राह्यस्यापि चक्षुषा अग्रहणं लोके दृश्यते । चक्षुर्ग्राह्यं सत् सर्वं तमः सन्निमीलितलोचनैरपि स्वस्थान्तःकरणैरुपलभ्यते । तदेव चान्धतमसं विस्फारितनयनैरप्यन्यगतचित्तैर्नैव गृह्यते । यथा गृह्यमाण एवाकाशे प्रकाशः ॥

अथापि प्रकाशाभावमात्रमेव तमो न वस्त्विति ब्रूयात्–तच्च न–अभावस्य वस्तुतिरोधानसामर्थ्याभावात् ॥

अथ ग्रहणनिमित्तस्य प्रकाशस्याभावादेव घटाद्यग्रहणं, न वस्तुतिरोधायकं तम इति ब्रुवीत–न–चक्षुषः प्रकाशकत्वात् प्रकाशसाहायकापेक्षानुपपत्तिः । असति भिन्नजातीये वस्तुनि वस्तूनां तिरोधातृणि तत्र या च यावती च मात्रा प्रकाशकत्वाच्चक्षुषा प्रकाश्येत । न हि प्रदीपः प्रदीपान्तरद्वैतीयकापेक्षः प्रकाशयति ॥

किं चान्यत्—चक्षुषः प्रकाशान्तरसहायत्वापेक्षतायां च निशायामपि ताराधिपतिप्रकाशद्वितीयेन चक्षुषा दिवस इव रूपादिग्रहणप्रसङ्गस्तिरोधानस्यासति निमित्ते ॥

किं चान्यत्—अभावश्चेत्तमः, चन्द्रभासु निशायां भा(भव)न्तीषु तमसा मन्देन न प्रवर्तितव्यम् । सर्वात्मनैव हि तेन विनशनीयम् । भासां भावात् । भासां तु वस्तुत्वान्मन्दत्वपाटवादिविशेषो घटते, न(भावस्य)अभावस्य निर्विशेषत्वात् ॥

---

1. बृ. उ. 3. 7. 3. 4.

किं च—सहायाभावाच्चक्षुष उपलब्धिसामर्थ्याभावादग्रहणमित्येतदपि व्यभिचरति । यथा सत्यपि विद्युल्लताप्रकाशे तीव्रतरे विद्युल्लताविलासे च किं तद्दृष्टिर्नोपलभते । न हि विद्युतः सहायके दृष्टचकितत्वेनाग्रहणं विरोधाभावायुक्तम् ॥

किञ्च—चिकित्साशास्त्रे छाया मधुरशीतलेत्युच्यते । न ह्यवस्तुनो मधुरशीतलत्वम् । तथा चाक्षिपति पथ्यत्वम् । नाभावस्य पथ्यापथ्यत्वं ब्रूयुः ॥

प्रदीपाच्छायोपलब्धेश्च । अभावश्चेत्तमः, प्रदीपप्रभामण्डले प्रदीपाच्छाया कथं भवेत् । वस्तुत्वेऽपि विरोधादयुक्तमिति चेत्—न—विषसर्पयोरिव संभवात् । यथा प्राणवियोगकरमपि विषं पन्नगप्राणवियोगाय न पर्याप्नोति, तथा प्रदीपतच्छाययोरपि ॥

तस्माद्वस्तु तमः, प्रकर्षापकर्षवत्त्वात्, प्रभावत् । विरोधिद्रव्यापने-यत्वाच्च, घटवत् । उपलब्ध्र्व्यवधानकरत्वाच्च, भित्तिवदिति ॥

इतश्चेन्द्रियनिरपेक्षमप्यन्तःकरणमिन्द्रियविषयग्रहणाय समर्थम् । पिहित-कर्णविवरस्य घोषोपलंभात् । न च पिहितकर्णसंपुटस्य श्रोत्रान्तरमनुमातुं शक्यम् । बधिरस्यापि पिहितश्रोत्रपुटस्य तदग्रहणात् ॥

किञ्च—प्रतिज्ञाज्ञानेनापि रूपादिग्रहणमिन्द्रियनिरपेक्षं दृश्यते ॥

किञ्चान्यत्—स्मृतेश्चानुपपत्तिः स्यात् इन्द्रियनिरपेक्षस्य चित्तस्य सातिशयग्रहणसामर्थ्येऽपि । स्पष्टाश्च स्मृतयः स्वाप्ना रूपादिविषयाः ॥

यदि चक्षुराद्यन्तःकरणाभ्यां समन्विताभ्यां रूपग्रहणं पूर्वमपि निर्वर्तिष्यते, स्वप्नादावपि समुचिताभ्यामेव पर्यग्रहीष्यत । न चैवमस्ति । सुखादि-ग्रहणे स्वातन्त्र्यं चित्तस्य सर्वप्रसिद्धम् ॥

तस्मादालोकस्थानीयानीन्द्रियाणि चित्तस्य विषयग्रहणे स्वतन्त्रस्यैव स्वतः । तदुक्तम् '[1]इन्द्रियप्रनाडिकया' इति । तथा श्रुतिरपि—'मनसा[2] ह्येव पश्यति मनसा शृणोति' इति ॥

---

1 पा. 1. सू. 7. भाष्ये । 2. बृ. उ. 1. 5. 3.

अथोच्येत—इन्द्रियाणामालोकापेक्षावत् अन्तःकरणमपीन्द्रियसाहायकापेक्षमेव ग्राहकमिति—तन्न—व्यभिचारात् । रात्रिञ्चराणां विभिन्नव्यालोकद्वैतीयकेन दिवस इव रूपग्रहणम् । सत्यपि प्रकाशे न रूपस्य ग्रहणमुलूकादिभिर्दिने ॥

किञ्च—साधनापेक्षस्य विज्ञानसाधनादृतेऽपि तुलादौ दर्शनमात्रेणैव सुवर्णादिपरिमाणज्ञानं दृश्यते ॥

अथ चेद्ब्रूयादानर्थक्यं चक्षुरादीनामिति—स वक्तव्यः—तुलादिवदेवान्यत्रार्थवत्त्वमिन्द्रियाणामिति । यथैव तुलादिविषयवैमल्यप्रकर्षात् पुरुषस्य विनापि तुलादिसाधनेन दर्शनमात्रादेव कनकादिवस्तुपरिच्छेदकौशलं, तथैवान्तःकरणस्यानपेक्षितचक्षुरादिसाहायकस्यापि वैमल्यप्रकर्षाद्रूपादिग्रहणसामर्थ्यं न विहन्यते ॥

नापि ह्यनेकनिर्वर्तनीयं क्रियाजातमेकेन नाभिनिर्वर्त्यते । दृश्यन्ते च बहुभिरुत्तोल्यमानं शिलादिकमद्वितीया हस्तिपुरुषादयः केचिदुत्तोलयन्तः ॥

तथैवेन्द्रियसहायेनान्येषामन्तःकरणेन गृह्यमाणा रूपादयः परमेश्वरचित्तसत्त्वेनानाकलित(वकर्णित)चक्षुरादिपरिस्पन्देन केवलेनैव गृह्यन्ते । काष्ठागतत्वाद्वैमल्यशक्त्यैश्वर्यप्रकर्षस्य ॥

संसारिणां ततो निकृष्टत्वादविद्यादिमलैनैश्वर्यशक्तिज्ञानादीनामिन्द्रियसहकारित्वापेक्षित्वमन्तःकरणस्य । शिलादिसमुत्तोलन इव हीनबलानाम् ॥

ये(षां) पुनः संसारिण एव सन्त ईश्वरीभवन्ति बुद्धर्षभादयः, तेषां निरतिशयशक्तिज्ञानैश्वर्यानुपपत्तिः । कालपरिच्छेद्यत्वात् । अभ्युपगच्छन्ति च तद्दर्शनश्लाघिनः कालपरिच्छेदनीयकं तेषाम् ॥

नास्मदीश्वरस्य कालपरिच्छेद्यता । तत्कालैस्तदाद्यकालैश्च बुद्धादिभिरपरिज्ञातैश्वर्यादिसातिशयत्वादिलिङ्गैरनुमेय एवासौ । नामुष्मिन् काल उत्पन्न उत्पद्यत उत्पत्स्यमान इति त्रिधा कैश्चिदनुमीयते । निरतिशयत्वविरोधो हि तथा[दा]स्यात् ॥

तस्मात् बुद्धादीनां सिद्ध्यपेक्षत्वात्, पूर्वबुद्धानां कालाधिक्यप्राप्तेरुत्तरकालबुद्धस्यापि न निरतिशयशक्त्यैश्वर्यज्ञानत्वं विरुद्धम् । अथ तुल्यशक्तिज्ञानैश्वर्याणामेव तेषां समानराज्यराजानामिवासमानकालत्वमिति ब्रूयात्, तथापि बुद्धान्तरकालस्य व्याप्त्यभिलाषनिघातान्निरतिशयैश्वर्याद्यभावः ॥

[ भाष्यम् ]

सामान्यमात्रोपसंहारे च कृतोपक्षयमनुमानं न विशेषप्रतिपत्तौ समर्थमिति । तस्य संज्ञादिविशेषप्रतिपत्तिरागमतः पर्यन्वेष्या । तस्यात्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम्, ज्ञानधर्मोपदेशेन कल्पप्रलय-महाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति । तथा चोक्तम्—आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्यात् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाचेति ॥ २५ ॥

[ विवरणम् ]

अभिलषति हि कश्चित् बुद्धान्तरं वशीकर्तुम्, तद्विषयं च व्याप्तुम् । अनियतत्वादिच्छायाः । बुद्धान्तरावशीकरणे च सर्ववशित्वं ही(नी)येत ॥

अथ चेदुच्येत, बुद्धान्तरस्याननुग्राह्यत्वाद्रागाद्यभावाच्च तद्विषयव्याप्तावन-भिलाष इति—अत्रोच्यते—यथैव प्राप्तबुद्धत्वस्य कंचित्कालमवस्थानमभिलाष-पूर्वकम्, तथा बुद्धान्तरकालावस्थानाभिलाषेणावश्यं भवितव्यम् ॥

अनुग्राह्यप्राण्यन्तरभावाच्च कालान्तरावस्थानाभिलाषेण युक्तं भवितुम् । न च भविष्यता बुद्धेन सर्वे प्राणभृतोऽनुग्रहीष्यन्ते ॥

बुद्धत्वस्य च दुःखाद्यात्मकत्वेऽपि प्राण्यनुग्रहार्थत्वाद्बुद्धस्थितेः कालान्तरावस्थानेच्छया भवितव्यमेव । सिद्धेश्च प्रागविद्यादिपरामर्शात्, बुद्धस्वरूपस्य च दुःखशून्याद्यात्मकत्वस्य तैरभ्युपेतत्वात्, बुद्धर्षभाद्यन्यतीर्थ-करणात्[करात्]निरतिशयशक्तिज्ञानैश्वर्यानुपपत्तिः ॥

कालानवच्छेदात्तु नैते दोषा अस्मदीश्वरे क्रमन्ते । शक्तिज्ञानैश्वर्याणां तु निरवधिकत्वानुमानात् सातिशयत्वानवस्थितत्वादिदोषः नात्माकाशादीना-मिवातिशङ्कनीयः ॥

तथा च दर्शयति—सामान्यमात्रोपसंहारे कृतोपक्षयमनुमानम् इति । निरतिशयशक्तिज्ञानैश्वर्ययुक्तपुरुषविशेषसत्त्वसामान्यमात्रोपसंहारे कृतोपक्षयं कृत उपक्षयो यस्यानुमानस्य तत्कृतोपक्षयं सातिशयत्वादिति । तदुक्तमनुमाने—यत्र प्राप्तिस्तत्र गतिमात्रमिति । तस्मान्नेश्वरसंज्ञागुणादि-विशेषाणां सतामपि प्रतिपादने समर्थम् । सामान्यमात्रोपसंहारपरत्वात् ॥

तदेतदुक्तं भवति । यदैवं सतामपि गुणानां सामान्यप्रतिपादनकृतक्षयत्वान्न प्रतिपादकमनुमानम्, किमङ्ग पुनरत्यन्तासम्भाव्यमानसन्निधीनामनुमेयधर्मविरुद्धानामशक्यज्ञानधर्माधर्मैश्वर्यादीनां [न]तत्प्रत्यायकमिति ॥

अत एव च विरुद्धप्रतिसाधनानुपपत्तिः । सर्वज्ञास्तित्वानुमानवत् प्रथमं तदभावप्रतिपादकानुमानाप्रवृत्तेः । न ह्यनुमानस्य परोक्त्युदीक्षाधर्मत्वमस्ति । न हि धूमदर्शनेनाग्न्यनुमाने वक्त्रन्तरोक्तिरुदीक्ष्यते ॥

न च स्वयमेव सर्वज्ञास्तित्वं नास्तित्वं वा बुद्धि(प्रति)पूर्वमाशङ्क्यते । घटादिवत् सर्वज्ञसद्भावस्य स्वयमनभ्युपगमात् । न ह्यनिर्धारितशशस्वरूपः शशे विषाणमस्ति नास्तीति कश्चिदाशङ्कते ॥

परवाक्यात् प्रतिपद्याशङ्कत इति चेत्—परेणापि कथमप्रसिद्धेश्वरसद्भावेनाशङ्कितमिति वक्तव्यम् । अथ परस्य भ्रान्तिरिति चेत्–न सामान्यानुपलम्भे भ्रान्तिकारणमस्ति । न हि शुक्तिकायां पिकभ्रमः कस्यचिदुपजायते । तस्मादाह—**संज्ञादिविशेषप्रतिपत्तिरागमतः पर्यन्वेष्या** इति । वेदेतिहासपुराणयोगधर्मशास्त्रादागमतः पर्यन्वेष्या ॥

**तस्यात्मानुग्रहाभावेऽपि** तस्यात्मार्थमवाप्तव्याभावात् **भूतानां** चाविद्यापङ्कनिमग्नानां संसारसागरोत्तरणोपायप्लवोपदेश्यन्तरस्याभावात् **तदनुग्रहः प्रयोजनम्** । ज्ञानधर्मोपदेशेन येऽनन्यशरणास्तस्मिन् सर्वात्मना निवेदितात्मानस्तान् **कल्पप्रलयमहाप्रलयेषु** ईश्वरानुगृहीतागमज्ञानविशेषेष्वाचार्येषु प्रलीनेषु पुनःपुनर्जातकारुण्यामृतः सन् **उद्धरिष्यामीति** प्रवर्तत इति वाक्यशेषः ॥

**तथा चोक्तमादिविद्वानिति**—आदौ विद्वान् **आदिविद्वान्** रजस्तमोभ्यामनभिभूतज्ञान इत्यर्थः । ज्ञानधर्मादि वा तत आदीयते इत्यादिः, आदिश्चासौ विद्वांश्च **आदिविद्वान् निर्माणचित्तं** संकल्पमात्रनिर्मितं योगिचित्तम् आवेशग्रहवदुपदेशनार्थम् **अधिष्ठाय भगवान् परमर्षिः** परमदर्शन इत्यर्थः । परमत्वं चागमतः । दर्शनार्थस्य वा गत्यर्थस्य वा धातोः ऋषेर्ग्रहणम् । परमर्षिरीश्वर एव कपिलनारायणादिसंज्ञः **आसुरये प्रोवाचेति** ॥

तस्मात् प्रधानपुरुषव्यतिरिक्तः सर्वप्राणिभावकर्मफलपरिस्फुरणज्ञानात्तदनुग्रहकारणम् ईश्वरः सिद्धः । स प्रकृष्टसत्त्वघनोपादान ईश्वरः कथं कर्ता ? कथं चानुगृह्णाति ? इत्येवमादि न चोदयितव्यम् । **आगमतः पर्यन्वेष्या** इत्युक्तत्वात् । अनुमानस्य च तद्विषयस्यानुपपत्तिः विशेषसंबन्धाग्रहणादिति ॥ २५ ॥

[ भाष्यम् ]

स एषः—

[ सूत्रम् ]

## (स) पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥ २६ ॥

[ भाष्यम् ]

पूर्वे हि गुरवः कालेनावच्छिद्यन्ते । यत्रावच्छेदार्थः[1] कालो नोपावर्तते स एष पूर्वेषामपि गुरुः । यथाऽस्य सर्गस्यादौ प्रकर्षगत्या सिद्धः, तथाऽतिक्रान्तसर्गादिष्वपि प्रत्येतव्यः ॥ २६ ॥

[ विवरणम् ]

सः यथोक्तरूपः परमेश्वरः पूर्वेषामपि गुरूणाम् अभ्युदयनिःश्रेयससर्वसाधनसाध्यसंबन्धोपदेशिनां गुरुः तेषामपि ज्ञानोपदेशस्य कर्तेत्यर्थः । तदुद्भवत्वात् सर्वज्ञानानाम् । यथा ज्वलनलवणजलधिसमुद्भवा विष्फुलिङ्गलवणकणाः ॥

तस्य चादिविद्वत्तामवोचाम कालेनानवच्छेदादिति । अतीतानागतप्रत्युपादीयमानत्वविशिष्टेन कालेनान्ये गुरवोऽवच्छिद्यन्ते । स त्वीश्वरः सर्वदा मुक्तेश्वरत्वेन तैरप्यसमाभिरिवानुमेयः ॥

कस्मात् पुनस्तस्य वस्तुत्वे गुरुत्वसामान्ये च सति नावच्छेदकः काल इति चेदाह—यत्रावच्छेदार्थः कालो नोपावर्तत इति । यस्मिन्नीश्वरे विषये अवच्छेदार्थः प्रस्थादिवत् परिच्छेदकरः नोपावर्तते न परिच्छेदकत्वेनेश्वरं विषयीकरोति सर्वपरिणामिवस्त्ववच्छेदकरोऽपि सन् ॥

ननु चेश्वरप्रकृष्टसत्त्वस्य प्रधानकार्यत्वात्, प्रधानकार्यस्य च कालावच्छेद्यत्वात्, कस्मात्तत्सत्त्वं नावच्छिद्यते पुरुषस्वरूपं हि सर्वेषामेव कालानवच्छेद्य(मिति नाशङ्कनीय)मपरिणामित्वात् पुरुषस्य ॥

अथ मन्येथाः—तन्त्रान्तरप्रसिद्धेश्वरवत् सत्त्वनिरपेक्ष ईश्वर इति—तदयुक्तम्—प्रकृष्टसत्त्वोपादानाभ्युपगमात् ॥

अथापि मन्वीथाः—ईश्वरसत्त्वात् प्रवृत्तमेव कार्यमवच्छिनत्ति कालो नेश्वरसत्त्वमिति—तदप्ययुक्तम्—व्यक्तस्य परिच्छेद्यत्वात् । व्यक्तं चेश्वरसत्त्वम् ॥

---

1. अयं विवरणानुसारी भाष्यपाठः । इदानीन्तनमुद्रितग्रन्थस्थः वाचस्पतिसम्मतश्च पाठस्तु यत्रावच्छेदार्थेन इति ।

अथाप्यभिसन्दधीथाः—प्रधानावस्थमेवेश्वरसत्त्वमिति—तदनुपपन्नम्—ज्ञानानुपपत्तेः ॥

अथापि प्रतिपद्येथाः—सत्कार्याभ्युपगमाद्बीजफलवल्लरीकुसुमादिवज्ज्ञानादीनां प्रधानावस्था यत्सत्त्वमेवेति—तच्च न साधु—व्यवहारयोग्यत्वात्। सर्वेषां च तथा सत्यनवच्छेद्यत्वं ज्ञानादिसत्तामात्रसम्बन्धाविशेषात् प्राप्नुयात् ॥

अथापि ब्रुवीथाः—व्यक्तत्वे सत्यपि कार्याणां कस्यचित् परिच्छेद्यत्वं कालीनं कस्यचिन्नेति—तच्च न—न्यायविरोधात् ॥

अथापि प्रत्यवतिष्ठेथाः, ईश्वरसत्त्वस्य कालापरिच्छेद्यत्वमागमसिद्धमिति—तच्च न—अवद्योतकत्वादागमस्य ॥

अथाप्याचक्षीथाः—विद्यमानस्यैव कालापरिच्छेद्यत्वस्याज्ञातस्यावद्योतक आगम इति—तच्चापि न—निरोधादिसमनुष्ठाननिमित्तत्वात् काला(न)वच्छेद्यो वैमल्यादनवच्छेद्यश्चेति विरुद्धं स्यात् ॥

अत्रोच्यते—ईश्वरसत्त्ववैमल्यप्रकर्षापेक्षत्वात् कालानवच्छेद्यत्वस्यादोषः ॥

यथा अन्येषां गुरूणां योगधर्मादिसमनुष्ठाननिमित्तत्वात् कालानवच्छेद्यो वैमल्यप्रकर्षः, तथा न भगवतः। कथम्? सर्वदाऽत्यन्ततिरोभूतरजस्तमस्त्वादनपेक्षितधर्मादिनिमित्तं सकलार्थावद्योतकरं कालानवच्छेद्यं सत्त्वस्वरूपवद्भगवत्सत्त्वे ज्ञानम् ॥

तथा तत्कार्यमप्युत्कर्षः कालेन नावच्छिद्यते। यथा चाग्नेरुष्णप्रकाशावग्नौ कालानवच्छेद्यौ, तथा भगवत्सत्त्वस्य वैमल्यज्ञानप्रकर्षास्तत्सत्त्वे कालानवच्छेद्यतामुपयान्तीत्येतदपेक्षयाभिहितं यत्रावच्छेदार्थः कालो नोपावर्तत इति। न स्वकार्यापेक्षया ह्युच्यते ॥

गुरुत्वं हि नावधिमत्। तदेवाह—यथाऽस्य सर्गस्यादौ ज्ञानवैमल्यप्रकर्षगत्या सिद्धः सर्गादिजन्मनामनुमेयतया सिद्धः आगमतश्चाज्ञायि, तथाऽतिक्रान्तसर्गादिष्वपि तत्कालजन्मनां ततः प्राक्तनानामपि सिद्धः। तथा भविष्यत्कालेऽप्यनुमानागमाभ्यामवगम्यते ॥

अस्य च सूत्रस्येदं प्रयोजनम्—यथा दृष्टा गुरवो ज्ञानधर्माद्युपदेशित्वादनन्यशरणैरनवरतमुपास्यन्ते, तथा भगवानयमपि सर्वगुरूणामपि गुरुत्वात्ततोऽपि विशेषेण नारायणादिनामा(दीनाम)नन्यचेतोभिः स्वहृदयेनानिशं धारयितव्य इति ॥

[ सूत्रम् ]

**तस्य वाचकः प्रणवः ॥ २७ ॥**

[ भाष्यम् ]

वाच्य ईश्वरः प्रणवस्य ।

[ विवरणम् ]

यथा दृष्टगुरव उपासनेनाभिमुखीकृतास्तदुपासनपराननुगृह्णन्ति, तथाऽयं परमगुरुरप्यभिध्यानमात्रेणानुग्रहं करोति । तथा च [1]श्रुतिः—

" यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥" इति ।

[2]स्मृतिरपि—

" मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ।
निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥" इति ॥ २६ ॥

ईश्वरप्रणिधानादित्युक्तं, स कथं प्रणिधातव्यः ? किं च तत्प्रणिधानसाधनम् ? येन प्रणिधाता प्रणिधत्त इति तत्प्रणिधानसाधनप्रतिपादनार्थमाह— तस्य वाचकः प्रणव इति । तस्य ईश्वरस्य यथोक्तलक्षणस्य **वाचकः** अभिधायकः प्रणवः सास्नादिमत इव गोशब्दः ॥

प्रकर्षेण नूयते स्तूयते अनेनेति प्रणवः । यदि वा, प्रणौति स्तौतीश्वरमिति प्रणव ओङ्कारः । प्रणिधीयते चानेन भगवान् प्रणिधातृभिरिति, प्रणमन्ति वा अनेनेति, प्रणिधत्ते वा तेन भगवन्तं चेतसीति, धाञो वकारोपजनं कृत्वा । शब्देन हि परोक्षाणामर्थानां मनसि प्रणिधानं मेरुरिन्द्र इति यथा ॥

तस्य चोङ्कारस्य वाच्यः ईश्वरः । अन्वर्थं खल्वपि निर्वचनम् । अवतेः रक्षणाद्यर्थान्मनिष्टिलोपश्चेति । प्रणिधातॄन् संसारादवतीति, गमयति वा संसारिणं निर्वाणमिति, निरतिशयं वा प्रीणयति, समाध्याद्यनुग्रहेणावगमयति वा परमार्थमित्येवमाद्यर्थानुगतम् सर्वथा तु नेदिष्ठं प्रियं नाम भगवतः ॥

---

1. सुवालोपनिषत् ।
2. श्रीमद्भगवद्गीता 11. अध्यायः 55. श्लोकः ।

[ भाष्यम् ]

किमस्य सङ्केतकृतं वाच्यवाचकत्वम्? अथ प्रदीपप्रकाशवदवस्थितम्? इति।

स्थितोऽस्य वाच्यस्य वाचकेन सह सम्बन्धः। सङ्केतस्त्वीश्वरस्य स्थितमेवार्थमभिनयति। यथा—अवस्थितः पितापुत्रयोः सम्बन्धः सङ्केतेनावद्योत्यते 'अयमस्य पिता' 'अयमस्य पुत्रः' इति।

[ विवरणम् ]

तेन हि मनसि सततं प्रणिधीयमानः प्रसीदति। तथा चानेकशः श्रुतयः—'ओं खं [1]ब्रह्म' '[2]ओमिति ब्रह्म' इत्यादयः। स्मृतयश्च 'ओं[3] तत्सत्' इति। 'ओं [4]विश्वं विष्णुः' इत्यादयः। ओंशब्दस्य कृदन्तं यन्मान्तमित्यव्ययत्वाद्विभक्तिनिवृत्तिः।

किमस्य सङ्केतकृतं वाच्यवाचकत्वं? अथ प्रदीपप्रकाशवदवस्थितमिति। किं चातः?। यदि तेन भगवता अन्यैर्वा संव्यवहारार्थमस्य नामेदमस्त्विति संकेतितम्, ततोऽस्य प्रागोंशब्दावाच्यत्वादोंशब्देन वा प्रणिधातारः प्राण्यधिषत, अन्येन वा नामान्तरेणाधीतवन्तस्तथेदानीमप्यस्तु, किमोङ्कारविशेषवचनेन। अथापि प्रदीपप्रकाशवदवस्थितं, तथाऽपि प्रथमश्रवणेऽपीश्वर उपलभ्येत यथा प्रकाशेन सविता॥

किं च—सङ्केतोऽप्यनर्थकः स्थितसम्बन्धत्वात्। अथापूर्वं सङ्केत्येत, पूर्वोक्तदोषप्रसङ्ग इति मन्यते॥

अत्रोच्यते—स्थितोऽस्य वाच्यस्य वाचकेन सम्बन्धो यदि नित्यः शब्दो यदि वा अनित्यः, सङ्केतस्तु तमेव स्थितं सम्बन्धमवज्ञलयति॥

ननु चोक्तं—स्थितश्चेत् प्रथमश्रवणेऽपि तं प्रतीयुरिति। उच्यते—न हि प्रत्याय्यप्रत्यायकसम्बन्धः शब्दार्थयोः स्थितोऽपि सन्निन्द्रियेण गृह्यते। यथेन्द्रियार्थयोः। अप्रत्यक्षे हि वाच्यवाचकशक्ती॥

ततश्च येनोच्यते शब्दादर्थोऽनुमेय इति—तदसत्। सम्बन्धाग्रहणात्। परप्रयोगव्यङ्ग्यत्वाच्च सम्बन्धस्य। न ह्यनुमानं परप्रयोगमपेक्षते॥

---

1. बृ. उ. 5. 1. 1.
2. तै. उ. 1. 8. 1.
3. भ. गी. 17. 23.
4. विष्णुसहस्रनामस्तोत्रम्।

[ भाष्यम् ]

सर्गान्तरेष्वपि वाच्यवाचकशक्त्यपेक्षस्तथैव सङ्केतः क्रियते । सम्प्रतिपत्तिनित्यतया नित्यः शब्दार्थसम्बन्ध इत्यागमिनः प्रतिजानते ॥ २७ ॥

[ विवरणम् ]

अथ ब्रूयादनुमितात् संबन्धादर्थानुमानमिति । स वक्तव्यः कथमनुमितः शब्दार्थसम्बन्धः ? इति ॥

स चेत् ब्रूयात्—कार्यदर्शनादर्थं हि प्रतीत्य पश्चादनुमिनोति तत्संबन्धम् । यथा चक्षुषा रूपमुपलभ्य चक्षुस्संबन्धमिति । स प्रतिवक्तव्यः—सिद्धा तर्हि विनाऽनुमानेन शब्दादेव प्रतिपत्तिरिति ॥

यो हि प्राष्टपाकेनैव कृतार्थः किं तस्य किलोशिपाकेन । अथासकृत् प्रयोगदर्शनाद्गृह्यते सम्बन्धः, यथाऽग्निधूमयोरिति चेत्— न तु ब्रूमः न हि सहस्रेष्वपि प्रयोगेषु प्रत्यक्षेण शब्दार्थयोः सबन्धो गृह्यते यथाऽग्निधूमयोरादावपि संबन्धो गृह्यते । वाक्येऽप्ययमेव ॥

तस्मादवस्थितमेव वाच्यस्येश्वरस्य वाचकेन प्रणवेन सम्बन्धमवद्योतयति सङ्केतो यथा स्थितं पितापुत्रसंबन्धम् । सङ्केतोपायापेक्षत्वात् प्रथमश्रुतान्नार्थः प्रतीयते । यथा चक्षुष आलोकाभावे ॥

ननु च शब्दानित्यत्वपक्षे कथमनित्ये संबन्धिनि नित्यः संबन्ध इति । न ह्यनित्ययो रज्जुघटयोः संबन्धो नित्यः स्यात् । उच्यते—यथा प्रमाणप्रमेययोरिन्द्रियविषययोश्च क्रियाकारकाणां संबन्धः स्थित एवानित्येष्वपि संबन्धिषु, तद्वदत्रापि स्थित एवाव्यभिचारेण संबन्धः **सर्गादिष्वपि वाच्यवाचकशक्त्यपेक्षः सङ्केतः** ॥

यथैव रूपचक्षुषोर्ग्राह्यग्राहकशक्त्यपेक्षयैव सर्गादौ सर्गस्तथेहापि **वाच्यवाचकशक्त्यपेक्षयैव सङ्केतः क्रियते** ॥

**सम्प्रतिपत्तिनित्यतया** वृद्धपरम्परयैव गम्यगमकभावेन शब्दार्थयोः संप्रतिपत्तिर्नित्या नान्यथेति **आगमिनो** वेदवादिनः **प्रतिजानते** । सम्प्रतिपत्तिश्च शब्दार्थसंबन्धस्य हेतुस्तदेषाम् ॥

तदेतदुक्तं भवति—यद्यागमिपक्षः स्यादथान्यपक्षः, सर्वथा स्थित एव संबन्धः पितापुत्रयोरिव सङ्केतेनाभिव्यज्यत इति ॥

[ भाष्यम् ]

विज्ञातवाच्यवाचकत्वस्य योगिनः—

[ सूत्रम् ]

**तज्जपस्तदर्थभावनम् ॥ २८ ॥**

[ भाष्यम् ]

प्रणवस्य जपः, प्रणवाभिधेयस्य चेश्वरस्य भावनम्। तदस्य योगिनः प्रणवं जपतः प्रणवार्थं च भावयतः चित्तमेकाग्रं सम्पद्यते। तथा चोक्तम्—

"स्वाध्यायाद्योगमासीत योगात् स्वाध्यायमामनेत्।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते॥" इति ॥ २८ ॥

किञ्चास्य भवति—

[ विवरणम् ]

वाच्यवाचकयोरस्थितसंबन्धत्वे तु प्रणवरूपेणाभिमुखीभवतीश्वर इति नावकल्पते। न हि पाच्यपाचकसंबन्धे न च स्थिते पाचकाग्न्युपादानं पाकार्थं कल्पते। स्थिते तु वाच्यवाचकसंबन्धे भगवदाराधनसाधनस्य प्रणवस्योपादानमवकल्पत इति तत्प्रतिपादनार्थं सर्वं भाष्यम् ॥ २७ ॥

एवमवगतवाच्यवाचकसंबन्धस्य योगिनः परमेश्वरप्रसादनं कथं क्रियत इति तदर्थमाह—**तज्जपस्तदर्थभावनम्** तस्येश्वरवाचकस्य प्रणवस्यार्धचतुर्मात्रस्य त्रिमात्रस्य वा जपः मनसोपांशु वा आवर्तनं जपः, तदर्थस्य चेश्वरस्य प्रणवेन वाचकेन समर्पितस्य बुद्धौ समारोपितस्य भावनमभिध्यानं **तदर्थभावनम्**। कर्तव्यमिति वाक्यशेषः ॥

तदेवमुभयं कुर्वतो योगिनः **चित्तमेकाग्रं सम्पद्यते**। एकाग्रसम्पत्तिं च तदाराधनफलं दर्शयति—**तथा चोक्तम्—स्वाध्यायाद्योगमा(तिष्ठेत्)सीत** **स्वाध्यायात्** प्रणवजपादीश्वरं प्रत्यवनतचित्तः सन् **योगमासीत**। तदर्थमीश्वरं ध्यायेत्। (स्थयत्)तदर्थध्यानाच्चाप्रचलितमनाः **स्वाध्यायं** प्रणवमामनेत् मनसाऽभिजपेत्। मानसोऽभिजपः प्रशस्यते ध्यानस्यासन्नतरत्वात्। मा विषयप्रवणचित्तो भूदिति। एवं **स्वाध्याययोगसम्पत्त्या** तद्विरोधिना प्रत्ययान्तरेणानभिघातः **स्वाध्याययोगसम्पत्तिः**। तया च प्रणवजपपरमेश्वरध्यानसम्पत्त्या **पर आत्मा** परमेष्ठी **प्रकाशते** योगिन इति ॥ २८ ॥

[ सूत्रम् ]

ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥

[ भाष्यम् ]

ये तावदन्तराया व्याधिप्रभृतयः, ते तावदीश्वरप्रणिधानान्न भवन्ति । स्वरूपदर्शनमप्यस्य भवति । यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः केवलोऽनुपसर्गः, तथा अयमपि बुद्धेः प्रतिसंवेदी यः पुरुषस्तमधिगच्छति ॥ २९ ॥

अथ केऽन्तरायाः ? ये चित्तस्य विक्षेपाः । के पुनस्ते ? कियन्तो वा ? इति—

[ विवरणम् ]

किञ्चास्य भवति ? पूर्वसूत्रे चित्तमेकाग्रं सम्पद्यत इत्युक्तमेकं फलम् , तदपेक्षया किञ्चेति चकारः । किञ्चान्यदप्यस्ति फलम् ? आहोस्विच्चित्तैकाग्र्यमेवेति, तत्राह—ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च । ततः तस्मादीश्वरप्रणिधानात् प्रत्यक्चेतनाधिगमः प्रत्यक् स्वबुद्धिं चेतयत इति प्रत्यक्चेतन आत्मा, तस्य अधिगमो यथावत्स्वरूपसंवेदनम् ॥

ननु चाधिगत एव प्रत्यात्मं पुरुषोऽहं सुखी दुःखी चाहमिति । एवं प्रसिद्धं, ततः किं विशेषेणोच्यते इति । सत्यमेवम्—किं त्वविशिष्टोऽसौ प्रत्ययश्चित्तस्य वृत्त्या । किञ्च—सुखी दुःखी चाहमिति सुखिदुःखिसामानाधिकरण्यादिहाहंप्रत्ययस्य चित्तवृत्तिविषयत्वादविद्याप्रत्यय एव प्रसिद्धिः ॥

कथं तर्ह्यस्याधिगम इत्याह—यथैवेश्वरः पुरुषः शुद्धः क्लेशादिमलवर्जितस्तत एव प्रसन्नः स्वच्छस्तत एव केवलो निस्त्रिगुणस्तत एव निरुपसर्गस्तापत्रयवर्जितः प्रकृष्टसत्त्वप्रतिसंवेदी च तथाऽयमपि मदीयः पुरुषः शुद्धः प्रसन्नः केवलो निरुपसर्गो बुद्धेः प्रतिसंवेदीत्यवगच्छति ॥

यथा तथेति च दृष्टान्तदार्ष्टान्तिकनिर्देशादीश्वरक्षेत्रज्ञयोर्भेद उक्तो भवति । बद्धमुक्तोपपत्तेश्च । प्रधानस्य पारार्थ्योपपत्तेः । क्षेत्रज्ञानां चात एव परस्परभेदः ॥

[ सूत्रम् ]

**व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः ॥ ३० ॥**

[ भाष्यम् ]

नवान्तरायाश्चित्तस्य विक्षेपाः । सहैते चित्तवृत्तिभिर्भवन्ति । एतेषामभावे न भवन्ति पूर्वोक्ताश्चित्तवृत्तयः । व्याधिः धातुरसकरणवैषम्यम् । स्त्यानम् अकर्मण्यता चित्तस्य । संशयः उभयकोटिस्पृक् विज्ञानम् 'स्यादिदमेवं नैवं स्यात्' इति । प्रमादः समाधिसाधनानामभावनम् । आलस्यं कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः । अविरतिः चित्तस्य विषयसम्प्रयोगात्मा गर्धः ।

[ विवरणम् ]

किञ्चास्य भवति ? ये तावदन्तराया व्याधिप्रभृतयो वक्ष्यमाणास्तेऽपि चास्येश्वरप्रणिधानान्न भवन्ति ॥ २९ ॥

तत्र के तेऽन्तरायाः ? कियन्तो वेत्याह—व्याधिस्त्यानेत्यादि । संख्यया तावन्नवान्तरायाः । स्वरूपेण च व्याध्यादयः । व्याधिर्धातुरसकरणवैषम्यम् । धातवो वातपित्तश्लेष्माणस्तेषां विषमभावो वैषम्यं, तच्च वातपित्तश्लेष्मभूयिष्ठद्रव्योपयोगादिभ्यो जायते । स्वयोन्यागमे हि धातूनां वृद्धिमाचक्षते ॥

रस उपयुक्ताहारस्य परिणामविशेषः । स च सप्तधा, रसकार्यत्वाद्रस इत्युच्यते रसलोहितमेदोमांसास्थिमज्जाशुक्राख्यः । तस्य वैषम्यं वृद्धिक्षयौ । करणवैषम्यमन्धबधिरत्वादि ॥

स्त्यानमकर्मण्यता चित्तस्य स्तिमितम् । संशयः स्थाणुर्वा पुरुषो वेति विरुद्धोभयकोटिस्पृक् प्रत्ययः ॥

प्रमादः समाधिसाधनानामभावनमशीलनम् । आलस्यं कायस्य चित्तस्य च गुरुत्वादप्रवर्तनम् । अविरतिश्चित्तस्य विषयसम्प्रयोगस्वभावो विषयसम्प्रयोगनिमित्तो वा गर्द्धः अभिकाङ्क्षा तृष्णा ॥

[ भाष्यम् ]

भ्रान्तिदर्शनम् विपर्ययज्ञानम् । अलब्धभूमिकत्वं समाधिभूमेरलाभः । अनवस्थितत्वं यल्लब्धायां भूमौ चित्तस्याप्रतिष्ठा । समाधिप्रतिलम्भे हि सति तदवस्थितं स्यात् इति । एते चित्तविक्षेपा नव योगमलाः, योगप्रतिपक्षाः, योगान्तराया इत्यभिधीयन्ते ॥ ३० ॥

[ सूत्रम् ]

**दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः ॥ ३१ ॥**

[ भाष्यम् ]

दुःखम् आध्यात्मिकमाधिभौतिकमाधिदैविकं च । येनाभिहताः प्राणिनः तदपघाताय प्रयतन्ते तद्दुःखम् । दौर्मनस्यम् इच्छाविघाताच्चेतसः

[ विवरणम् ]

भ्रान्तिदर्शनं विपर्ययज्ञानं योगसाधनेषु तन्मार्गे वा विपरीतवृत्तिः । अलब्धभूमिकत्वं समाधिभूमेरलाभः । भूमयो वितर्कादयश्चित्तस्य धर्मविशेषा उक्ता वक्ष्यमाणाश्च । अनवस्थितायामपि समाधिभूमौ ततः कथमपि प्रचलितस्य चित्तस्य पुनस्तत्रावस्थितत्वमेव स्यात्तदलाभस्त्वनवस्थितत्वमुच्यते ॥

तदेते नवान्तरायाः । अन्तरं विवरं विच्छेदं कुर्वन्त आयान्तीत्यन्तरायाः विक्षेपाः, प्रतिपक्षाः योगप्राप्तेरुपसर्गाः । एते च सह चित्तवृत्तिभिर्भवन्ति । चित्तं विक्षिपन्ति विषयेष्विति चित्तविक्षेपाः । क्षिप्रं ते [क्षिपन्ति] सहैते वृत्तिभिः पञ्चतयीभिरन्योन्यप्रयोज्यप्रयोजकभावेन भवन्ति । अथैषामभावे व्याधिप्रभृतीनामभावे सहायबलाभावान्न भवन्ति पूर्वोक्ताःप्रमाणादयश्चित्तवृत्तयः । तद्भावभावित्वात्तुल्यप्रत्यनीका वृत्तिविक्षेपा इत्युक्तं भवति ॥ ३० ॥

दुःखं येनाभिहताः प्राणिनस्तदपघाताय प्रयतन्ते चेष्टन्ते । तच्च त्रिविधम् । आध्यात्मिकम्, अधि आत्मनीत्यध्यात्मम्, तत्र भवमाध्यात्मिकम् । तच्च शारीरं मानसं च । शारीरं धातुवैषम्यादिनिमित्तम् । मानसमिष्टविघातादिहेतुकम् । आधिभौतिकम् अधि भूतेष्वित्यधिभूतम्, तत्र भवमाधिभौतिकम् । तच्च पशुमृगाद्युपनिपतितम् । आधिदैविकमिति अधि देवेष्वित्यधिदेवम्, तत्र भवमाधिदैविकम् । 'अध्यात्मादिभ्यष्ठक्' इत्युपसंख्यानात् ठक् । अनुशतिकादित्वादुभयपदवृद्धिः । तच्चापि वातवर्षादिनिमित्तम् । तदेकमेव सन्निमित्तभेदेन रजोरूपं भिद्यते ॥

[ भाष्यम् ]

क्षोभः । यदङ्गान्येजयति कम्पयति तदङ्गमेजयत्वम् । प्राणो यद्बाह्यं वायुमाचामति स श्वासः । यत्कौष्ठ्यं वायुं निस्सारयति स प्रश्वासः । एते विक्षेपसहभुवः । विक्षिप्तचित्तस्यैते भवन्ति । समाहितचित्तस्यैते न भवन्ति । अथैते विक्षेपाः समाधिप्रतिपक्षाः ताभ्यामेवाभ्यासवैराग्याभ्यां निरोद्धव्याः ॥ ३१ ॥

तत्राभ्यासस्य विषयमुपसंहरन् इदमाह—

[ सूत्रम् ]

**तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥**

[ भाष्यम् ]

विक्षेपप्रतिषेधार्थमेकतत्त्वालम्बनं चित्तमभ्यसेत् ।

[ विवरणम् ]

**दौर्मनस्यमिच्छाविघाताच्चेतसः क्षोभः** आकुलीभावः सम्मलनम् । **यदङ्गान्येजयति कम्पयति तदङ्गमेजयत्वम्** । (न् तच्च प्राणायामाद्यथाभ्यासप्रभवश्वासावपि तथा समुद्भवः) **यद्बाह्यं वायुमाचामति** बाह्यवायोराकर्षणबाहुल्कं[ल्यम्] निष्क्रमणमन्दता च **श्वासः** । तद्विपरीतव्यापारः **प्रश्वासः**— **यत्कौष्ठ्यं वायुं निस्सारयति । एते विक्षेपसहभुवः** विक्षेपैः सहैते **विक्षिप्तचित्तस्यैव भवन्तीति** विक्षेपसहभुवः । **समाहितचित्तस्यैते न भवन्तीति** यावत् । यावद्यावच्चेतः समाधीयते तावत्तावन्न भवन्तीति । **ताभ्यामेवाभ्यासवैराग्याभ्यामुपशमयितव्याः** । नान्यं प्रतिपक्षमपेक्षन्ते ॥

अभ्यासवैराग्ये मुक्त्वा न हि परमेश्वरप्रणिधायिन्यः[भ्यः]प्रभावो भवतीति गम्यते । "[1]अन्तरायाभावश्च' इत्युक्त्या प्राक्तनादपीश्वरप्रणिधानादन्तराया निरुध्यन्ते ॥ ३१ ॥

अभ्यासवैराग्याभ्यां तन्निरोध इत्युक्तम् । तत्र वैराग्यविषयः प्रतिपादितः । इदानीमभ्यासस्य विषयमुपसंहरन्नाह—**तत्प्रतिषेधार्थमेकतत्त्वाभ्यास इति** । तेषां विक्षेपाणां प्रतिषेधाय **तत्प्रतिषेधार्थम्** । **एकं तत्त्वमेकतत्त्वम्** । तच्चैकं तत्त्वं वस्तुत्वान्नाभ्यसितुं शक्यम् । न ह्यात्मादिवस्तूनां

---

1. यो. सू. पा. 1. सू. 29.

[ भाष्यम् ]

**यस्य तु प्रत्यर्थनियतं प्रत्ययमात्रं क्षणिकं च चित्तं तस्य सर्वमेव चित्तमेकाग्रम्। नास्त्येव विक्षिप्तम्।**

**यदि पुनरिदं सर्वतः प्रत्याहृत्य एकस्मिन्नर्थे समाधीयते, तदा भवत्येकाग्रमित्यतो न प्रत्यर्थनियतम्।**

[ विवरणम् ]

शीलनं वक्तुं शक्यते। स्वमाहाभाग्यावस्थितानि हि तानि न चित्तमात्राणि। वस्तूनां तु चित्ततन्त्रतां प्रतिषेधयिष्यति—'न **चैकचित्ततन्त्रं वस्तु**' इत्यादिना। तस्मादेतदाशङ्कमानो भाष्यकार आह—**एकतत्त्वालम्बनं चित्तमभ्यसेदिति**। सूत्रेऽप्येकतत्त्वाभ्यास इति समासादयमर्थ उपात्त एव ॥

ननु नैकं चित्तमवस्थितमस्ति, यस्यैकतत्त्वावलम्बनः प्रत्यय आपद्येत। प्रत्यया एव चित्तम्, ते च प्रत्यर्थं नियताः क्षणप्रणाशिनश्च। प्रत्यात्मसंवेद्यं च प्रत्ययानामनवस्थितत्वम्। नापि प्रत्ययव्यतिरेकेणावस्थितं प्रत्ययि चित्तं नामोपलभ्यते। योऽप्यहमेवाहमिति प्रत्ययः सोऽपि समानसन्ततिपतितत्वात्सादृश्यनिबन्धनः। यथा स एव प्रदीपः त एव केशा इति ॥

तदप्याह—प्रत्यहं[प्रति]प्रत्ययं प्रत्ययी भिन्नः, प्रत्ययेभ्योऽत्यन्तपरस्परभिन्नेभ्योऽनन्यत्वात्। एकैकप्रत्ययस्वरूपसद्वर्तमानाहंप्रत्ययविषयः प्रत्ययी भूतभविष्यत्कालाहंप्रत्ययविषयात् प्रत्ययिनो भिन्नः, भिन्नप्रत्ययविषयत्वात्, घटात् (घ) पट इव। यदि वा—भिन्नकालत्वात्, विनष्टभविष्यद्घटाभ्यां वर्तमानो घटः [इव]। अहंप्रत्यया वा सर्वे भिन्नालम्बनाः, प्रत्ययत्वात्, घटपटादिविषयप्रत्ययवदिति ॥

अत्राभिधीयते—स्वशास्त्रविरोधोऽपि स्यादेवं ब्रुवत इत्याह—**क्षणिकं च यस्य चित्तं तस्य सर्वमेव चित्तम् एकाग्रम्** विक्षेपाभावादेव **नास्त्येव विक्षिप्तमिति** सर्वचित्तैकाग्रत्वाद्विक्षेपप्राप्त्यभावाद्विक्षेपप्रतिषेधाय शास्त्रोपदेशोऽनर्थकः स्यात्। अस्ति च चित्तपरिकर्मार्थं मैत्र्याद्युपदेशः। स च विरुध्येत इत्थंधर्मं चित्तमभ्युपगच्छतः ॥

ननु च तवापि वृत्तिवृत्तिमतोरभेदादनुपपन्नो विक्षेप इति तत्प्रतिषेधोपदेशानर्थक्यम्—नैष दोषः—वृत्तिवृत्तिमत्त्वाभ्युपगमात् ॥

[ भाष्यम् ]

**योऽपि सदृशप्रत्ययप्रवाहेण चित्तमेकाग्रं मन्यते, तस्य एकाग्रता यदि प्रवाहचित्तस्य धर्मः, तदा एकं नास्ति प्रवाहचित्तम् ; क्षणिकत्वात् ।**

[ विवरणम् ]

यदि वृत्तय एव परस्परभिन्नाः स्वतन्त्रा वृत्तिमतोऽत्यन्तभिन्ना जायेरन् प्रत्यर्थनियताश्च, तत एष दोषः स्यात् । न चैवमभ्युपेयते ॥

कथं तर्हि ? वृत्तिमद्रूपेणैकमनेकार्थं च तद्वृत्तीनां विषयभेदादवस्थितं च सदसतोर्विपर्ययानभ्युपगमादित्येवमात्मपक्षे समञ्जसतां दर्शयति— **यदि पुनरिदं** चित्तं वृत्तिभेदेनानेकधा (म्मिलावयवद्धि) प्रसृतं साङ्ख्ययोगवादिन इव तवापि **सर्वतः** सर्वेभ्यः विषयेभ्यः **प्रत्याहृत्य** प्रत्यानीयैकस्मिन्नात्माद्यर्थे **समाधीयेत** स्थाप्येत **तदा भवत्येकाग्रं** पुरुषप्रयासभाव्यत्वार्हमित्यर्थः ॥

ततो युक्तस्तत्परिकर्मणे शास्त्रोपदेशः । (अतो न प्रत्यक्षम्) **अतोऽस्मात्** कारणात् तत्परिकर्मविषयशास्त्रोपदेशात् सांख्ययोगवादिवत् क्षणिकवादिनोऽपि एकमनेकार्थमवस्थितं च चित्तं **न प्रत्यर्थनियतं** (वा) पश्चादभ्युपगमनीयम् । अन्यथा शास्त्रविरोधः स्यात् । **योऽपि सदृशप्रत्ययप्रवाहं चित्तमेकाग्रं मन्यते** सदृशः समानः प्रत्ययप्रवाहो यस्यैकस्यां सन्ततौ तच्चित्तमेकाग्रम् । तद्विपरीतम् असमानप्रत्ययप्रवाहं विक्षिप्तम् । तथा चैकाग्रता विक्षेपप्रतिषेधेनोपपद्यते, तदर्थोपदेशश्चेति कुतः शास्त्रविरोध इति ॥

इतर आह—न—प्रवाहचित्तस्यैकस्य धर्मिणोऽनभ्युपगमात् । न हि **प्रवाहचित्तं** नामैकमतीतवर्तमानभविष्यत्प्रत्ययानां धर्मिणमभ्युपगच्छति । यदि ह्यभ्युपगच्छेत् परित्यक्तः स्वपक्षः । कस्मात् ? प्रवाहचित्तस्याक्षणिकत्वात्तदेवैकं नास्ति, यस्यैकाग्रता धर्मः । प्रत्ययानेव ह्यन्योन्यसंहतान् पिपीलिकापङ्क्तिकल्पानसावभ्युपगच्छति ॥

अथैवं मन्यते, यद्यप्येकं नास्ति तथापि सर्वेषामेव प्रत्ययानां सदृशप्रवाहाणामेकाग्रता धर्मः प्रदीपार्चिषामिव प्रकाश इति—तत्राह—नायुगपत्कालोत्पत्तिविनाशानां समाहारः सम्भवति । दृष्टान्तस्य च साध्यविकलत्वात् । न हि बह्वीनामर्चिषामेकः प्रकाशः । प्रत्यर्चिषमस्य भेदात् । नचापि प्रकाशस्यार्चिषां चैको धर्मो ना[मा]स्ति ॥

[ भाष्यम् ]

अथ प्रवाहांशस्यैव प्रत्ययस्य धर्मः, स सर्वः सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा प्रत्यर्थनियतत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः। तस्मादेकमनेकार्थमवस्थितं चित्तमिति ॥

यदि च चित्तेनैकेनानन्विताः स्वभावभिन्नाः प्रत्यया जायेरन्, अथ कथमन्यप्रत्ययदृष्टस्यान्यः स्मर्ता भवेत्, अन्यप्रत्ययोपचितस्य च कर्माशयस्यान्यः प्रत्यय उपभोक्ता भवेत् ॥

[ विवरणम् ]

अथापि मन्यते प्रवाहांशस्यैव प्रत्ययस्य कस्यचिदेकाग्रता धर्मः, यथैकस्यां पिपीलिकासन्ततावेकापि पिपीलिका लोहितेति—तच्च न—पूर्वदोषानुषक्तेः। सर्वः प्रत्ययः प्रवाहांशः सदृशवाही विसदृशवाही वा पूर्ववत् प्रत्यर्थनियतत्वादेकाग्र एवेति विक्षिप्तचित्तानवक्लृप्तिः। तस्मादेकमनेकार्थमवस्थितं च चित्तमभ्युपगन्तव्यम्। यदि शास्त्रेण चित्तपरिकर्मोपदेक्ष्यते ॥

किं च—यदि चित्तेनैकेनानन्विताः करणेन स्वभावभिन्नाः प्रत्यया जायेरंस्तदा ब्रूहि कथमन्यप्रत्ययदृष्टस्यान्यः प्रत्ययः स्मर्ता भवेद्देवदत्तदृष्टस्येव यज्ञदत्तः। अन्यप्रत्ययोपचितस्य वा कर्माशयस्यान्यः प्रत्यय उपभोक्ता ॥

न हि भविष्यत्पुत्रः पित्रा रचितकर्माशयफलं स्वर्गादि प्रत्युपभुञ्जीत। अथ ब्रूयात्—विशिष्टभविष्यत्पुत्रविज्ञानार्थं विनश्यत्प्रवृत्तिविज्ञानमालयविज्ञानसंस्कारं कञ्चनाधत्ते इति—नैतदेवम्—आलयप्रवृत्तिविज्ञानयोरत्यन्तभेदादवस्तुत्वाच्च ॥

यद्यालयविज्ञानान्न तत्प्रवृत्तिविज्ञानं, तदा तदेव तदिति नाममात्रभेदः, तथा च संस्काराधानयुक्तत्वात् स्मृत्यनुपक्लृप्तिः। अथाप्यन्यत्—एवमप्यन्यत्प्रवृत्तिविज्ञानमालयविज्ञाने संस्कारं नादधीत, भिन्नत्वात्। यथा सन्तत्यन्तरालयविज्ञाने ॥

किंच—यद्यपि संस्कारमाधत्ताम्, तथापि प्रवृत्तिविज्ञानापादितसंस्कारमालयविज्ञानं देशकालान्तराक्षमम्। तस्यापि क्षणिकत्वाभ्युपगमाद्विनश्यच्च तावत्येव नोत्तरविज्ञानोपकाराय पर्याप्नोति। देशकालान्तरव्यवहितं चेदुपकुर्वीत, तदा भिन्नसन्तानान्तरजन्मनाप्युपकर्तव्यम् ॥

अथ कालान्तरावस्थायि, तदा क्षणिकत्वहानिः । क्षणान्तरं चेदवतिष्ठेत, दीर्घकालावस्थायित्वे कस्य स्यादक्षमा ॥

अथापि प्रवृत्तिविज्ञानसंस्कारविशिष्टस्यान्तरालभाविन आत्मसदृशस्य भविष्यत आलयविज्ञानस्य संस्कारमाधाय पूर्वमालयविज्ञानं विनङ्क्ष्यतीति—

तच्च न—संस्कारान्तराभावात् । अस्ति चेदनवस्थाप्रसङ्गः । अथ नास्त्याधारः, तत्र किं प्रवृत्तिविज्ञानस्यालयविज्ञानकल्पनया संस्काराधानाय । यथा आलयविज्ञानमुत्पित्सिष्यमाणस्य तत्कालमसतः आलयविज्ञानस्य संस्कारमाधत्ते, तथा प्रवृत्तिविज्ञानमपि उत्पित्सिष्यमाणस्य तत्कालमसतः प्रवृत्तिविज्ञानस्यैव संस्कारमाधत्तामनपेक्ष्यालयविज्ञानम् ॥

न च विनश्यत् अन्यस्य भाविनस्तत्कालमविद्यमानस्य संस्कारमाधत्ते इत्यस्य दृष्टान्तो दृश्यते । नापि भाविन्येव संस्कारं कुर्वीत । पूर्वेण भविष्यत्संस्क्रियते, भविष्यति चेति विरुद्धम् । तत्कालं चेदसद्भविष्यत्संक्रियते, किं तुल्यातुल्यसन्ततिकल्पनेन? असंबन्धाविशेषात् सर्वं सर्वेण संस्क्रियेत ॥

नापि भविष्यद्विनश्यतोर्युगपदुत्पत्तिविनाशावक्षणिकत्वप्रसङ्गात् । अथ तुलान्तयोरिव नत्युन्नती युगपत्पूर्वविनाशोत्तरसमुत्पत्ती स्याताम् (न) वस्तुनोरिति चेत्—न—अभ्युपगमविरोधात् । न हि वैनाशिकेनोत्पत्तिविनाशक्रियाव्यतिरेकेण कारकमन्यदिष्यते । अभ्युपगमे च सिद्धान्तविरोधः ॥

किंच—अन्यत्वे च क्रियाकारकयोर्यावत्क्रियोत्पत्ति कारकेणावस्थातव्यं, ततश्च क्षणिकत्वहानिः । अ[न]वस्थाने च क्रियार्थं ततः[तस्य] उपादानमनर्थकम् ॥

किं चान्यत्—क्रियाया एव कारकत्वे कारकस्यापि क्रियात्वे क्रियाकारकशब्दौ पर्यायौ स्याताम् । ततश्चाङ्कुरो जायते, देवदत्तो जायत इत्यङ्कुरदेवदत्तयोः पर्यायत्वं स्यात् । तयोर्जनिक्रियामात्रत्वात् ॥

अथ अन्यजनिक्रिया देवदत्तविशिष्टा अन्या चाङ्कुरविशिष्टेति चेत्—अभ्युपेतं तर्हि विशेषणं कारकं, न हि स्वरूपेण किंचिद्विशिष्टं स्यात् ॥

अथोच्येत, स्वरूपेणैवोत्पत्तिक्रिया उत्पत्तिक्रियान्तराद्विशिष्टा यथा स्वलक्षणानि रूपादीनि इति—तच्च न—भावाभावयोरेकत्वप्रसङ्गात् । इहाङ्कुरो जायते नश्यत्यङ्कुर इति च य एव जायते स एव नश्यति तत्राङ्कुरजनन-

[ भाष्यम् ]

[1]कथञ्चित् समाधीयमानमप्येतत् गोमयपायसीयन्यायमाक्षिपति ।

किंच—स्वात्मानुभवापह्नवः चित्तस्यान्यत्वे प्राप्नोति । कथम्? 'यदहमद्राक्षं तत्स्पृशामि' 'यच्चास्प्राक्षं तत्पश्यामि' इत्यहमिति प्रत्ययः

[ विवरणम् ]

मङ्कुरविनाशनमिति जननं विनाश इत्युक्तं भवति । अङ्कुरो हि क्रियैव कारकमिति वोच्येत । (चितः) ॥

अथापि स्यात्—अन्यै(न्यस्यै)वाङ्कुरजननक्रियाया अङ्कुरविनाशक्रियेति—तथाऽप्यङ्कुरजननस्य नित्यत्वप्रसङ्गः । विनाशस्यान्यत्वादेव ॥

अथापि नाशजननवद्वस्तु शबलमिति, तथाऽप्यभावस्य शबलत्वं प्रसज्येत । कथम्? क्रियाव्यतिरिक्तस्य कारकस्याभावेऽपि नाश एव जननविनाशवान् जननमेव जननविनाशवदिति । न ह्यभावस्य शबलत्वादिविशेषो निर्विशेषत्वाद्भावाभावयोश्चाविरोधात् प्रत्यक्षानुमानानुपपत्तिः ॥

यदप्युच्यते—तुलान्तयोर्नामोन्नामाविति—तत्र युक्ता तुलान्तयोरेककालयोर्विद्यमानत्वादन्यतरस्य वस्त्वन्तरगौरवनिमित्ता आनतिरन्यतरस्य चोन्नतिः । इह पुनर्भवद्भविष्यत्कालयोर्विज्ञानयोर्नाशोत्पत्ती तुलानामहेतुवत्तृतीयस्य निमित्तान्तरस्याभावादेककालं नोपपद्येते । विनश्यदेव विज्ञानमात्मसदृशं जनयतीति न शक्यं वक्तुम् । न हि देवदत्तो म्रियमाण एवात्मसमानं पुत्रं जनयति विनाशेनाक्षणत्वात् ॥

अथ मृत्पिण्डो यथा घटमुत्पादयन् विनश्यति, तद्वदिति चेत्—तच्च न—मृदवयवानामेव घटाकारेण परिणतत्वात् । एकैव हि मृत्पिण्डघटादिबहुधर्मयोगिनी ॥

यच्चापि बीजेषु द्रव्यान्तरवासितेषु वासकद्रव्यानुविधायित्वं वास्यद्रव्यस्येति—तदप्यकारणम् वास्यवासकयोरवस्थितत्वात् । अवस्थितान्येव हि बीजेष्वङ्कुरादीनि वास्यन्ते बीजवासनेन । तदन्यत्वात् वासकद्रव्यस्याप्यवयवानुप्रविष्टाः सूक्ष्मा विद्यन्त एव । तस्माद्विद्यमानान्येवाङ्कुरादीनि बीजवासनया वास्यन्त

---

1. विवरणरीत्या इदं पदं भाष्ये नास्तीति भाति ।

[ भाष्यम् ]

सर्वस्य प्रत्ययस्य भेदे सति प्रत्ययिन्यभेदेनोपस्थितः । एकप्रत्ययिविषयोऽयमभेदात्मा अहमिति प्रत्ययः कथमत्यन्तभिन्नेषु चित्तेषु वर्तमानः सामान्यमेकं प्रत्ययिनमाश्रयेत । स्वानुभवग्राह्यश्चायमभेदात्मा अहमिति प्रत्ययः ।

[ विवरणम् ]

इति युक्तम् । असतां शविषाणादीनामुत्पत्त्यभावात् । असतां चेदुत्पत्तिः स्याद्वास्यवासकयोर्विनष्टत्वादविद्यमानत्वाविशेषे वासकद्रव्याननुविधायि नोत्पद्येत । अन्यद्वा हस्तादि ॥

यदि वा, अत्यन्तासदेव शशविषाणाद्युत्पद्येत। अतो विशिष्टं हि त्रयाणामसत्त्वं वासिते बीजे । तस्मादवस्थितं कारकं भूतभविष्यत्कालानेकवृत्तियोगि चाभ्युपगन्तव्यम् । अन्यथा प्रत्ययमात्रं क्षणिकं चित्तमिति समर्थयमानस्य समाधीयमानमपि (समर्थ्यमानमपि) गोमयपायसीयन्यायमाक्षिपति ॥

यथैव बहुभिरपि गोविकारत्वादिहेतुभिः समीहमाने कृताटोपेनापि गोमयं पायसीकर्तुं न शक्यम्, तथा क्षणिकेन चित्तेन स्मरणादि समर्थयितुम् ॥

किञ्च—स्वात्मानुभवापह्नवः चित्तस्यान्यत्वे प्रत्ययमात्रत्वे नान्यदृष्टमनुस्मरतीति स्वात्मनानुभूतमपह्नुवीत ॥

किं त्वमद्राक्षीरित्युक्तो दृष्टवानपि नाहमद्राक्षमिति ब्रुवीत । अन्येन हि तत्पक्षे तत् दृष्टं दृश्यते। तदपह्नवे चानुभूतस्य प्रतिपत्तिः कथम्? 'यदहमद्राक्षं तत् अहमेव स्पृशामि' 'यदहमस्प्राक्षं तत् अहमेव स्मरामि' इति । सैषा प्रत्ययस्मरणयोरेककर्तृत्वे सति घटनामुपढौकते प्रतिपत्तिः । अन्यथा[1] मत्सदृशो यदद्राक्षीत्तत्सदृशोऽहं तं स्पृशामीति स्मरामीति च स्यात् । सर्वस्य पुरुषस्याहमिति प्रत्ययः स्मृतिप्रत्यययोरेकस्मिन् कर्तरि वर्तमानः प्रत्ययभेदे पश्यामि स्पृशामि स्मरामीत्यादिप्रत्ययभेदे सति तेषां च प्रत्ययानामेकस्मिन् कर्तरि प्रत्ययिन्यभिन्ने चोपस्थितः प्रत्यक्षश्च ॥

नन्वेकप्रत्ययविषय एवान्यः स्मृतेरेकत्वेऽपि कर्तुरहं प्रत्येमि स्मराम्यहमिति च न भवितव्यं, प्रत्येता स्मर्तेति शब्दभेदाद्भेद एव। तत्राह—न—प्रत्यक्षत्वात् । तदेव दर्शयति—स्वानुभवग्राह्यश्चायमभेदात्मा अहमिति प्रत्ययः ॥

[ भाष्यम् ]

**न च प्रत्यक्षस्य माहात्म्यं प्रमाणान्तरेणाभिभूयते । प्रमाणान्तरं च प्रत्यक्षबलेनैव व्यवहारं लभते ।**

[ विवरणम् ]

अथ प्रत्येता स्मर्तेति शब्दभेदात् प्रत्ययभेदाच्चाहम्प्रत्ययस्य भिन्नविषयत्वमनुमायिष्यत इति चेदत आह--**न हि प्रत्यक्षस्य माहात्म्यं** प्रामाण्यं चक्षुषो रूप इवानुमानाद**भिभूयते** बाध्यते ॥

किं च--प्रत्यक्षं प्रमाणमयमहंप्रत्ययो न तत् स्मृतिप्रत्ययानामेकस्मिन् कर्तरि सामान्येन वर्तमानः । स चेत् प्रत्यक्षप्रमाणभूतोऽनुमानेनाभिभूयेत, तदानीमनुमानस्यापि प्रमाणत्वं हीयेत । तन्मूलत्वादनुमानस्य । तदेतदाह--**प्रमाणान्तरं च प्रत्यक्षबलेनैव** प्रामाण्यव्यवहारं लभत इति । तेन प्रत्यक्षविरोधेन अनुमानविरोधेन च प्रतिवादि(पादित)प्रमाणप्रतिज्ञादोषो व्याख्यातः ॥

अतीतानागतप्रत्ययसंस्काराधारादनन्यः इदानीन्तनप्रत्ययसंस्काराधारः, एकसन्तानसंबन्धित्वे सति बोधात्मकत्वात्, आत्मस्वरूपाद्यथा ॥

भूतभविष्यत्प्रत्ययसंस्काराश्रयः वर्तमानप्रत्ययसंस्काराश्रयादनन्यः, एकसन्तानसंबन्धे सति बोधात्मकत्वात्, आत्मन इव स्वरूपात् ॥

वर्तमानाहंप्रत्ययी भूतभविष्यत्प्रत्ययिभ्यामभिन्नः, एकसन्तानयोगे सति प्रत्ययित्वात्, यथा स्वरूपात् ॥

भूतभविष्यत्प्रत्ययिभ्यामनन्यो वर्तमानः प्रत्ययः, एकसन्तानसंबन्धे सति बोधात्मकत्वात्, आत्मरागस्वरूपादिभ्य इव ॥

भूतभविष्यत्प्रत्ययेभ्यो नान्यो वर्तमानः प्रत्ययी, एकसन्तानसंबन्धित्वे सति बोधात्मकत्वात्, आत्मनो यथा स्वरूपात् ॥

भिन्नसन्ततिषु परस्परस्मृतिप्रतिसन्धानाद्यनुपलम्भादेकसन्तानेषु च स्मृत्यादिदर्शनादेव सिद्धमेककर्तृत्वम् । तथा सर्वप्रमाणेभ्यो गरीयसा प्रत्यक्षेण प्रमाणेन । तत्र न किंचिदनुमानेन साध्यम् । न हि कश्चित् करतललाञ्छनंदिदृक्षया दर्पणमादत्ते । तथाऽपि वैनाशिकोपरचितानुमानापशदमसहमानाः केचित् प्रत्यनु-

[ भाष्यम् ]

तस्मादेकमनेकार्थमवस्थितं च चित्तम् । यस्य चित्तस्यावस्थितस्येदं शास्त्रेण परिकर्म निर्दिश्यते ॥ ३२ ॥

तत्कथम्—

[ सूत्रम् ]

मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥

[ भाष्यम् ]

तत्र सर्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेत् । दुःखितेषु करुणाम् । पुण्यात्मकेषु मुदिताम् । अपुण्यशीलेषूपेक्षाम् । एवमस्य भावयतः शुक्लो धर्म उपजायते । ततश्च चित्तं प्रसीदति । प्रसन्नमेकाग्रं स्थितिपदं लभते ॥ ३३ ॥

[ विवरणम् ]

मानानि पेशलानि दर्शयन्ति । तथा चाह—तस्मादेकमनेकार्थमवस्थितं च चित्तम् । यस्येदं शास्त्रेण परिकर्म निर्दिश्यत इति—शास्त्रोपदेशसम्बन्धित्वं चित्तस्यावस्थितत्वे हेतुमुपदिशति । न हि विशीर्यमाणस्य घटस्य प्रक्षालन-परिवर्तनादिसंस्कारः क्रियते ॥ ३२ ॥

कथं चित्तपरिकर्म निर्दिश्यते ? तथैकतत्त्वाभ्यास इति चोक्तम्, किं च तदेकं तत्त्वम् ? यद्विषयोऽभ्यास इति । तत आह—

मैत्रीकरुणामुदितोपेक्षाणां सुखःदुखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनमिति । मैत्री मित्रविषया भावना । तादृशीं सुखितेषु सुखमनुमोदयन्तीमसूयादिवर्जिताम् । तथा दुःखितेषु करुणां कृपाम् अनुजानतीं दुःखम् । पुण्यात्मकेषु मुदितां पुण्यशीलतामनुजानतीम् । अपुण्यशीलेषु चोपेक्षाम् अपुण्यशीलव्यापारेषूदासीनतां च भावयेदित्यनुषज्यते ॥

सर्वत्रैवमस्य भावयतः, शुक्ल इति विशुद्धः प्राण्युपघातादिवर्जनाच्छुक्लो धर्मः । ततः स धर्म इव जातश्चित्तं प्रसादयति । तेन प्रसन्नं चित्तमेकाग्रं स्थितिपदं लभते । एकाग्रतया समाधीयत इत्यर्थः तदुक्तम्—"[1]प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते' इति ॥

---

1. भ. गी. 2. 65.

[ सूत्रम् ]

**प्रच्छर्दनविधारणाभ्यां वा प्राणस्य ॥ ३४ ॥**

[ भाष्यम् ]

कौष्ठ्यस्य वायोः नासिकापुटाभ्यां प्रयत्नविशेषात् वमनं प्रच्छर्दनम् । विधारणं प्राणायामः । ताभ्यां वा मनसः स्थितिं सम्पादयेत् ॥ ३४ ॥

[ सूत्रम् ]

**विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धिनी ॥ ३५ ॥**

[ विवरणम् ]

तत्रोपेक्षाया अक्रियारूपत्वाद्धर्माहेतुत्वे सति किमर्थमिहोपादानम् ? उच्यते—उपेक्षानुपादाने चापुण्यशीलेष्वपि चित्तं व्यापारं यायात् । ततश्च तद्व्यापारोपधानकालुष्यान्मैत्र्यादिभावनाया न योग्यं भवति । अपुण्यशीलनिमित्तनैमित्तिकाकारव्यापारादधर्मो वा मा संजनिष्टेति चित्तस्थितिरेवोपेक्षेति तस्या उपादानम् । चित्तस्थितिश्चेह समीहिता ॥

तस्मादित्थं समाहितचित्तस्य मैत्रीकरुणाद्येकतरत्रालम्बनं चित्तं शीलयतः प्रागभिहिता अन्तराया न जनिष्यन्ते ॥ ३३ ॥

**प्रच्छर्दनविधारणाभ्यां वा प्राणस्य** । वाशब्दो मैत्र्यादिभावनोपायान्तरविकल्पार्थः । मैत्र्यादिभावनाद्युपायानामन्यतमेन येन केनचित् चित्तस्थितिः सम्पादनीयेति प्रकरणार्थः । अनेकोपायप्रदर्शनं कस्यचित् क्वचित् सुकरताभिप्रायेण । प्रच्छर्दनविधारणाभ्यां व्यस्ताभ्यां समस्ताभ्यां वा । **प्रच्छर्दनम् कौष्ठ्यस्य वायो**रातमितोरुद्वमनं **नासिकाभ्याम्**, न मुखेन । **विधारणं प्राणायाम** आतमितोरेव । यद्यपि प्रच्छर्दनेनापि प्राणः आयम्यते, तथापि बहिर्वृत्तिर्न निरुध्यत इति विधारणं प्राणायाम इति विशेष्यते ॥ ३४ ॥

**विषयवती वा प्रवृत्तिरुत्पन्ना स्थितिनिबन्धिनी** । चित्तस्येति वाक्यशेषः । विषया गन्धादयो यस्या योगप्रवृत्तेर्गन्धादिसंवेदनलक्षणाया आलम्बनीभूताः, स विषयवतीत्युच्यते ॥

**प्रवृत्ति**र्नाम योगिनो योगमभ्यस्यतः अभिमुखीभावं प्रतिपद्यमानस्य योगस्य यः प्रथमोऽभिमुखीभावः प्रत्ययकरणो योगानुष्ठानं प्रत्युत्साह-

[ भाष्यम् ]

नासिकाग्रे धारयतोऽस्य या दिव्यगन्धसंवित् सा गन्धप्रवृत्तिः । जिह्वाग्रे रससंवित् । तालुनि रूपसंवित् । जिह्वामध्ये स्पर्शसंवित् । जिह्वामूले शब्दसंवित्, इत्येता वृत्तय उत्पन्नाश्चित्तं स्थितौ निबध्नन्ति, संशयं विधमन्ति, समाधिप्रज्ञायां च द्वारीभवन्ति इति ।

एतेन चन्द्रादित्यग्रहमणिप्रदीपरश्म्यादिषु प्रवृत्तिरुत्पन्ना विषयवत्येव वेदितव्या ।

यद्यपि हि तत्तच्छास्त्रानुमानाचार्योपदेशैरवगतमर्थतत्त्वं सद्भूतमेव भवति । एतेषां यथाभूतार्थप्रतिपादनसामर्थ्यात् । तथाऽपि यावदेकदेशोऽपि कश्चिन्न स्वकरणसंवेद्यो भवति, तावत् सर्वं परोक्षमिवापवर्गादिषु सूक्ष्मेष्वर्थेषु न दृढां बुद्धिमुत्पादयति । तस्माच्छास्त्रानुमानाचार्योपदेशोपोद्बलनार्थमेवावश्यं कश्चिदर्थविशेषः प्रत्यक्षीकर्तव्यः ।

[ विवरणम् ]

जननो निर्मथ्यमानस्याग्नेरिव धूमसमुद्भवः, सा प्रवृत्तिः । सा च तादृशी प्रवृत्तिरुत्पन्ना प्रत्ययकरणात् प्रहर्षयन्ती योगिनश्चित्तं स्थितौ निबध्नाति ॥

नासिकाग्रे चित्तं धारयतो गन्धसंवित् प्रह्लादनकरसुरभिगन्धसंवेदनं निरन्तरतया सम्मतसंयोगमिवाचक्षाणा जायते । सा गन्धप्रवृत्तिः । तथा जिह्वादिषु । धारयत इति सम्बध्यते । ता एताः प्रवृत्तयः स्थितौ चित्तं निबध्नन्ति । संशयं विधमन्ति समाधिप्रज्ञायाश्च द्वारीभवन्ति ॥

एतेन रश्मिचन्द्रादित्यग्रहप्रदीपादिषु चित्तं धारयतो हृदयपुण्डरीके वा धारयतो वैषम्याद्रश्मिचन्द्राद्याकारा प्रवृत्तिरुत्पन्ना विषयवतीत्येव वेदितव्या ॥

यद्यपि शास्त्रानुमानाचार्येभ्योऽवगतमर्थतत्त्वं तथाभूतमेव अव्यभिचारिस्वरूपमेव । तेषामन्यथाभूताप्रतिपादकत्वात् । तथाऽपि यावदेकदेशोऽपि स्वकरणसंवेद्यो न भवति प्रत्यक्षो न भवति शास्त्राद्युपदिष्टस्यार्थस्यैकदेशोऽपि, तावत् सर्वं परोक्षमिवापवर्गादिषु सूक्ष्मेष्वर्थेषु न दृढां बुद्धिमुत्पादयति । तस्माच्छास्त्रानुमानाचार्योपोद्बलनार्थमवश्यं कश्चिद्विशेषः प्रत्यक्षीकर्तव्यः ॥

[ भाष्यम् ]

तत्र तदुपदिष्टार्थैकदेशप्रत्यक्षत्वे सति सर्वं सूक्ष्मविषयमपि आ अपवर्गात् श्रद्धीयते। एतदर्थमेवेदं चित्तपरिकर्म निर्दिश्यते। अनियतासु वृत्तिषु तद्विषयायां वशीकारसंज्ञायामुपजातायां समर्थं स्यात् तस्य तस्यार्थस्य प्रत्यक्षीकरणायेति।

तथा च सति श्रद्धावीर्यस्मृतिसमाधयोऽस्याप्रतिबन्धेन भविष्यन्तीति ॥ ३५ ॥

[ सूत्रम् ]

विशोका वा ज्योतिष्मती ॥ ३६ ॥

[ विवरणम् ]

तत्र शास्त्राद्युपदिष्टार्थैकदेशप्रत्यक्षत्वे सति सर्वं सूक्ष्मविषयमपि आ अपवर्गाच्छ्रद्धीयते। एतदर्थमेवेदं चित्तपरिकर्म यदेतत् 'मैत्रीकरुणा' इत्यादिना 'परमाणुपरममहत्त्वान्तोऽस्य वशीकारः' इत्येवमन्तेन प्रकरणेन यमनियमासनविशिष्टस्य चित्तपरिकर्मोपदिश्यते ॥

तदेतदुक्तं भवति––एतत्प्रकरणोपदिष्टानामुपायानामन्यतमानुष्ठानात् प्रत्यक्षीकृतैकदेशतया विधूत(पिध्मात)संशयं तु आ अपवर्गात् दृढावस्थितश्रद्धानादि प्रशान्तबहिर्वृत्ति उपस्थितवशीकारसंज्ञवैराग्यं तस्य तस्य तृतीयपादोपदिष्टपरिणामत्रयादेरर्थस्य प्रत्यक्षीकरणाय समर्थं स्यात् ज्ञानविभूत्यादिप्राप्त्यर्थमिति। ततश्चैवमर्थं चित्तपरिकर्मोपदिश्यत इति प्रकरणार्थः। तथा च भाष्यकारः प्रदर्शितवान्––'एतदर्थमेवेदं चित्तपरिकर्म' इत्येवमादिना ॥ ३५ ॥

विशोका वा ज्योतिष्मती प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धिनीति प्रकृतमभिसंबध्यते। ज्योतिर्यस्यां विद्यते प्रवृत्तौ सा ज्योतिष्मती। सा च शोकं व्यपगमयतीति विशोका नाम ॥

सा च कथमुपजायत इत्याह—हृदयपुण्डरीके धारयतो बुद्धिसंविद्भवति स्वरूपसंवेदनम्। बुद्धिसत्त्वं हि किंरूपमित्याह—बुद्धिसत्त्वं हि प्रभास्वरं प्रभासनशीलमाकाशकल्पं व्यापि। यत्र यस्मिन् बुद्धिसत्त्वे ॥

[ भाष्यम् ]

प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धिनीत्यनुवर्तते । हृदयपुण्डरीके धारयतो या बुद्धिसंवित्, बुद्धिसत्त्वं हि प्रभास्वरमाकाशकल्पम्, तत्र स्थितिवैशारद्यात् प्रवृत्तिः सूर्येन्दुग्रहमणिप्रभारूपाकारेण विकल्पते । तथा अस्मितायां समापन्नं चित्तं निस्तरङ्गमहोदधिकल्पं शान्तमनन्तमस्मितामात्रं भवति ।

यत्रेदमुक्तम्—"[1]तमणुमात्रमात्मानमनुविद्यास्मीत्येवं तावत्संजानीते" इति । एषा द्वयी विशोका विषयवती, अस्मितामात्रा च प्रवृत्तिर्ज्योतिष्मतीत्युच्यते । यया योगिनश्चित्तं स्थितिपदं लभत इति ॥ ३६ ॥

[ सूत्रम् ]

वीतरागविषयं वा चित्तम् ॥ ३७ ॥

[ विवरणम् ]

स्थितिवैषम्यादिति । बुद्धिसत्त्वात्मतासाम्यानापत्तेरिति । हृदयपुण्डरीक एव धारयतः प्रवृत्तिर्ज्योतिष्मती सूर्येन्दुमणिप्रभारूपाकारेण विकल्पते । तथा चास्मितायाम् अहङ्कारे समापन्नं स्यात् बुद्धिसत्त्वं स्वरूपेण साम्यापत्तेर्निस्तरङ्गमहोदधिकल्पं शान्तमनन्तमस्मितामात्रं भवति ॥

यत्रेदमुक्तं यत्रास्मितासमापत्तौ । तं एतं प्रकृतमस्मितात्मानमहङ्कारम् अणुं सूक्ष्मम् आत्मानमनुविद्य प्राप्य अस्मीत्येवंतावत्संजानीत इति । यादृशमालम्बनस्वरूपं तावन्मात्रं सञ्जानीते । अहङ्कारस्वरूपेणैव तदानुरूप्यादवच्छिद्यते, स्फटिकमणिरिवोपधानरूपेण । एवं द्वयी विशोका प्रवृत्तिर्विषयवती चास्मितामात्रा च । तत्र गन्धसंविदादिरास्मितामात्रान्ता सर्वा विशोकैव । ज्योतिष्मती पुनर्गन्धसंविदादिप्रवृत्तिपञ्चतयादन्यत्र । विषयवती त्वस्मितामात्रात् प्रागेवेत्येवं विषयविभागः । यया विशोकया ज्योतिष्मत्या योगिनश्चित्तं स्थितिपदं लभते ॥ ३६ ॥

वीतरागविषयं वा चित्तं वीतो रागो यस्मात् प्रत्ययात् स वीतरागः रागशून्य इत्यर्थः । स एष विषय आलम्बनं यस्य चित्तस्य तद्वीतरागविषयम् । वीतरागश्च प्रत्ययः प्रसिद्धो लोके । रागिणोऽपि हि पुरुषस्य रागकारणेऽपि विषये, यः स्त्रीषु मात्रादिषु । स एव प्रत्ययः [तमेव प्रत्ययं] वीतरागः [गं] आलम्बनत्वे-

1. पञ्चशिखाचार्येण ।

[ भाष्यम् ]

वीतरागचित्तालम्बनोपरक्तं वा योगिनश्चित्तं स्थितिपदं लभत इति ॥ ३७ ॥

[ सूत्रम् ]

**स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥**

[ भाष्यम् ]

स्वप्नज्ञानालम्बनं वा निद्राज्ञानालम्बनं वा तदाकारं योगिनश्चित्तं स्थितिपदं लभत इति ॥ ३८ ॥

[ सूत्रम् ]

**यथाऽभिमतध्यानाद्वा ॥ ३९ ॥**

[ भाष्यम् ]

यदेवाभिमतं तदेव ध्यायेत् । तत्र लब्धस्थितिकमन्यत्रापि स्थितिपदं लभत इति ॥ ३९ ॥

[ विवरणम् ]

नाभ्यस्येत्; न तु तस्य यो विषयः आलम्बनम् । विषयाणां खलत्वात् । तत् वीतरागप्रत्ययालम्बनोपरक्तं चित्तं तद्वदेव वीतरागं प्रसन्नतरं स्थितिपदं लभते । रागादिखलीकृतं हि कृतखलीनमिव तुरङ्गमाननं प्रचलति ॥ ३७ ॥

स्वप्ननिद्राज्ञानालम्बनं वा । स्वप्नज्ञानालम्बनं वा निद्राज्ञानालम्बनं वा चित्तं तदाकारमेव भवति । एवंस्वभावं हि चित्तं यदालम्बते तदाकारं भवति । स्वप्ने च शब्दादिविषयशून्यं ज्ञानम् । ज्ञानस्यापि स्वभावोऽवभासकता । तत्रापि ज्ञानस्वरूपमेवालम्बते । न तु स्मर्यमाणविषयस्वरूपम् । स्मर्यमाणेनापि विषयेण खलीकारो दृश्यते । निद्राज्ञानं तु विशेषाग्रहणात्मकमभावप्रत्ययालम्बनं शान्तमनन्तमनुभूयमानाचलनधर्मकम् । ततश्च तदालम्बनं सच्चित्तं स्थितिपदं लभत इति युक्तम् ॥ ३८ ॥

यथाभिमतध्यानाद्वा । यदेवाभिमतमिति चित्तस्थित्यपेक्षया । चित्तस्थितेः प्रकृतत्वात् । न तु सुखाद्यपेक्षया । प्रतिषिद्धत्वाच्च—"न त्वेव विषयान् प्राप्य धारयेत कथंचन" इति । तत्र लब्धस्थितिकं कर्मण्यं सत् अन्यत्र शास्त्रीयेषु अपि स्थितिपदं लभते ॥ ३९ ॥

[ सूत्रम् ]

**परमाणुपरममहत्त्वान्तोऽस्य वशीकारः ॥ ४० ॥**

[ भाष्यम् ]

सूक्ष्मे निविशमानस्य परमाण्वन्तं स्थितिपदं लभत इति । स्थूले निविशमानस्य परममहत्त्वान्तं स्थितिपदं चित्तस्य । एवं तामुभयीं कोटिमनुधावतो योऽस्याप्रतीघातः स परो वशीकारः । तद्वशीकारात् परिपूर्णं योगिनश्चित्तं न पुनरभ्यासकृतं परिकर्मापेक्षत इति ॥ ४० ॥

अथ लब्धस्थितिकस्य चेतसः किंस्वरूपा किंविषया वा समापत्तिः ? इति—तदुच्यते—

[ सूत्रम् ]

**क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥ ४१ ॥**

[ विवरणम् ]

परमाणुपरममहत्त्वान्तोऽस्य वशीकारः । अन्तशब्दः प्रत्येकं संबध्यते । सूक्ष्मे निविशमानस्य परिमाणे निविशमानस्य योगिना संक्षिप्यमाणस्य । अभ्यासकाले स्वल्पमल्पतरं च क्रमेणालोचयत्परमाण्वन्तं संक्षिप्यते । स च परमाणुश्चित्तस्य संक्षेपकोटिः । तेन तदन्तं स्थितिपदम् ॥

इत्थमुभयकोटिमनुधावतश्चित्तस्य संक्षेपं विस्तारं चानुभवतो यः तद्विरोधिना प्रत्ययान्तरेण अप्रतिघातः स परो वशीकारः । पूर्वेऽपि परे एव । तथाऽप्यस्यायं विशेषः । तद्वशीकारात् परिपूर्णम् अनवखण्डितं लब्धस्थितिकं न पुनरभ्यासकृतं परिकर्मापेक्षत इति । पूर्वे तु कियदपि परिकर्मान्तरमपेक्षन्ते ॥

तत्र संक्षिप्ता विशाला विकरणी चेति त्रयी धारणा । तत्रोभयकोटिस्पर्शिनी विकरणी । परममहत्वान्तस्पृग्विशाला । परमाण्वन्तस्पृक् संक्षिप्ता । सा च त्रय्यपीह सूत्रोपात्ता ॥ ४० ॥

अथ लब्धस्थितिकस्य चेतसः अथ उक्तानामन्यतमेनोपायेन लब्धस्थितिकस्य किंस्वरूपा किंविषया वा समापत्तिरिति तन्निदिदर्शयिषयेदं सूत्रं प्रववृते—क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनता समापत्तिः ॥

[ भाष्यम् ]

क्षीणवृत्तेरिति प्रत्यस्तमितप्रत्ययस्येत्यर्थः । अभिजातस्येव मणेरिति दृष्टान्तोपादानम् । यथा स्फटिक उपाश्रयभेदात् तत्तद्रूपोपरक्त उपाश्रयरूपाकारेण निर्भासते, तथा ग्राह्यालम्बनोपरक्तं चित्तं ग्राह्यसमापन्नं ग्राह्यस्वरूपाकारेण निर्भासते ।

भूतसूक्ष्मोपरक्तं भूतसूक्ष्मसमापन्नं भूतसूक्ष्मस्वरूपाभासं भवति । तथा स्थूलालम्बनोपरक्तं स्थूलरूपसमापन्नं स्थूलरूपाभासं भवति; तथा विश्वभेदोपरक्तं विश्वभेदसमापन्नं विश्वरूपाभासं भवति ॥

[ विवरणम् ]

ननु च समापत्तेर्विषयं वक्ष्यति तृतीयपादे "[1]परार्थात् स्वार्थसंयमात् पुरुषज्ञानम्' इत्यादिना । समापत्तिस्वरूपं च संयमस्वरूपं तत्कार्यनिर्वर्तनेनैव सेत्स्यति । ततश्चानर्थकमिदं सूत्रम्—नैष दोषः—पूर्वोक्तोपायवशीकारणार्थवत्त्व-प्रदर्शनार्थत्वात् । एवं ह्येष चित्तवशीकारोऽर्थवान्, येन ग्रहीत्राद्यर्थसमापन्नं चित्तं तदाभासं भवतीति ॥

किञ्च-'वितर्काद्यनुगमात् संप्रज्ञातः' इत्युक्तम् वितर्कादिस्वरूपं चेह दर्शयि-तव्यम् । अनुक्तायां समापत्तौ वितर्कादिस्वरूपं न शक्यं दर्शयितुं समापत्तिधर्मा (दि)वितर्कादय इति । क्षीणवृत्तेरिति प्रत्यस्तमितबाह्यप्रमाणादिप्रत्ययस्येत्यर्थः ॥

ननु सर्व एव प्रत्ययाः प्रत्यस्तमिताः । सर्वप्रत्यस्तमये हि अवसिताधिकारं न स्थूलसूक्ष्मादिकमालम्बते ॥

अभिजातस्येव मणेरिति दृष्टान्तोपादानम् । यथा स्फटिक उपाश्रय-भेदात्तत्तद्रूपोपरक्त उपाश्रयाकारेण निर्भासते । तथा ग्राह्यालम्बनोपरक्तं चित्तं ग्राह्यसमापन्नं ग्राह्यस्वरूपाकारेण निर्भासते ॥

तथा भूतसूक्ष्मोपरक्तं तन्मात्रोपरक्तं भूतसूक्ष्मसमापन्नं भूतसूक्ष्मस्व-रूपावभासम् अवभासते ॥

[तथा स्थूलालम्बनोपरक्तं स्थूलरूपसमापन्नं स्थूलरूपाभासं भवति । तथा विश्वभेदोपरक्तं विश्वभेदसमापन्नं विश्वरूपाभासं भवति ॥

तथा ग्रहणेष्वपीन्द्रियेष्वपि द्रष्टव्यम् । ग्रहणालम्बनोपरक्तं ग्रहणसमापन्नं ग्रहणस्वरूपाकारेण निर्भासते ॥]

---

1. यो. सू. पा. 3. सू. 35.

[ भाष्यम् ]

तथा ग्रहणेष्वपि इन्द्रियेष्वपि द्रष्टव्यम् । ग्रहणालम्बनोपरक्तं ग्रहणसमापन्नं ग्रहणस्वरूपाकारेण निर्भासते । तथा ग्रहीतृपुरुषालम्बनोपरक्तं ग्रहीतृपुरुषसमापन्नं ग्रहीतृपुरुषस्वरूपाकारेण निर्भासते ॥

तथा मुक्तपुरुषालम्बनोपरक्तं मुक्तपुरुषसमापन्नं मुक्तपुरुषस्वरूपाकारेण निर्भासत इति ।

[ विवरणम् ]

तथा ग्रहीतृपुरुषसमापन्नं बुद्धिबोधकस्वरूपमित्यर्थः । गृहीतृस्वरूपाकारेण निर्भासते ॥

तथा मुक्तपुरुषालम्बनोपरक्तमिति । स एव बुद्धेर्बोद्धा यदा विषयवृत्तीनां न बोद्धा भवति तदा सत्त्वपुरुषान्यताख्यातिमात्रावस्था ॥

यदा उदासीनो मुक्तपुरुष इत्युच्यते तदा हि सर्वक्लेशादिमुक्तं चित्तं, सैव हि पुरुषस्य मुक्तता, या क्लेशादिविमुक्तिश्चित्तस्य । अत एव सूत्रे ग्रहीतृग्रहणमेव कृतम् । ग्रहीता पुरुषविशेष एव मुक्तपुरुष इहाभिप्रेत इति ॥

त[दा]था हि पुरुषग्रहणमेव कुर्यात् । परस्यां वशीकारसंज्ञायां जातायां न पुनः संसारयोगो भवति । तथा चोक्तम्—'सत्येव चित्तसत्त्वसम्बन्धे क्लेशादिसम्बन्धाभावात् स तु सदैव मुक्तः सदैवेश्वरः' इति ॥

तस्मात् मुक्तपुरुषालम्बनोपरक्तं मुक्तपुरुषसमापन्नं मुक्तस्वरूपाकारेण निर्भासत इति । यो हि मन्यते निवृत्तसत्त्वसम्बन्धेनैव मुक्तेन पुरुषेण समापन्नं तदाकारमेव निर्भासत इति—तदयुक्तम्—चित्तस्य स्वात्मप्रलयप्रसङ्गात् ॥

निरतिशयसूक्ष्मश्च पुरुषस्तत्समसूक्ष्मं प्रधानं तत्कार्यकार्यकार्यं (निमित्तं) सत्त्वं, तच्चित्तं प्रधानं पुरुषं वा समापद्यमानं न स्थितेन स्वेन रूपेण समापत्तुमुत्सहते । न हि घटो मृदवस्थामपरित्यक्तस्वरूपः समापद्यते ॥

ननु च कार्येणापि योगिसत्त्वेन महदहङ्कारौ संवेद्यावुच्येते । महति तावद्विप्रतिपत्तिः, संवेद्यते न वेति । यदा हि संवेद्यता ग्रहीतृमुक्तस्वरूपवत् संबन्धविशेष उपपद्यते महदहङ्कारयोरपि । व्यक्तौ हि तौ ततः संबन्धविशेषो

युज्यते। संबन्धविशेषाच्च यथा स्वपुरुषो ग्रहीतृस्वरूपश्च मुक्तश्च चित्तवृत्तिविशेष-संबन्धात् गृह्यते तद्वत् । न तु सर्वात्मनैव महदहङ्कारयोरपि ग्रहणं महत्त्वात् ॥

तयोरपि [तावपि] यदि सर्वात्मना गृह्येयाताम्, चित्तसत्त्वमात्रात्मानौ जायेयाताम्, तथा च सति तद्विषयग्रहणमेव न स्यात्। प्रधानपुरुषयोस्तु तत्संबन्धस्य चात्यन्तमव्यक्तस्वरूपत्वान्न स्वरूपग्रहणम् ॥

ननु चेश्वरस्यासर्वज्ञता, [यतः] प्रधानपुरुषतत्संबन्धा न प्रत्यक्षा इति। उच्यते—प्रधानपुरुषसंबन्धेभ्योऽन्यत्सर्वं प्रत्यक्षमित्यत्र तावत् अविप्रतिपत्तिः, निरवधिकप्रत्यक्षज्ञानाभ्युपगमात्। (यत्र त्वनुमानागोचरः) [यत्तु अस्माकमगोचरः तत्] स एवेश्वरो ज्ञातुमर्हति। ज्ञेयं चेदस्ति तत्सर्वमसौ यथा वा तथा वा जानातीति निश्चयः। अज्ञातृकस्य ज्ञेयत्वानुपपत्तेः ॥

किञ्च—यदि प्रकृतिपुरुषौ स्वरूपेण ज्ञेयत्वमा(ना)पद्येयातां तदा बुद्धिवद्भोग्यताप्रसङ्गः। ततश्च परार्थोऽपि स्यात् परश्चान्यः कल्प्यः स्यात् ॥

ननु पुरुषाणामन्योन्यभोग्यतेति न परो भोक्ता कल्प्यः—नैतदेवम्—समत्वात् पुरुषाणां विषयविषयित्वानुपपत्तेः। न हि प्रदीपावन्योन्यमुपकुरुतः।

किञ्च—भोग्यत्वे सुखादिरूपताप्रसङ्गश्च पुरुषस्य। तथा च सति प्रधानस्य निर्हेतुकत्वप्रसङ्गश्चेत्येवमादयो भूयांसो दोषाः ॥

ननु च '[1]परार्थात् स्वार्थसंयमात् पुरुषज्ञानम्' इति पुरुषप्रत्यक्षतां वक्ष्यति—सत्यं युक्तमुक्तम्। अत एवोच्यते पुरुषो न स्वरूपेण विषयीभवतीति। येनैवं तत्रोक्तम् 'न च पुरुषप्रत्ययेन बुद्धिसत्वात्मना पुरुषो दृश्यते। पुरुष एव तं प्रत्ययं स्वालम्बनं पश्यतीति। तथा ह्युक्तम्—'विज्ञातारमरे[2] केन विजानीयात्' इतीति ॥

ननु पुरुषालम्बनोपरक्तं चित्तं पुरुषस्य विषयः। तथा च सति प्रत्यक्ष एव पुरुषः। यथा घटालम्बनोपरक्ते प्रत्यये पुरुषेणोपलभ्यमाने घटः प्रत्यक्ष उच्यते—नैष दोषः—घटवत्पुरुषस्य चित्तेनाव्याप्यत्वात्। घटादिस्तु बाह्यश्चित्तेन व्याप्यते, न पुरुषः, आनन्त्यात् ॥

---

1. पा. सू. पा. 3. सू. 35.
2. बृ. उ. 2. 4. 14.

[ भाष्यम् ]

तदेवमभिजातमणिकल्पस्य चेतसो ग्रहीतृग्रहणग्राह्येषु पुरुषेन्द्रियभूतेषु या तत्स्थतदञ्जनता तेषु स्थितस्य तदाकारापत्तिः सा समापत्तिरित्युच्यते ॥ ४१ ॥

[ विवरणम् ]

परिच्छिन्नं हि चित्तं विषयीकुर्वन्न पुरुषं विषयिणमनन्तं व्याप्तुमुत्सहते । यदि पुरुषं व्याप्नोति प्रधानमपि व्याप्नुयात् ॥

तस्माद्यथा दर्पणे मुखं छायारूपेण गृह्यते, तथा पुरुषच्छायाकारेण परिणतः प्रत्ययो गृह्यते पुरुषेण । तथा च व्यासः 'यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनि' ॥ इति ।

न तु मुक्तान्यपुरुषाकारेण परिणतौ द्वारमस्ति । यदि तदाकारेण परिणमेत, मुक्तस्यापि तत्स्वमेवेति दृश्यं स्यात् । न हि चित्तस्य परिणामादन्यत्वं नामास्ति । स्वाकारेण हि परिणतं पुरुषो न तु चित्तं न पश्यति । स्वपुरुषे स्वत्वात्सति संबन्धे परिणतिद्वारमस्ति ॥

कथं तर्हि स्वपुरुषादन्यस्य स्वत्वासंबन्धिनो ग्रहणम्—उच्यते—यथा परदर्पणद्वारेण परमुखदर्शनं, तथा दर्पणस्थानीयपरसत्त्वाकारपरिणतं स्वसत्त्वं पुरुषः पश्यन् परमपि पुरुषं जानाति ॥

तस्यायमात्मा ममायमित्यन्यत्वन्त्वनुमानादेव प्रतिपद्यते स्वकीयादन्यदीयसत्त्वगतविशेषलिङ्गेन । सत्त्वानां च त्रिगुणत्वादवश्यं विशेषाः सन्ति । पुरुषाणां तु निर्विशेषत्वात्स्वरूपेण भेदो दुरवबोध एव ॥

तस्मादेवमभिजातमणिकल्पस्य चेतसो ग्रहीतृग्रहणग्राह्येषु पुरुषेन्द्रियभूतेषु तत्स्थतदञ्जनता । तेषु ग्रहीत्रादिषु तिष्ठतीति तत्स्थं तत्स्थताविशिष्टा या ग्रहीत्राद्यञ्जनता, तदेवाह—तेषु स्थितस्य तदाकारापत्तिः समापत्तिरित्युच्यते ॥

सम्यगापत्तिः समापत्तिः सा च तादृशी प्रत्यस्तमितबहिर्वृत्तेरेव भवति । यद्यपि व्युत्थितचित्तस्यापि समापत्तिरस्ति । तथाऽपि सा न समीचीनतरा, रजस्तमोभ्यां चित्तसत्त्वस्यात्यन्ताभिभूतत्वादिति ॥ ४१ ॥

[ सूत्रम् ]

**तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः ॥ ४२ ॥**

[ भाष्यम् ]

तद्यथा गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञानं इत्यविभागेन विभक्तानामपि ग्रहणं दृष्टम्। विभज्यमानाश्चान्ये शब्दधर्मा अन्ये अर्थधर्माः अन्ये विज्ञानधर्मा इत्येतेषां विभक्तः पन्थाः । तत्र समापन्नस्य योगिनो यो गवाद्यर्थः समाधिप्रज्ञायां समारूढः स चेच्छब्दार्थज्ञानविकल्पानुविद्ध उपावर्तते सा संकीर्णा समापत्तिः सवितर्का इत्युच्यते ॥ ४२ ॥

[ विवरणम् ]

सैषा समापत्तिश्चतुष्टयी । तत्र प्रथमां समापत्तिं व्याचष्टे—**शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः** । शब्दश्चार्थश्च ज्ञानं च शब्दार्थज्ञानानि तेषां विकल्पाः शब्दार्थज्ञानविकल्पाः । ध्यातव्यालम्बनविषयैर्विकल्पैः संकीर्णा विमिश्रा इतरेतरप्रत्ययानुविद्धा सा संकीर्णसमापत्तिः ॥

ननु च शब्दार्थप्रत्यया इतरेतरव्यावृत्तस्वरूपाः, योगी चैकं वस्तु ध्येयत्वेनालम्बते शब्दमर्थं प्रत्ययं वा, तत्र कः शब्दार्थज्ञानविकल्पसङ्करः ? ॥

एवमेवैतत् । तथाऽपि अयमेव संव्यवहारो लोके, यदुताविभागेन ग्रहणम् । **तद्यथा गौरिति शब्दो गौरित्यर्थो गौरिति ज्ञान**मित्यविभागेन लोके **ग्रहणं दृष्टम्** । एवं हि लोकः त्रयमपि गौरित्येव व्यपदिशति । तथाऽन्यतरग्रहणेऽवशिष्टयोरपि स्मृतिः ॥

ननु च तथाभूतमेतद्वस्तु–नैवं–शब्दार्थसङ्केतग्रहणोत्तरकालभावित्वात् । ननु सङ्केतादपि प्राक् सामान्यशब्दं यं कञ्चिदध्यवस्यत्येव—न—विविक्तानामपि ग्रहणदर्शनात् । **विविच्यमानाश्चान्ये शब्दधर्मा** गकारादिवर्णोदात्तस्वरितद्रुतमध्यविलम्बितश्रोत्रग्रहणादयः । ते नार्थज्ञानयोः । तथान्ये**ऽर्थधर्माः** सास्नालाङ्गूलककुदखुरविषाणदर्शनस्पर्शनादयः । तथा (च)अन्ये **प्रत्ययधर्माः** पुरुषग्राह्यात्मकत्वावभासात्मकत्वसंस्काराधायित्वादयः, न ते शब्दार्थयोः । न [तेन]परमार्थतोऽन्योन्यधर्मसङ्करगन्धोऽप्यस्ति । तेन **विविक्तः पन्थास्तेषाम्** ॥

**तत्र** यत्र क्वचन **समापन्नस्य यो** ह्येवार्थः **समाधिप्रज्ञामुपारूढः स चेच्छब्दार्थज्ञानविकल्पानुविद्धः** शब्दार्थसङ्केतकृतो य इतरेतरस्मृत्यनुव्याधस्तद्विशिष्टश्चेदर्थ **उपावर्तते सा सङ्कीर्णा समापत्तिः सवितर्के**त्युच्यते ॥

[ भाष्यम् ]

यदा पुनः शब्दसंकेतस्मृतिपरिशुद्धौ श्रुतानुमानज्ञानविकल्पशून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थः तत्स्वरूपाकारमात्रतयैवावच्छिद्यते। सा च निर्वितर्का समापत्तिः। तत्परं प्रत्यक्षम्। तच्च श्रुतानुमानयोर्बीजम्। ततः श्रुतानुमाने प्रभवतः। न च श्रुतानुमानज्ञानसहभूतं तद्दर्शनम्। तस्मादसंकीर्णं प्रमाणान्तरेण योगिनो निर्वितर्कसमाधिजं दर्शनमिति।

निर्वितर्कायाः समापत्तेरस्याः सूत्रेण लक्षणं द्योत्यते—

[ विवरणम् ]

अनेकजन्मान्तरशब्दार्थसङ्केतज्ञानसंस्कारविशिष्टत्वाद्योगिनोऽपि प्रथमतरा समापत्तिर्लौकिकप्रत्ययाविशिष्टा। एष तु विशेषो यत् लब्धस्थितिपदत्वाद्योगिचित्तस्य समानप्रत्ययप्रवाहतेति ॥ ४२ ॥

इदानीं निर्वितर्का समापत्तिरुच्यते। यदा पुनः शब्दसङ्केतस्मृतिपरिशुद्धौ। शब्दसङ्केतोऽस्यायं वाचकः अयमस्य वाच्य इति समयप्रतिपत्तिः। तज्जनितस्मृतिः शब्दसङ्केतस्मृतिः। तस्याः परिशुद्धिर्मिथ्यात्वादिनिवृत्तिः। सा रजस्तमसोर्न्यग्भावात् ॥

श्रुतज्ञानं आगमिकम, अनुमानज्ञानं लैङ्गिकं, ते च सामान्यविषय एवानुमानागमज्ञाने, तयोर्विकल्पो हि विशेषाध्यारोपः तेनाध्यासेन शून्यायां योगिनः समाधिप्रज्ञायां व्यावृत्तलैङ्गिकसाङ्केतिकज्ञानाध्यासायां स्वरूपमात्रेण मात्रग्रहणं दिग्देशकालानुभावादिभ्योऽपि व्यावृत्त इत्येवमर्थं, स्वैरेव धर्मैर्महीयमानः तत्स्वरूपमात्रतयैव तस्यार्थस्य स्वरूपमात्रतयैव योगिनः प्रज्ञा अवच्छिद्यते। न तस्मादर्थाद्बहिर्देशकालादि किंचिदालोचयतीत्यर्थः ॥

स्वमपि ग्रहणात्मकं रूपं तत्प्रज्ञा नालोचयति, निर्मलतरत्वात्। ग्राह्यमात्रैव सा विभाव्यते। सा च तादृशी निर्वितर्का समापत्तिः। निर्गतो वितर्कोऽस्याः निर्वितर्कः वितर्कोऽध्यारोपः। सोऽस्यां नास्ति ॥

तत् एतत् परं उत्कृष्टं शुद्धं प्रत्यक्षं अपरं प्रत्यक्षं सर्वसाधारणं पुरस्ताद्वृत्तिमध्ये पठितमिदं योगिन एवेति। तच्छ्रुतानुमानयोर्बीजम्। यद्यपि पूर्वोक्तमपि श्रुतानुमानयोर्बीजमेव, तथाऽपि तत्कार्ये श्रुतानुमाने व्यभिचरतोऽपि, न पुनर्निर्वितर्कसमाधिजप्रत्यक्षप्रभवे व्यभिचरत इत्यत आह—ततः श्रुतानुमाने प्रभवत इति ॥

[ सूत्रम् ]

**स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥४३॥**

[ भाष्यम् ]

या शब्दसङ्केतश्रुतानुमानज्ञानविकल्पस्मृतिपरिशुद्धौ ग्राह्यस्वरूपोपरक्ता प्रज्ञा स्वमिव प्रज्ञास्वरूपं ग्रहणात्मकं त्यक्त्वा पदार्थमात्रस्वरूपा ग्राह्यस्वरूपापन्नेव भवति । सा तदा निर्वितर्का समापत्तिः । तथा च व्याख्यातम् ।

[ विवरणम् ]

न च (ननु) श्रुतानुमानज्ञानसहभूतं तद्दर्शनम्, श्रुतानुमानज्ञानाभ्यामसमानविषयमित्येतत् । विशेषविषयं हि तद्दर्शनं, सामान्यविषये श्रुतानुमानज्ञाने । तस्मादसङ्कीर्णं प्रमाणान्तरेण योगिनो निर्वितर्कजं दर्शनमिति (तन्निर्वितर्कायाः तदिति तस्मादिति) समापत्तेरस्याः सूत्रेण लक्षणं द्योत्यते—**स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासान्निर्वितर्का** ॥

**शब्दसङ्केतश्रुतानुमानज्ञानविकल्पस्मृतिपरिशुद्धौ** शब्दसङ्केतविकल्पः श्रुतज्ञानविकल्पः अनुमानज्ञानविकल्पश्च, स एव स्मृतिः । स्मरणेन ह्यन्यस्यान्यधर्मोऽध्यारोप्यते । न हि वस्तु स्वरूपेण वस्त्वन्तरेऽध्यारोपयितुं शक्यम ।

ननु च कथं श्रुतानुमिते प्रत्यक्षेऽध्यारोप्येते । ननु च प्रसिद्धोऽध्यारोपः, तथा चेदं मया श्रुतमिदं मयाऽनुमितमिदमिति च पश्यति ॥

ननु तदेव तत् दृश्यमानमपि यदनुमितं श्रुतं च—न—सामान्यविशेषभेदात् । सामान्यं श्रुतमनुमितं च । विशेषस्तु प्रत्यक्षस्य विषयः । तस्मिंश्च तत्सामान्याध्यासः प्रसिद्ध एव ॥

**ग्राह्योपरक्ता** योगिनः **प्रज्ञा स्वं प्रज्ञारूपं ग्रहणात्मकं त्यक्त्वा पदार्थमात्रस्वभावा ग्राह्यस्वरूपापन्नेव भवति** । इवशब्देन ग्रहणात्मकतां न जहातीति । न हि स्फटिक उपाश्र्याश्रयतायां स्वां स्वच्छरूपतां हास्यति । किञ्च—ग्रहणव्यतिरिक्तं च ग्राह्यं वस्त्वन्तरमस्तीति चोक्तं भवति ॥

**सा निर्वितर्का समापत्तिः । तथा च व्याख्यातम्** । तस्या ह्येकबुद्ध्युपक्रमोऽर्थात्मा । उपक्रम्यते एकया बुद्ध्या यः स एकबुद्ध्युपक्रमः एकबुद्धिपरिच्छेद्य इति । अर्थात्मा बोध्यात्मेत्येतत् ॥

[ भाष्यम् ]

तस्या एकबुद्ध्युपक्रमो ह्यर्थात्मा अणुप्रचयविशेषात्मा गवादिर्घटादिर्वा लोकः । स च संस्थानविशेषो भूतसूक्ष्माणां साधारणो धर्मः

[ विवरणम् ]

गवादिर्घटादिर्वा विषयः न तु बोध एव गवाद्याकारो विषयः । अणुप्रचयविशेषात्मा अणूनां तन्मात्रावयवानां प्रचयविशेष आत्मा यस्य स गवादिर्घटादिर्वा आलम्बनं बुद्धेः स च विषयः संस्थानविशेषः तथा संस्थितानि हि तानि भूतसूक्ष्माणि ॥

एतदुक्तं भवति—भूतसूक्ष्माणां साधारणो धर्म इति आत्मभूतो न व्यतिरिक्तः । यथा सर्पस्य आभोगकुण्डलनादि ॥

येषां पुनरत्यन्तव्यतिरिक्तमन्यदेव कारणात् कार्यं, तेषां कारणतन्त्रत्वं कार्यस्य न प्राप्नोति । अंशुतन्त्रो हि तन्तुः तन्तुतन्त्रश्च पटः । न चात्यन्तान्यत्वेऽन्यतन्त्रत्वं दृष्टमन्यस्य । यथा मृत्पिण्डतन्त्रता न पटस्य, तन्तूनां वा ॥

किञ्च—तद्विनाशानुविनाशित्वं च न शक्यं, न हि कपालविनाशमनुविनश्यति पटः ॥

अथोच्येत, सम्बन्धः कारणमिति । पटस्य हि तन्तवस्तन्तूनाञ्चांशव इति सम्बन्धस्तत्र हेतुः कारणं तत्तन्त्रत्वतदनुविनाशयोरिति ॥

अत्रोच्यते—चैत्रक्षेत्रादिसम्बन्धेऽपि प्रसङ्गः स्यात् । चैत्रस्यापि क्षेत्रादितन्त्रता तदनुविनाशित्वं च सम्बन्धविशेषात् प्रसज्येत ॥

अथापि स्यात्—समवायलक्षणः सम्बन्धः कारणमिति—न—तस्यापि संबन्धत्वाविशेषादहेतुत्वं, यथान्यसंबन्धः संबन्धिनोरन्यतरतन्त्रत्वाद्यहेतुः एवं समवायलक्षणस्यापि संबन्धत्वादन्यतरतन्त्रत्वादावहेतुत्वम् ॥

अपि च—न द्रव्यव्यतिरेकेण कर्मसामान्यविशेषसमवायाः सन्ति । द्रव्यतन्त्रत्वाद्युपपत्तेरेव । तत्रापि सम्बन्धस्याप्यहेतुत्वमेव ॥

किञ्चान्यत्—संबन्धस्य च संबन्धिनोरेवान्यतरतन्त्रत्वादिहेतुत्वे समवायस्यापि समवायान्तरं तस्याप्यन्य इत्यनवस्था प्रसज्येत । यथा गुणादीनां समवायलक्षणात् संबन्धात् द्रव्यतन्त्रत्वं, तथा समवायस्यापि द्रव्यव्यतिरिक्तत्वे द्रव्यतन्त्रत्वार्थं समवायान्तरं कल्प्येत, तस्याप्यन्यत्तस्याप्यन्यदित्यनवस्था स्यात् ॥

प्रागुत्पत्तेरभावात् कार्यस्य कारणेन संबन्धानुपपत्तिः, अविशिष्टं चासत्त्वं शशविषाणस्य घटस्य च। तत्र घटेनैव कारणस्य संबन्धो न शशविषाणादिभिरिति हेतुर्वदितव्यः ॥

प्राक् असन्नोत्पद्येत शशविषाणवत् । यस्तु तन्तुभ्योऽन्यः स तन्तुभ्यो नोत्पद्यते, तन्तुभ्योऽन्यत्वात् । यथा तन्तुभ्यो घटः ॥

इतर आह—प्राक् सन्नपि नोत्पद्येत, सत्वात्, विद्यमानघटवदिति । यो यस्मादनन्यः सोऽपि तस्मान्नोत्पद्यते, विद्यमानत्वात्, स्वरूपवदिति ॥

अपर आह—यदि सन्नोत्पद्यत इति सत उत्पत्त्यभाव उच्येत, सिद्ध-साध्यता स्यात् । अथाभिव्यक्त्यभावः, तदा दृष्टान्ताभावः ॥

यदप्युच्यते यो यस्मादनन्य इति, तत्रापि सिद्धसाध्यता दृष्टान्ताभावश्च । स्वरूपादेव ह्यभिव्यज्यते, नासत्यभिव्यङ्ग्यस्वरूपेऽभिव्यक्तिरभिव्यञ्जकसहस्रेणापि शक्यते कर्तुम् ॥

किञ्चान्यत्—सर्वव्यवहारलोपश्च । कथं ? यदा देवदत्तस्य गौरश्वो वा प्रातर्विद्यमानकर्णलाङ्गूलः पुनरटवीं गतः केनचिल्लूनकर्णो लूनलाङ्गूलो वा स्यात्, तदा पूर्वावयवविभागाद्विनष्टः, अन्यस्तु नवः प्रलूनकर्णलाङ्गूलोऽस्वामिकः सञ्जात इति येन केनचिदुपादीयेत, तथा चावयवविभागः सर्वत्र सम्भवतीति स्वस्वामिसम्बन्धादिनियमाभावादशेषव्यवहारलोपः स्यात् ॥

अथ ब्रूयात्—पूर्वोपार्जितावयवैरेवावयवी नवः प्रलूनकर्णलाङ्गूल आरब्ध इति—नैवम्—न हि मातापित्रादिव्यतिरेकेणेदानीन्तनलूनकर्णलाङ्गूलावयव्यन्तरप्रत्यारम्भिणो दृश्यन्ते ॥

किंच—यस्य च क्षेत्रे लूनकर्णलाङ्गूलो जातस्तस्यैवासौ स्यात्, न पूर्वावयविकस्य, तत्क्षेत्रजाततृणपलाशादिवत् ॥

यथा चान्यक्षेत्रगतानि बीजानि सलिलौघेनान्यक्षेत्रमुपनीतानि चेत्तत्तद्बीज-निष्पन्नसस्यं क्षेत्रवानेव गृह्णाति, न तु पूर्वबीजवान् (तः) । न चास्यासौ प्रतिबध्नाति विद्वानपि मदीयबीजपरिनिष्पन्नं सस्यमहमुपादीयेति ॥

तथा लूनकर्णलाङ्गूलमपि क्षेत्रवानेव गृह्णीत । न तत्र प्रतिबन्ध(रूप) नीयम्मदीयावयवैरारब्धोऽयमवयवीति ॥

[ भाष्यम् ]

आत्मभूतः फलेन व्यक्तेनानुमितः स्वव्यञ्जकाञ्जनः प्रादुर्भवति । धर्मान्तरस्य कपालादेरुदये च तिरोभवति । स एष धर्मोऽवयवीत्युच्यते । योऽसावेकश्च महांश्चाणीयांश्च स्पर्शवांश्च क्रियाधर्मकश्चानित्यश्च तेनावयविना व्यवहाराः क्रियन्ते ।

[ विवरणम् ]

येषामप्येकस्मिन्गृहीते तस्मिन्नश्वे लूनकर्णलाङ्गूलके जाते स्वक्षेत्रे च दृष्टे स एवाश्वदाता अन्योयं (वितिसन्योयं) महत्तमादश्वान्मया दत्तो महत्तम इति हरेत । हरतामिति चेत्सर्वव्यवहारलोपप्रसङ्गः शास्त्रकोपश्च । तस्माद[न्योऽ]-वयवेभ्यः कारणेभ्य एकोऽवयवी कार्यमिति सिद्धम् ॥

यदप्युच्यते—शब्दप्रत्ययधर्मादिभेदादन्य इति, तदप्ययुक्तम् । दृश्यते हि शब्दादिभेदेऽप्यनन्यत्वम् । यथा हस्तः करः पाणिरिति शब्दभेद एकस्य, पितृत्वं पुत्रत्वं च, प्रत्ययभेद एकस्यैव बद्धः पुनर्मुक्तः स्थितो गतश्चेति काल-भेदात् । दाहकत्वं पाचकत्वमित्यादयो धर्मभेदा इति । दिग्देशादिभेदास्त्वसिद्धा एव । तस्मादाह—आत्मभूता इति ॥

स च स्वफलेन व्यक्तेनानुमितः । फलेन उदकाहरणधारणसम्भव-नादिना । यस्य हि फलं कार्यं व्यक्तमुपलभ्यते सोऽस्तीति निश्चयः । अनुमित इति विप्रतिपन्नापेक्षया, साधारणशब्देन शक्तिरूपेण वोच्यते । स तु प्रत्यक्ष एव अव्यक्तेन दण्डसूत्रकुलालादिकारकव्यापाराभिव्यक्तेन फलेन कार्येण घटाख्येन प्रागपि मृदाद्यवस्थायामस्तित्वेन अनुमितः स एव दण्डादिकारकैः स्वव्यञ्जकैरभि-व्यज्यमानः प्रादुर्भवति धर्मान्तरोदये च तिरोभवति स एष भूतसूक्ष्माणां धर्मोऽवयवीत्युच्यते ॥

एतदुक्तं भवति—अणूनामप्रत्यक्षत्वान्नाविर्भावतिरोभावौ युक्तौ । (तत) स्तश्च तौ । तस्माद्य आविर्भवति, धर्मान्तरोदये विरोधात्तिरोभवति च, आविर्भावे च यो व्यञ्जकाद्यपेक्षते सोऽवयवीत्युच्यते । यश्चैवंधर्मः सोऽणुभ्योऽन्य इति ॥

किञ्च—अमी अप्यन्ये हेतवोऽवयविसद्भावे—योऽसावेकश्च महांश्चाणीयांश्च क्रियाधर्मकश्चानित्यश्च । प्रत्येकमेते हेतवः ॥

[ भाष्यम् ]

यस्य पुनरवस्तुकः स प्रचयविशेषः, सूक्ष्मञ्च कारणमनुपलभ्यं अविकल्पस्य तस्य अवयव्यभावात् अतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति प्रायेण सर्वमेव प्राप्तं मिथ्याज्ञानमिति ।

[ विवरणम् ]

अपि च—एको घट इति घटशब्दवाच्यस्यैकत्वेन सामानाधिकरण्यात् । अस्ति चेदं सामानाधिकरण्यं योऽसावेक इति । न हि बहूनामणूनामेकत्वेन सामानाधिकरण्यमुपकल्पते ॥

तथा महत्त्वेन । न चाणूनां अमहतां महत्त्वेन सामानाधिकरण्यं युज्यते । तथाऽणीयस्त्वेन । न ह्यणूनामण्वन्तरापेक्षया अणीयस्त्वं घटते । सर्व एव हि तेऽणीयांसः । नापि चाणूनामणुत्वं गृह्यतेऽणुभ्यः । अणुत्वे वस्त्वन्तरस्याणीयस्त्वमुपपत्स्यते ॥

किञ्च—क्रियाधर्मकश्च । क्रिया धर्मो यस्य स क्रियाधर्मकः । फलवद्व्यापारनिर्वृत्तिकरत्वादित्युक्तं भवति । न ह्यणूनां फलवद्व्यापारनिर्वृत्तिकरत्वं युक्तम् । अशक्यप्रयोज्यत्वादस्मदादिभिः । किञ्च—अनित्यत्वात् । न ह्यणूनामनित्यत्वं गृह्यते ॥

किंच—दृश्यत्वात् । न ह्यणवो दृश्यन्ते । तथा स्पृश्यत्वाच्च हानाच्चोपादानाच्च धारणाच्चेत्येवमादयः । तेनावयविना व्यवहाराः क्रियन्ते नाणुभिरिति ॥

यस्य पुनः इत्थं प्रमाणसुप्रसिद्धसत्ताकोऽपि अवस्तु[कः] अवयवी, स प्रचयविशेषः सूक्ष्मं च कारणमनुपलभ्यं अण्वादि, तस्यावयव्यभावादतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति प्रायेण सर्वमेव विषयज्ञानं प्राप्तं मिथ्याज्ञानम् ॥

ततः सर्वमेव ज्ञानं शब्दाद्याकारेण सुखाद्याकारेण तद्ज्ञानाकारेण चोपजायते । शब्दादयश्च ज्ञानाकारकरावयवित्वाभिमता नाभ्युपगम्यन्ते । सुखादयोऽपि विषयत्वादवयविपक्षा एव । तथा तज्ज्ञानमेव ज्ञानाकारकरत्वात्स्वरूपमपि मिथ्येति प्राप्तं सर्वमेव मिथ्याज्ञानम् ॥

ततश्च प्रत्यक्षानुमानयोरप्याभासत्वमेव तेनाभ्युपेतं तयोरपि शब्दादिविषयत्वात् ॥

[ भाष्यम् ]

तदा च सम्यग्ज्ञानमपि किं स्यात्? विषयाभावात्। यद्यदुपलभ्यते तत्तत् अवयवित्वेनाम्नातम्।

तस्मादस्त्यवयवी यो महत्त्वादिव्यवहारापन्नः समापत्तेर्निर्वितर्काया विषयीभवति ॥ ४३ ॥

[ विवरणम् ]

यदपि सर्वज्ञज्ञानमनित्यदुःखशून्यानात्मकत्वादिविषयं तस्यापि विषयाभावात्तदपि मिथ्याज्ञानं प्राप्तमिति, स्वतन्त्रस्य तीर्थकरस्य चाप्रामाण्यं, तत्र तीर्थकरसद्धर्माभावश्चाभ्युपगतो भवति। शब्दादिवत्प्रमाणविषयत्वाविशेषात् ॥

तदेतत्प्रतिपादयति—**सम्यग्ज्ञानमपि किं स्याद्विषयाभावात्। यद्यदुपलभ्यते** तत्तदवयवित्वेनाम्नातमिति, ज्ञानस्य स्वाकारसमर्पकत्वाविशेषात्। तच्च स्वाकारसमर्पकं किञ्चन नाभ्युपेयत इति सर्वस्यात्मीयस्य ज्ञानस्य तेन मिथ्यात्वमापादितम् ॥

तथा च सम्यग्ज्ञानमपि किं स्यात्, यदपेक्षया मिथ्याज्ञानमभिसन्धीयते ॥

यदा चावयविनं सर्वप्रमाणसम्यक्सर्वज्ञानसिद्धमपह्नुते तदा न सम्यग्ज्ञानस्य विषयः सम्पादयितुं पार्यते ॥

यदा च न पारयति, तदा कथमभिसन्दधीत सर्वं मिथ्येति। सम्यग्ज्ञानमपेक्ष्य मिथ्याज्ञानं मिथ्याभावमासीदति आपेक्षिकत्वात्सम्यङ्मिथ्याज्ञानयोः ॥

यश्चापि मन्यते—निर्विषयं ज्ञानं सम्यगिति, तस्यापि स्वरूपाग्रहणात् तदस्तित्वानुपपत्तिः। गृह्यते चेद्विषयत्वादवयविमिथ्यात्वं, तन्मिथ्यात्वाच्च तज्ज्ञानमिथ्यात्वं, तथा तज्ज्ञानमपीति सर्वमिथ्यात्वमुक्तं पूर्वमेव ॥

अपि च—निर्विषयज्ञानसम्यक्त्वे सर्वज्ञानस्य विषयानभ्युपगमान्निर्विषयत्वमिति, सम्यक्त्वमेव प्राप्नुयात्। तथापि तु सर्वज्ञानसम्यक्त्वान्मिथ्याज्ञानं किंस्यादिति वक्तव्यम् ॥

अथापि ब्रूयात्—यत्सविषयमिवाभाति तन्मिथ्याज्ञानं, यदत्यन्तनिर्विषयं तत्सम्यगिति। तथाऽपि तस्यास्तित्वे प्रमाणाभाव इत्युक्त एव दोषः। तस्मादवयवी सम्यग्ज्ञानस्य विषयोऽवश्याभ्युपगन्तव्यः इत्याह—**तस्मादस्त्यवयवी यो महत्त्वाद्यवहारापन्नः समापत्तेर्निर्वितर्काया विषयीभवतीति ॥ ४३ ॥**

[ सूत्रम् ]

**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥**

[ भाष्यम् ]

तत्र भूतसूक्ष्मकेष्वभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते। तत्राप्येकबुद्धिनिर्ग्राह्यमेवोदितधर्मविशिष्टं भूतसूक्ष्ममालम्बनीभूतं समाधिप्रज्ञायामुपतिष्ठते। या पुनः सर्वथा सर्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु

[ विवरणम् ]

**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ।** **तत्र भूतसूक्ष्मेष्वभिव्यक्तधर्मकेषु** तन्मात्रेष्वेव **देशकालनिमित्तानुभवावच्छिन्नेषु** देशावच्छिन्नेषु कालावच्छिन्नेषु निमित्तावच्छिन्नेष्वनुभवावच्छिन्नेष्विति प्रत्येकमवच्छिन्नशब्दः। सर्वं हि वस्तु देशादिभिरवच्छिद्यमानं विषयिणा ज्ञात्रा संबध्यमानं व्यवहाराय कल्पते। तेष्वेवंभूतेष्वेवंभूतैव देशादिविकल्पाभिसंहितैव **या समापत्तिः सा सविचारेत्युच्यते** । ततश्च सविचारायाः सवितर्काविशेषत्वं सिद्धम् ॥

कथम्? इहाप्यध्यासाविशेषात् । अयन्तु विशेषः शब्दसङ्केतार्थज्ञानदेशादिसर्वाध्यासाः सवितर्कायाम् ॥

इह पुनस्तन्मात्रसूक्ष्मधर्मेषु शब्दसङ्केतस्याप्रसिद्धत्वाद्विशिष्टनामसङ्केतज्ञानानध्यासः देशाद्यध्यासश्च सूक्ष्मविषयत्वञ्चेति सवितर्काविशेषत्वसिद्धिः ॥

**तत्राप्येकबुद्धिनिर्ग्राह्यमेवोदितधर्मविशिष्टं** उक्तदेशादिधर्मविशिष्टमुद्भूतधर्मविशिष्टं वा **भूतसूक्ष्ममालम्बनीभूतं** न तु निर्विषयं ज्ञानमेव **समाधिप्रज्ञायामुपतिष्ठते** ॥

**यदा पुनः सर्वथा** सर्वप्रकारेण **सर्वतः** सर्वत्र **शान्ताश्चोदिताश्चाव्यपदेश्याश्च ये धर्मास्ते शान्तोदिताव्यपदेश्यधर्माः तैः अनवच्छिन्नेषु** । शान्त इति यो व्यापारं कृत्वोपरतो धर्मः । उदित इति यो व्यापारमारूढः । अव्यपदेश्य इति न शान्तो नाप्युदितः नाप्युद्भावयद्दृश्यमाननिमित्तः । तद्यथा—सुवर्णस्यादृष्टानेकाश्रुताकारोपजनशक्तयस्ता अव्यपदेश्या धर्माः । **तैरनवच्छिन्नेषु**

[ भाष्यम् ]

सर्वधर्मानुपातिषु सर्वधर्मात्मकेषु समापत्तिः सा निर्विचारेत्युच्यते। एवंस्वरूपं हि तद्भूतसूक्ष्ममेतेनैव स्वरूपेणालम्बनीभूतमेव समाधि-प्रज्ञास्वरूपमुपरञ्जयति।

प्रज्ञा च स्वरूपशून्येवार्थमात्रा यदा भवति, तदा निर्विचारेत्यु-च्यते। तत्र महद्वस्तुविषया सवितर्का निर्वितर्का च। सूक्ष्मवस्तुविषया सविचारा निर्विचारा च। एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्या-ख्यातेति ॥ ४४ ॥

[ सूत्रम् ]

सूक्ष्मविषयत्वञ्चालिङ्गपर्यवसानम् ॥ ४५ ॥

[ विवरणम् ]

भूतसूक्ष्मेषु सर्वधर्मानुपातिषु सर्वान्धर्माननुपतन्ति तानि सूक्ष्माणि सर्वविशेषारम्भ-कत्वात्। सर्वात्मकेषु सर्वेभ्यो विषयेभ्योऽनन्यत्वात्तन्मात्राणाम्। तत्र या समापत्तिः सा निर्विचारेति। निर्वितर्काया यल्लक्षणं तत्सर्वमिह निर्विचारायां द्रष्टव्यम् ॥

तद्दर्शयति—एवंस्वरूपं हि तद्भूतसूक्ष्ममनेनैव स्वरूपेण देशकाल-निमित्तानुभवादिविशेषविरहितेन सर्वात्मकेन सर्वधर्मानुपातिना आलम्बनीभूतमेव समाधिप्रज्ञामुपरञ्जयति ॥

प्रज्ञा च स्वरूपशून्येवार्थमात्रा यदा भवति तदा निर्विचारा। तस्मान्निर्वितर्काविशेषा निर्विचारा। तत्स्वयमेव दर्शयति—महद्वस्तुविषया। महतः वस्तु महद्वस्त्विति समासः राहुशिर इति यथा। तद्विषयो यस्याः सा महद्वस्तु-विषया सवितर्का निर्वितर्का च सूक्ष्मवस्तुविषया सविचारा निर्विचारा चेति ॥

एतयैव सवितर्कानिर्वितर्काख्यया द्व्या समापत्त्या सविचारा निर्विचारा च समापत्तिर्द्वयी व्याख्याता। उभयोरिति सवितर्कनिर्वितर्कयोर्मध्ये एतयैव निर्वितर्कया वितर्कहानिर्व्याख्याता निर्विचारा व्याख्यातेति। सविचारा चार्थात्स-वितर्कया व्याख्याता लक्षणस्योभयत्र समानत्वात्। उक्तश्च विशेषः ॥ ४४ ॥

सविचारा निर्विचारा च समापत्तिः सूक्ष्मविषयेत्युक्तम्। तत्प्रसङ्गेनेदं चिन्त्यते—कि(मसमानं)मवसानं सूक्ष्मविषयत्वमिति। सूक्ष्मविषयत्वञ्चालिङ्ग-पर्यवसानम्। पार्थिवस्याणोर्गन्धमात्रस्वरूपमात्रतेति पृथिवीसमीक्षया सूक्ष्मो विषयः ॥

[ भाष्यम् ]

पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः । आप्यस्य रसतन्मात्रम् । तैजसस्य रूपतन्मात्रम् । वायवीयस्य स्पर्शतन्मात्रम् । आकाशस्य शब्दतन्मात्रमिति । तेषामहङ्कारः । अस्यापि लिङ्गमात्रं सूक्ष्मो विषयः । लिङ्गमात्रस्याप्यलिङ्गं सूक्ष्मो विषयः । न चालिङ्गात्परं सूक्ष्ममस्ति ।

नन्वस्ति पुरुषः सूक्ष्म इति—सत्यम्—यथा लिङ्गात्परमलिङ्गस्य सौक्ष्म्यं, नचैवं पुरुषस्य । किन्तु, लिङ्गस्यान्वयिकारणं पुरुषो न भवति, हेतुस्तु भवतीति । अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम् ॥ ४५ ॥

[ विवरणम् ]

गन्धमात्रस्वरूपमात्रस्यापि लिङ्गमात्रं महत्तत्वं सूक्ष्मो विषयः । ततो लिङ्गमात्रान्महतो निर्वृत्तानि सहाहङ्कारेण तन्मात्राणि लयं गच्छन्तीति लिङ्गं, लयाद्वा प्रधानाल्लिङ्गात्प्रत्यागच्छन्तीति लिङ्गं, तद्विपरीतमलिङ्गं प्रधानं न लयं गच्छति, नाप्यन्यतः कुतश्चित् लयादागच्छति । लिङ्गमात्रस्यालिङ्गं सूक्ष्मो विषयः ॥

न चालिङ्गात्परं सूक्ष्ममस्ति । सूक्ष्मं नाम स्थूलकार्यापेक्षया कारणं, तच्चालिङ्गावसानम् । न चालिङ्गात् प्रधाना(ल्लिङ्गा)दन्यत्सूक्ष्मं कारणमस्ति ॥

ननु पुरुष इति । ननु तत्र पुरुषस्यानाशङ्कैव, कार्यकारणसूक्ष्मतया प्रक्रमात्—नैष दोषः—पुरुषस्यापि कैश्चित्कारणत्वस्याभ्युपगमात् । तदाशङ्कयैव ह्येतदुच्यते ननु पुरुष इति । सत्यमलिङ्गात्मक[त्व]मलिङ्गस्य सौक्ष्म्यम् । कुतः? यतः कारणमलिङ्गं लिङ्गस्य । यद्यस्यान्वयिकारणं तत्तदपेक्षया सूक्ष्ममिति प्रकृतम् । ननु पुरुषोऽप्यलिङ्गात्मक एव । बाढं, न तु लिङ्गापेक्षया पुरुषः सूक्ष्मः । कुतः? यतस्तु लिङ्गस्यान्वयिकारणं पुरुषो न भवति सत्यप्यलिङ्गात्मकत्वे । कार्यस्य चैतन्येनानन्वितत्वात् ॥

किञ्च—पुरुषस्यापि भोग्यत्वप्रसङ्गः । तथा च पारार्थ्यं सुखदुःखमोहात्मकत्वं च, निर्हेतुकत्वं च प्रधानस्य (पुरुषस्य) । तच्च सर्वप्रमाण(प्राण) विप्रकुपितमित्यत आह—हेतुस्तु भवतीति । प्रधानप्रवृत्तौ भोक्तृत्वेन निमित्तं भवतीत्यर्थः । अतः प्रधानस्य सौक्ष्म्यं निरतिशयं व्याख्यातम् ॥ ४५ ॥

[ सूत्रम् ]

## ता एव सबीजः समाधिः ॥ ४६ ॥

[ भाष्यम् ]

ताश्चतस्रः समापत्तयः बहिर्वस्तुबीजा इति समाधिरपि सबीजः । तत्र स्थूलेऽर्थे सवितर्को निर्वितर्कः, सूक्ष्मेऽर्थे सविचारो निर्विचारः, इति चतुर्धोपसंख्यातः समाधिरिति ॥ ४६ ॥

[ सूत्रम् ]

## निर्विचारवैशारद्येऽध्यात्मप्रसादः ॥ ४७ ॥

[ भाष्यम् ]

अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यम् । यदा निर्विचारस्य समाधेः वैशारद्यमिदं जायते, तदा योगिनो भवत्यध्यात्मप्रसादो भूतार्थविषयः क्रमानुरोधी[1] स्फुटः प्रज्ञाऽऽलोकः ।

[ विवरणम् ]

ता एव सबीजः समाधिः । चतस्रः समापत्तयो बहिर्वस्तुविषया इति बहिर्वस्तुविषयत्वं हेतुः सबीजत्वे । समाधिरपि सबीजः सम्प्रज्ञातो 'वितर्कविचारानन्दास्मितारूपानुगमात्सम्प्रज्ञातः' इत्युपव्याख्यातः । स्थूलेऽर्थे सवितर्को निर्वितर्कः, सूक्ष्मेऽर्थे सविचारो निर्विचार इति चोपव्याख्यातः वितर्कादिलक्षणसूत्रेण ॥ ४६ ॥

निर्विचारवैशारद्येऽध्यात्मप्रसादः । अशुद्ध्यावरणमलापेतस्य अशुद्धिरेवावरणं तदेव मलं क्लेशादिकं तस्मादपेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यम् । यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते, तदा योगिनो भवत्यध्यात्मप्रसादः आत्मादिज्ञानविवेकः । अस्यैव व्याख्यानं भूतार्थविषयः [1]क्रमानुरोधी परिपाटिकया यावत्क्लेशक्षयमनुरुद्धयत इति क्रमानुरोधी स्फुटं विविक्ततरं शुद्धतरात्मकः प्रज्ञालोकः प्रज्ञैवालोकः तया हि यथावस्तु जानाति ॥

---

1. क्रमाननुरोधी. इति वाचस्पत्यभिमतः पाठः ॥

तथा चोक्तम्—

" प्रज्ञाप्रासादमारुह्य अशोच्यः शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति ॥" इति ४७ ॥

[ सूत्रम् ]

**ऋतंभरा तत्र प्रज्ञा ॥ ४८ ॥**

[ भाष्यम् ]

तस्मिन् समाहितचित्तस्य या प्रज्ञा जायते, तस्या ऋतंभरा इति संज्ञा भवति । अन्वर्था च सा, सत्यमेव बिभर्ति, न च तत्र विपर्यासज्ञानगन्धोऽप्यस्तीति ।

तथा चोक्तम्—

" आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ॥" इति ॥ ४८ ॥

सा पुनः—

[ विवरणम् ]

तथा चोक्तम्—

' प्रज्ञाप्रासादमारुह्य न शोच्यश्शोचतो जनान् ।
भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति ॥' इति ॥ ४७ ॥

ऋतंभरा तत्र प्रज्ञा । तस्मिन् प्रज्ञालोकेऽध्यात्मप्रसादे समाहितस्य या प्रज्ञा जायते विवेकजन्मा, तस्या विवेकजन्मनः ऋतम्भरेति संज्ञा भवति । अन्वर्थैव सा सत्यमेव बिभर्ति न तत्र विपर्यासज्ञानगन्धोऽप्यस्ति । प्रक्षीणसकलविपर्यासकल्मषस्य हि जायते । जायमाना च विषयकळङ्कमपनुदति ॥

तथा चोक्तम्—

' आगमेनानुमानेन ध्यानाभ्यासरसेन च ।
त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् ॥' इति ।

योगाङ्गप्रज्ञां त्रिधा विभजते । तत्रैको भागः शास्त्राचार्योपदिष्टार्थानुसारी । द्वितीयस्तस्यैव युक्त्याऽनुमानेन विचार्यागमार्थविरोधिनिराकरणपूर्वकं तत्सम्यगुपपादनपरः । तृतीयस्तु सदागमानुमानसम्यगुपपन्नार्थालम्बनस्य प्रत्ययस्यानुशीलनं रसोपयोगी । तदित्थं त्रिधा प्रकल्पयन्योगी योगं लभते ॥ ४८ ॥

[ सूत्रम् ]

श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् ॥ ४९ ॥

[ भाष्यम् ]

श्रुतं आगमविज्ञानम् । तत् सामान्यविषयम् । न ह्यागमेन शक्यो विशेषोऽभिधातुम् । कस्मात्? न हि विशेषेण कृतसङ्केतः शब्द इति । तथा अनुमानं सामान्यविषयमेव । 'यत्र प्राप्तिः तत्र गतिः, यत्राप्राप्तिः तत्र न भवति गतिः' इत्युक्तम् । अनुमानेन च सामान्येनोपसंहारः । तस्मात् श्रुतानुमानविषयो न विशेषः कश्चिदस्तीति ।

न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लोकप्रत्यक्षेण ग्रहणमस्ति । न चास्य विशेषस्य अप्रमाणकस्य अभावोऽस्तीति समाधिप्रज्ञानिर्ग्राह्य एव स विशेषो भवति भूतसूक्ष्मगतो वा पुरुषगतो वा ।

[ विवरणम् ]

सा पुनः ऋतम्भरा प्रज्ञा सामान्यपुरुषप्रत्ययविषयादन्यविषयेत्याह—श्रुतानुमानप्रज्ञाभ्यामन्यविषया । विशेषः विशेषाणामानन्त्यान्न सङ्केतयितुं शक्यते । सामान्येन हि कृतसङ्केतः शब्दः । ततश्चागृहीतविशेषसङ्केतो न विशेषमभिधातुं ज्ञापयितुं वा शक्नोति ॥

तथानुमानं सामान्यविषयमेव । तदप्युक्तमेव 'सामान्यावधारणप्रधाना वृत्तिः' इति । तथोदाहरणेन च प्रतिपादितम् 'यत्र प्राप्तिस्तत्र गतिः । यत्राप्राप्तिस्तत्र न भवति गतिः' इति । अनुमानेन सामान्योपसंहारः । सामान्यमात्रमनुमानेनोपसंह्रियते । तस्माच्छ्रुतानुमानविज्ञानविषयो न विशेषः कश्चिदस्ति ॥

यद्येवं न लोकप्रत्यक्षेणापरेण भूतसूक्ष्मगतः पुरुषगतो वा विशेषः प्रज्ञायेत । नान्यच्च प्रमाणत्रयव्यतिरिक्तं प्रमाणमस्ति, येन तद्विशेषं सञ्जानीमहे इति चेदाह—न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लोकप्रत्यक्षेण ग्रहणम् । न चास्य विशेषस्याप्रमाणकस्याभावोऽस्तीति । प्रमाणावगम्यमानरूपो हि भावोऽस्ति राजवीथीमधिरोहति । तस्मात् समाधिप्रज्ञानिर्ग्राह्य एव विशेषो भवति भूतसूक्ष्मगतः पुरुषगतो वा ॥

[ भाष्यम् ]

तस्मात् श्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वात् इति ॥ ४९ ॥

समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवो नवो जायते—

[ सूत्रम् ]

**तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥**

[ भाष्यम् ]

समाधिप्रज्ञाप्रभवः संस्कारो व्युत्थानसंस्काराशयं बाधते । व्युत्थानसंस्काराभिभवात् तत्प्रभवाः प्रत्यया न भवन्ति । प्रत्ययनिरोधे समाधिरुपतिष्ठते । ततः समाधिजा प्रज्ञा, ततः प्रज्ञाकृताः संस्काराः इति, नवो नवः संस्काराशयो जायते । ततश्च प्रज्ञा, ततश्च संस्कारा इति ।

[ विवरणम् ]

ननु च ते सूक्ष्मगता विशेषाः प्रत्यक्षेणावगम्यन्ते इति किमीश्वराज्ञापितम्? वस्तुत्वादवगम्यन्त इति चेत्—आगमानुमानाभ्यां सन्तीत्यवगम्यन्त एव । न च नियामकं किंचिदस्ति प्रत्यक्षेणैव निर्ग्राह्या इति । न हि विशेषा हस्ततलगता अपि सर्वे गृह्यन्ते—न—अन्यवस्तुगतविशेषाणां प्रत्यक्षग्राह्यत्वस्यानुमेयत्वात् ॥

कथम्? एवं मन्यते—भूतसूक्ष्मादिगता विशेषाः प्रत्यक्षग्राह्याः कस्यचित्, कार्यवस्तुविशेषत्वात्, गृह्यमाणस्वपाणिगतविशेषवदिति । तस्माच्छ्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा, विशेषार्थत्वादिति । विशेषार्था हि सा ॥४९॥

समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवो जायते । प्रज्ञा हि संस्कारारम्भिणीति सिद्धम् । प्रज्ञाभिनवत्वात्तत्संस्कारः प्रत्यग्रतरो जायते इति विशेषः । प्रज्ञानवत्वं तु तस्या (सामान्य) अन्यविषयत्वात् । तज्जस्संस्कारोऽन्यसंस्कारप्रतिबन्धी ऋतम्भरप्रज्ञाप्रभवसंस्कारो व्युत्थानसंस्काराशयं अन्यं बाधते विशिष्टयथार्थविषयप्रभवत्वात्प्रतिबध्नाति । आमोक्षाच्छेत इति संस्काराशयः ॥

व्युत्थानसंस्काराभिभवात् व्युत्थानसंस्काराशयस्य समधिप्रज्ञासंस्कारेणाभिभवात् तत्प्रभवाः व्युत्थानसंस्कारप्रभवाः प्रत्यया न भवन्ति । प्रत्ययनिरोधे व्युत्थानप्रत्ययनिरोधे समाधिः सम्प्रज्ञात इव उपतिष्ठते । ततः समधिजा प्रज्ञा, ततः प्रज्ञाकृताः संस्कारा इति, एवं नवः संस्काराशयो वर्धते । ततश्च प्रज्ञा ततश्च संस्कारा इति ॥

[ भाष्यम् ]

कथमसौ संस्काराशयश्चित्तं साधिकारं न करिष्यतीति ? न ते प्रज्ञाकृताः संस्काराः क्लेशक्षयहेतुत्वात् चित्तमधिकारविशिष्टं कुर्वन्ति । चित्तं हि ते स्वकार्यादवसादयन्ति । ख्यातिपर्यवसानं हि चित्तचेष्टितमिति ॥ ५० ॥

किञ्चास्य भवति—

[ सूत्रम् ]

**तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिरिति ॥ ५१ ॥**

**इति श्रीमहर्षिपतञ्जलिविरचिते योगसूत्रे**

**प्रथमः समाधिपादः ॥**

[ विवरणम् ]

अत्राह—समाधिप्रज्ञाभवः संस्काराशयश्चित्तस्याधिकारप्रवृत्तिहेतुः, प्रत्ययप्रभवत्वात्, व्युत्थानप्रभवसंस्काराशयवदिति, तथा चित्तसंस्कारत्वाच्चेति । तदेतद्दर्शयति—कथमसौ संस्काराशयः चित्तं साधिकारं संस्कारोपेतं न करिष्यतीति ? ॥

नैष दोषः—तद्विरोधित्वात् । कथं ? ते संस्काराः क्लेशक्षयहेतुत्वाच्चित्तमधिकारविशिष्टं न कुर्वन्ति । व्युत्थानप्रत्ययप्रभवानां हि संस्काराणामविद्यादिक्लेशहेतुत्वाच्चित्तसंस्काराभिमुखभावकारणता । तद्विरोधिप्रत्ययप्रभवत्वात्तु न समाधिजप्रत्ययजन्मनां संस्काराणामधिकाराभिमुख्यनिमित्तता ॥

किञ्च—चित्तञ्च ते स्वकार्यात् संस्काराभिमुखवृत्तिभ्योऽवसादयन्ति विरमयन्ति । ख्यातिपर्यवसानं हि चित्तविचेष्टितम् । पुरुषख्यातिश्च जाता संस्कारश्च भवतीति विरुद्धम् ॥

यो हि विगततृष्णासमुदायो, नासौ पानीयं पिपासति । एतावदेव चित्तेन पुरुषस्य करणीयम् । न हि कश्चित् कृतं करणीयं चिकीर्षति ॥ ५० ॥

[ भाष्यम् ]

स न केवलं समाधिप्रज्ञाविरोधी, प्रज्ञकृतानामपि संस्काराणां प्रतिबन्धी भवति। कस्मात्? निरोधजः संस्कारः समाधिजान् संस्कारान् बाधत इति।

निरोधस्थितिकालक्रमानुभवेन निरोधचित्तकृतसंस्कारास्तित्वमनुमेयम्।

[ विवरणम् ]

किञ्च—तस्यापि निरोधे सर्वनिरोधान्निर्बीजस्समाधिरिति। इतिशब्दः परिसमाप्त्यर्थः। तस्यापि समाधिप्रज्ञाप्रभवस्य संस्कारस्याभिनवस्य निरोधे अपिशब्दात्संस्कारकारणस्य समाधिप्रज्ञाया अपि निरोधे, सर्वनिरोधो भवति। उक्तमेवोपायद्वयं परवैराग्यविरामप्रत्ययाभ्यासाख्यं तन्निरोधस्य॥

किं पुनस्तत्सर्वं? यन्निरोत्स्यते। व्युत्थानसमाधिप्रज्ञातत्संस्काराः। तस्मात् सर्वनिरोधान्निर्बीजः समाधिः॥

स न केवलं ऋतम्भरप्रज्ञाजनितसंस्कारः समाधिप्रज्ञानिरोधी, यथैव तां समाधिप्रज्ञामृतम्भरां निरुणद्धि, तथैवात्मना सहात्मसजातीयानां स्वकारणप्रज्ञाकृतानां संस्काराणामपि प्रतिबन्धी निरोधाद्भवति॥

कस्मात्? निरोधजः संस्कारः यस्मात्समाधिप्रज्ञायास्तज्जन्मनश्च संस्कारस्य निरोधे, निरोधकः समाधिप्रज्ञाजनितसंस्कारादन्यो जायते, स चापि यतः समाधिप्रज्ञां तज्जनितसंस्कारांश्चातिरस्कृत्य न जन्म प्रतिपद्यते, तस्मात्स निरोधजः संस्कारः समाधिजान्संस्कारान्बाधत इति॥

कथं पुनरसौ निरोधजः संस्कारोऽस्तीति गम्यते? विद्यमानेऽपि स बाधको भवतीति? आह—निरोधस्थितिकालक्रमानुभवेनेति। निरोधस्य स्थितिस्तस्याः कालः स च कालः क्रमेणानुभूयते, यतः प्रत्यभ्यासमभिवर्धते, तस्मात्तेन निरोधस्थितिकालक्रमानुभवेन निरोधचित्तकृतं निरोधावस्थचित्तकृतं संस्कारास्तित्वमनुमेयम्॥

[ भाष्यम् ]

व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैः चित्तं स्वस्यां प्रकृताववस्थितायां प्रविलीयते । तस्मात्ते संस्काराश्चित्तस्याधिकारविरोधिनो न स्थितिहेतवो भवन्तीति । यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं निवर्तते । तस्मिन्निवृत्ते पुरुषः स्वरूपमात्रप्रतिष्ठोऽतः शुद्धः केवलो मुक्त इत्युच्यत इति ॥ ५१ ॥

इति श्रीपातञ्जलयोगसूत्रभाष्ये श्रीमद्वेदव्यासकृते
प्रथमः समाधिपादः ॥

[ विवरणम् ]

व्युत्थाननिरोधसमाधिप्रभवैः व्युत्थानसमाधिप्रभवैः निरोधसमाधिप्रभवैश्च सह कैवल्यभागीयैः संस्कारैश्चित्तं अवसिताधिकारत्वात् स्वस्यां प्रकृतौ स्वकारणेऽस्मितायामहङ्कारे प्रविलीयते प्रत्यस्तमेति । तस्मात्ते ख्यातिनिरोधजन्मानः संस्कारा यस्मात् चित्तस्याधिकारविरोधिनः न स्थितिहेतवो भवन्तीति ॥

यस्मादवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं यं पुरुषं प्रति चरितप्रयोजनं तस्मात् निवर्तते । तस्मिन्विनिवृत्ते पुरुषः स्वरूपमात्रप्रतिष्ठः केवलो मुक्त इत्युच्यते, चित्तवृत्तिनिवृत्तिरेव मुक्तिः इति ॥ ५१ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य
श्रीशङ्करभगवतः कृतौ
श्रीपातञ्जलयोग(शास्त्र)सूत्रभाष्यविवरणे
॥ प्रथमः समाधिपादः ॥

श्रीः

# ॥ पातञ्जलयोगसूत्रभाष्यविवरणम् ॥

## ॥ साधनपादो द्वितीयः ॥

[ व्यासभाष्यम् ]

उद्दिष्टः समाहितचित्तस्य योगः । कथं व्युत्थितचित्तोऽपि योगयुक्तः स्यादित्येतदारभ्यते—

[ पातञ्जलयोगसूत्रम् ]

**तपस्स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥ १ ॥**

[ विवरणम् ]

अथेदानीं द्वितीयः साधनपाद आरभ्यते । कैवल्यस्य साधनं सम्यग्दर्शनम् । योगसाधनानि च योगद्वारेण सम्यग्दर्शनसाधनान्येव । तानि च प्राधान्येनास्मिन्पादे प्रतिपाद्यन्त इति साधनपाद इत्युच्यते ॥

तथा, योगसाधनानुष्ठानप्रवृत्तस्यानुषङ्गिकविभूतेः प्राधान्येन प्रतिपादनाद्विभूतिपाद इत्युच्यते तृतीयः ॥

तथा, सकलयोगैश्वर्यविभूतिभ्यो विरक्तस्य सर्वोपसंहारद्वारेण कैवल्यस्य प्राधान्येन प्रदर्शनात् कैवल्यपाद इत्युच्यते चतुर्थः ॥

तथा, समाधिः प्राधान्येनादावुपाख्यात इति प्रथमः समाधिपाद इत्युच्यते ॥

तदेतदाह—उद्दिष्टः समाहितचित्तस्य योग इति—कर्मण्यचित्तस्येत्यर्थः । मैत्रीकरुणादिभावनावुपा(कृपा)यलब्धस्थितिपदस्य योगिनः परवैराग्यविरामप्रत्ययसाधनो निर्बीजः समाधिरुद्दिष्टः । कथं व्युत्थितचित्तोऽपि योगयुक्तः स्यादिति । विक्षिप्तचित्तोऽपि कथं नाम समाधियोग्यो भवेदित्यत इदमारभ्यते ।

तपआदिसाधनमनुक्रम्यते–तपस्स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ।

ननु च तपस्स्वाध्यायेश्वरप्रणिधानानि नियमेषु वक्ष्यमाणानि किमर्थमिहोच्यन्ते ॥

ननु चैतदेव प्रयोजनं—यदुक्तं व्युत्थितचित्तोऽपि योगयुक्तः स्यादिति ॥

नैतदस्ति—यत्र नियमाः पठ्यन्ते तत्रैवेदं प्रयोजनं सिध्यति ॥

अथ क्लेशतनूकरणार्थमिति चेन्न—तस्यापि तत्रैवाभिधानात् । यथा "[1]योगाङ्गानुष्ठानादशुद्धिक्षये" इति । अशुद्धिश्च क्लेशादिः । समाधिभावनार्थञ्च योगाङ्गानुष्ठानमाम्नायिष्यत एव । यथा "[2]समाधिसिद्धिरीश्वरप्रणिधानात्" इति । तस्मादिह तपआदिसमाम्नानमनर्थकम् ॥

न—योगाङ्गानुष्ठानस्य सम्यग्दर्शनोपायस्य सम्यग्दर्शनपूर्वत्वप्रतिपादनार्थत्वात् । सर्वाणि च योगाङ्गानि सम्यग्दर्शनोपायत्वात्सम्यग्दर्शनप्राक्कालानि । तेषां च नियमैकदेश इह पठितः सर्वोपायप्राक्कालत्वे निदर्शनाय । यद्यप्युपायत्वादेव प्राक्कालत्वमर्थात्सिद्धम् , तथाऽपि स्पष्टत्वमेवं सति स्यादिति ॥

ननु चैवमपि प्राक् सम्यग्दर्शनादनन्तरं पठितव्यम्—उच्यते—न—सम्यग्दर्शनस्यैव साक्षात्क्लेशादिप्रतिपक्षत्वात् । अविद्या हि समस्तानर्थमूलम् । सा च साक्षात्प्रत्यनीकभूतसम्यग्दर्शनेन निवर्त्यते । तपआदेस्तदनन्तरं पाठे सत्यविद्यासम्यग्दर्शनयोर्व्यवधानं भवेत् । ततोऽभिशंकेत—किं अविद्यायास्तपआदिः साक्षात्प्रतिपक्षः ? किं वा सम्यग्दर्शनमेवेति ॥

किञ्च—विषयश्च प्रथमं दर्शनीयः सम्यग्दर्शनशास्त्रस्य । स च क्लेशकर्मविपाकाशयाभिभूतः पुरुषः । यथा रोगार्तः चिकित्साशास्त्रस्य विषयः । तपआदेस्तदनन्तरं समाम्नाने विषयविषयिणौ व्यवधीयेयातां, ततश्चायं विषयोऽयञ्च विषयीति न विविच्येत ॥

पादादौ च पाठे सम्यग्दर्शनोपायत्वं च प्रतिपादितं भवति, प्रथमपादसम्बन्धश्च व्याहृयतः स्यात्—समाहितचित्तस्य योग उद्दिष्टः, व्युत्थितचित्तोऽपि तपआदिसाधनः कथं योगयुक्तः स्यादिति ॥

किञ्च—समाधिभावनक्लेशतनूकरणार्थत्वञ्च तपआदीनां दर्शयितव्यम् ॥

1. यो. सू. पा. 2. सू. 28.
2. यो. सू. पा. 2. सू. 45.

[ भाष्यम् ]

नातपस्विनो योगः सिद्धयति । अनादिकर्मक्लेशवासनाचित्रा प्रत्युपस्थितविषयजाला चाशुद्धिः

[ विवरणम् ]

ननु परस्तादेवैतद्वक्ष्यति—"समाधिसिद्धिरीश्वरप्रणिधानात्[1]" "कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः[2]" इत्येवम् । प्रत्येकसाधनानां सिद्धिं च वक्ष्यति ॥

नैतदस्ति—सिद्धानामिह तत्र साधनस्तुत्यर्थमनुवादात् । अत्र हि तादर्थ्यमुच्यते । तथा चाह—"समाधिभावनार्थः क्लेशतनूकरणार्थश्च[3]" इति । तत्र ह्यनूद्यन्ते साधनस्तुतये ॥

सम्प्रति सूत्राक्षराणि व्याख्यायन्ते—तपश्च स्वाध्यायश्चेश्वरप्रणिधानञ्च तपस्स्वाध्यायेश्वरप्रणिधानानि । तान्येव क्रियारूपो योगः क्रियायोगः । तप-आदिक्रिया च योगार्थत्वाद्योग इत्युच्यते । चित्तधर्मो हि समाधिर्योगः । तदर्थश्चायं क्रियायोगः । तस्मादनेन क्रियायोगेन योगीति ॥

तप इति कृच्छ्रचान्द्रायणादि, शीतोष्णादिद्वन्द्वसहत्वम् । स्वाध्यायः—प्रणवस्य मोक्षशास्त्राणां चोपनिषत्प्रभृतीनां पवित्राणां जपः । ईश्वरप्रणिधानं—क्रियाणां परमगुरावीश्वरे समर्पणम् । तासां वा फलसंन्यासः परमेश्वरे संन्यसनम् ॥

कथं पुनश्चित्तसमाधानं प्रति विप्रकृष्टस्य कायक्लेशादिरूपस्य तपसो योगत्वम्? स्वाध्यायेश्वरप्रणिधानयोस्तु युक्तमन्तरङ्गत्वाद्योगत्वमिति, तदर्थमाह—नातपस्विनो योगः सिध्यतीति ॥

शरीरादिपोषणाभिरतचित्तस्य कायेन्द्रियमनःखेदपरिहारपरायणस्यात्यन्तशरीराद्यात्मत्वदर्शिनः सुकुमारतरंमन्यस्य न योगः सिध्यतीति तपस उपादानम् ॥

किञ्च—अनादिवासनाचित्रा—विषयग्रहणवासनाभिरनादिकालभिरुपचितविचित्रभावा । तथा प्रत्युपस्थितविषयजाला—वर्तमानकाला विषया एव जालं, तेन च वर्तमानविषयाख्येन जालेन आनायेन झषानिव चित्तं अशुद्धिः पाशयति । या सा प्रत्युपस्थितविषयजाला सती यस्मात्

1. यो. सू. पा. 2, सू. 45.
2. यो. सू. पा. 2. सू. 43.
3. यो. सू. पा. 2. सू. 2.

[ भाष्यम् ]

नान्तरेण तपः सम्भेदमापद्यत इति तपस उपादानम् । तच्च चित्तप्रसादनमबाधमानमनेनासेव्यमिति मन्यते ।

स्वाध्यायः प्रणवादिपवित्राणां जपः, मोक्षशास्त्राध्ययनं वा । ईश्वरप्रणिधानं सर्वक्रियाणां परमगुरावर्पणं, तत्फलसंन्यासो वा ॥ १ ॥

स हि क्रियायोगः—

[ सूत्रम् ]

**समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥**

[ भाष्यम् ]

स ह्यासेव्यमानः समाधिं भावयति, क्लेशांश्च प्रतनूकरोति । प्रतनूकृतान् क्लेशान् प्रसंख्यानाग्निना दग्धबीजकल्पानप्रसवधर्मिणः करिष्यतीति ।

[ विवरणम् ]

**नान्तरेण तपः** तपसा विना **सम्भेदं** विनाशम् **आपद्यते,** असम्भिन्नाशुद्धेश्चित्तस्य कुतः समाधिः **इति** तत्सम्भेदनाय च **तपस उपादानम्** । **तच्च** तपः **चित्तप्रसादनं** समाध्यन्तरङ्गं **अबाधमानमनेनासेव्यमिति** योगा **मन्यन्ते** । चित्तप्रसादार्थत्वात्तपसस्तमेव चेद्बाधेत तादर्थ्यमेव हीयेत ॥ १ ॥

**स हि क्रियायोगः** किमर्थ इति तस्य पारार्थ्यप्रतिपादनार्थमाह— **समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥**

कथं पुनरुभयार्थत्वमित्याह—**स हि आसेव्यमानः समाधिं भावयति ।** इतरयोगाङ्गसहितः समाधिं भावयति, **क्लेशांश्च तनूकरोति** । वक्ष्यति च— "[1]योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः" इति । तदेतदाह— **तनूकृतान्क्लेशान्प्रसंख्यानेन** क्लेशतनूकरणात् सञ्जातसम्यग्दर्शनशीलनेन, **दग्धबीजकल्पान्** बीजानीव दग्धप्रसवशक्तीन्, अत एव **अप्रसवधर्मिणः** अविद्यमानः प्रसवो येषां ते अप्रसवाः, अप्रसवाश्च ते धर्मिणश्चेत्यप्रसवधर्मिणः, (सर्वबीजादिषु वा द्रष्टव्यम्) तानप्रसवधर्मिणः **करिष्यति** प्रसवशक्तिरहितान् करिष्यति ॥

1. यो. सू. पा. 2. सू. 28.

तेषां तनूकरणात्पुनः क्लेशैरपरामृष्टा सत्त्वपुरुषान्यतामात्रख्यातिः सूक्ष्मा प्रज्ञा समाप्ताधिकारा प्रतिप्रसवाय कल्पिष्यत इति ॥ २ ॥

अथ के ते क्लेशाः? कियन्तो वा? इति—

[ सूत्रम् ]

## अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः ॥ ३ ॥

[ विवरणम् ]

तेषां तनूकरणानुजन्मा पुनः क्लेशैरपरामृष्टा सत्त्वपुरुषान्यतामात्रख्यातिः समाप्ताधिकारा प्रज्ञा प्रतिप्रसवाय [कल्पिष्यते] संसाराभिमुखतायै पुनर्न कल्पिष्यते ॥

यद्यपि शास्त्राचार्योपदेशेन योगाङ्गानुष्ठानादृतेऽपि सत्त्वपुरुषान्यतामात्रख्यातिरुपजायते, तथाऽपि न क्लेशाधर्मादीनतीवातिरस्कृत्य सा जायेतेति पुनः पुनः क्लेशादिभिः परामृश्यत इत्येतद्दर्शयति पुनः क्लेशैरपरामृष्टेत्यनेन ॥ २ ॥

के ते क्लेशाः स्वरूपेण, कियन्तो वा संख्यया इति संख्यास्वरूपप्रतिपादनार्थं सूत्रं प्रणीयते—अविद्यास्मितारागद्वेषाभिनिवेशाः क्लेशाः एषामेकैकस्य लक्षणं सूत्रैरेव व्याख्यायिष्यत इति [न] व्याख्येयत्वे यत्नः क्रियते, व्याख्येयं त्वेतावदेव ॥

यथा प्रमाणविपर्ययविकल्पादयः परस्परभिन्नाः, न तथा क्लेशानां विपर्ययाद्भेदः। किन्तर्हि? विपर्ययस्यैवैते भेदा इति। कस्मात्? विपर्ययभावभावित्वादित्येतदाह—पञ्च विपर्यया इत्यर्थः ॥

ननु च यथा वृत्तिभेदव्याख्याने प्रमाणवृत्तेः "[1]प्रत्यक्षानुमानागमाः प्रमाणानि" इति त्रिधा भेदस्तत्रैव व्याख्यातः, तथा कस्मात्तत्रैवास्य विपर्ययस्यापि भेदः पञ्चधा नोपव्याख्यातः? चित्तवृत्तिरेव च विपर्यय इत्युक्तम्। तथा चोदाहृतं, "सद्विषयेणैकचन्द्रदर्शनेन द्विचन्द्रदर्शनं बाध्यते इति ॥

---

1. यो. सू. पा. 1. सू. 7.

[ भाष्यम् ]

क्लेशा इति पञ्च विपर्यया इत्यर्थः । ते स्पन्दमाना गुणाधिकारं द्रढयन्ति, परिणाममवस्थापयन्ति, कार्यकरणस्रोत उन्नमयन्ति, परस्परानुग्रहतन्त्रीभूत्वा कर्मविपाकञ्चाभिनिर्हरन्तीति ॥ ३ ॥

[ विवरणम् ]

नैष दोषः—क्लेशानामवृत्तित्वात् । न हि क्लेशाः प्रत्ययमात्राः, प्रत्ययमात्रा हि वृत्तयः । क्लेशास्तु चित्तस्य मलं, यथा चक्षुषस्तिमिरम् । क्लेशमलवियोगे चित्तस्य विपर्ययप्रत्ययाभावात् ॥

यदि हि प्रत्यय एव विपर्ययः, तदा यथा क्लेशनिरोधेऽपि योगिनः स्मृतिप्रमाणप्रत्यया भवन्ति, तथा विपर्ययोऽपि भवेत् । न तु विपर्ययः क्षीणक्लेशानाम् । तस्माच्चक्षुष इव अयथार्थग्रहणनिमित्तं प्रत्ययस्य मलं विपर्यय इत्युच्यते ॥

तत्पुनः प्रत्ययव्यतिरेकेण प्रतिपत्तुमाख्यातुं चाशक्यमिति प्रत्ययेनैवाख्यायते 'विपर्ययो वृत्तिः' इति । तथा च वृत्तयः क्लिष्टाक्लिष्ट'श्चेति क्लेशेन विशेषिताः । न च वृत्तिभिरेव वृत्तीनां विशेषणं युक्तम् । तथा 'क्लेशहेतुका' इति च व्याख्यातम् । न च वृत्तय एव वृत्तिहेतुका इति युक्तम् ॥

तस्माच्चावृत्तित्वाद्वृत्तिभेदत्वेन न तत्र क्लेशा व्याख्याताः । तथा चोक्तम्—"चित्तमलप्रसङ्गेनभिधायिष्यन्ते" इति क्लेशानां न वृत्तित्वं, मलत्वमेवेत्यभिप्रायेण । अभेदोपचारेण तु प्रत्ययेन सामानाधिकरण्यं, यथा धूमो मलैरग्निं गर्भादशान्तवृत्तास्तथा ज्ञानमेतेनेति, (?) तथैवात्रापि ॥

प्रत्ययविपरीतत्वमाह—ते स्पन्दमाना इत्यादिना । स्पन्दमानाः प्रत्ययद्वारेणोद्भासमानाः, न हि स्वतस्तेषाञ्चलनमस्ति, वस्त्रादिरागवत् । गुणाधिकारं द्रढयन्ति गुणानामधिकारं प्रवृत्तिं (सं)कर्तव्यत्वं स्थिरीकुर्वन्ति । न हि तेषु परिस्पन्दमानेषु कर्तव्यताशून्यं चित्तं भवति ॥

परीणाममवस्थापयन्ति पुनः पुनः परिणमयन्तीति यावत् । कार्यकरणस्रोत उन्नमयन्ति शरीरस्य करणादीनां चक्षुरादीनां प्रवृत्तिस्रोत उच्छ्रा(व)यन्ति । कथमित्याह—परस्परानुग्रहतन्त्रीभूत्वा अविद्यादय इतरेतरनिमित्तनैमित्तिकभावेनेति ॥

[ सूत्रम् ]

## अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम्॥ ४ ॥

[ भाष्यम् ]

अत्र अविद्या क्षेत्रं प्रसवभूमिः उत्तरेषां अस्मितादीनां चतुर्विध-विकल्पानां प्रसुप्ततनुविच्छिन्नोदाराणाम् ।

तत्र का प्रसुप्तिः ? । चेतसि शक्तिमात्रप्रतिष्ठानां बीजभावोपगमः। तस्य प्रबोध आलम्बने संमुखीभावः ।

[ विवरणम् ]

किञ्च—कर्मविपाकांश्चाभिनिर्वर्तयन्ति । कर्म त्रिविधं, तद्विपाकांश्च जात्यायुर्भोगानिति ॥ ३ ॥

अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् । कथमस्मितादयो विपर्यया इति, तत्प्रदर्श्यते सूत्रेणैव । अविद्या क्षेत्रं प्रसवभूमिः आत्मलाभक्षेत्रं यथा पृथिवी तृणलतागुल्मवीरुधां स्वात्मनोऽनतिरिक्तानां, एवमविद्यातो विपर्ययादव्यतिरिक्तानां अस्मितादीनां चतुर्णामेकैकशः प्रसुप्ततनुविच्छिन्नो-दारतया चतुर्विकल्पानां प्रसवभूमिरविद्या ॥

विपर्ययप्रत्यया हि तामाश्रित्यात्मानं प्रतिलभन्ते । तस्मादविद्यै-वास्मितादिचतुष्टयरूपेण विपरिणमते ॥

तत्र का प्रसुप्तिरिति । अस्मितादीनां प्रसुप्तिर्नाम धर्म उच्यते, नाविद्यायाः । कारणत्वात् । सर्वास्मितादिविकल्पेष्वनुगमात्सर्वदा प्रबुद्धैव सा, न प्रसुप्ता । प्रस्वपने व्यवहाराभावात् । अस्मितादीनामन्यतमस्य प्रसुप्तावन्यतमस्यावस्थानम-वश्यमेव । अन्यथा क्लेशान्तरस्योद्भव एव न स्यात् । तस्मादस्मितादीनामेव चतुर्णां प्रसुप्तादिचतुर्विकल्पत्वम् ॥

चेतसि शक्तिमात्रप्रतिष्ठानमित्यस्य व्याख्यानं करोति—बीजभावो-पगम इति । यथा बीजं सदेवानङ्कुरीभवदपि भूमिगतं तिष्ठति, तथा चेतस्यस्मितादयः शक्तिरूपेणानभिव्यक्तस्वरूपाङ्कुरा व्यवतिष्ठन्ते ॥

तस्य प्रबोध इति—तस्य क्लेशस्यास्मितादेः प्रबोध उद्भवः आलम्बने विषये सम्मुखीभावः स्वव्यञ्जकाञ्जनस्य ॥

[ भाष्यम् ]

प्रसंख्यानवतोऽदग्धक्लेशबीजस्य संमुखीभूतेऽप्यालम्बने नासौ पुनरस्ति, दग्धबीजस्य कुतः प्ररोहः इति । अतः क्षीणक्लेशः कुशलः चरमदेह इत्युच्यते । तत्रैव सा दग्धबीजभावा पञ्चमी क्लेशावस्था नान्यत्रेति । सतां क्लेशानां तदा बीजसामर्थ्यं दग्धमिति विषयस्य संमुखीभावेऽपि सति न भवत्येषां प्रबोध इत्युक्ता प्रसुप्तिः दग्धबीजानामप्ररोहश्च ।

तनुत्वमुच्यते—प्रतिपक्षभावनोपहताः क्लेशास्तनवो भवन्ति । तथा विच्छिद्य विच्छिद्य तेन तेनात्मना पुनः पुनः समुदाचरन्तीति

[ विवरणम् ]

तत्रैतत् स्यात्, सर्वदैव क्लेशस्य बीजभावोपगमः प्रबोधश्च नियमेन स्यादिति । तत आह—**प्रसंख्यानवतः** सम्यग्दर्शनाभ्यासवतः **अदग्धक्लेशबीजस्य** योगिनः **संमुखीभूतेऽप्यालम्बने नासौ** बीजभावोपगमः । **दग्धस्य** दग्धत्वादेव **कुतः पुनः प्रबोधः** उद्भवः । विद्यमानस्य हि बीजस्य क्षितिजलादिसंयोगनिमित्तप्राप्तावङ्कुरीभावो न दग्धबीजशक्तेः, तथा क्लेशस्यापि ॥

यद्येवम्, एषा पञ्चमी कस्मादवस्था नोक्ता दग्धप्रसुप्ततनुविच्छिन्नोदाराणामिति—न—असाधारणत्वात् । न हि सर्वदेहिनां साधारणी पञ्चमी क्लेशावस्था । योगिन एव हि सा, ततो नाम्नायते ॥

कथं वा असाधारणीति ? तत आह—**तत्रैव सा** सम्यग्दर्शनाभ्यासवत्येव **दग्धा नान्यत्र** । **क्षीणक्लेशः कुशलश्चरमदेह इति** सम्यग्दर्शन उच्यते योगी । **तत्रैव सा दग्धबीजभावा पञ्चमी क्लेशावस्था । सतां क्लेशानां तदानीं दग्धं बीजसामर्थ्यम्** । यथा विद्यमानानां यवादिबीजानां भर्जितानां बीजसामर्थ्यं दग्धम् । **विषयस्य सम्मुखीभावेऽपि न भवत्येषां प्रबोधः**, सम्यग्दर्शिनः संस्कारशेषावस्थत्वादिषोरिव लक्ष्यविमुक्तस्य ॥

**उक्ता प्रसुप्तिः** । किञ्च **दग्धबीजानां च क्लेशानामप्रबोधो** योगिन उक्त इति । **तनुत्वं** इदानीं **उच्यते—प्रतिपक्षभावनोपहताः** प्रतिपक्षस्य शरीराद्यवद्यदर्शनादेः भावनयोपहताः अबलीकृता मन्दप्रभावाः **क्लेशास्तनव** उच्यन्ते ॥

**तथा विच्छिद्य विच्छिद्य**ार्थान्तरोपजनकालान्तरालेषु स्वात्मानमप्रदर्शयन्तः **तेन तेनात्मना** येन रूपेण पूर्वमुपलब्धास्तेनैवात्मना **समुदाचरन्ति** पुनरुद्भवन्तीति **विच्छिन्नाः** ॥

[ भाष्यम् ]

विच्छिन्नाः । कथम् ? रागकाले क्रोधस्यादर्शनात् । न हि रागकाले क्रोधः समुदाचरति । रागश्च क्वचित् दृश्यमानो न विषयान्तरे नास्ति । नैकस्यां स्त्रियां चैत्रो रक्त इत्यन्यासु स्त्रीषु विरक्तः । किं तु तत्र रागो लब्धवृत्तिः, अन्यत्र तु भविष्यद्वृत्तिरिति । स हि तदा [1]प्रसुप्ततनुविच्छिन्नो भवति ।

[ विवरणम् ]

यदि वा विच्छिद्य विच्छिद्य विच्छेदकाले ते व्यक्तेनात्मना स्वरूपेण पूर्वोत्तरकालवत् न समुदाचरन्ति ॥

तत्रोदाहरणम्—कथं ? रागकाले क्रोधस्यादर्शनात् । न हि रागकाले क्रोधः समुदाचरति । कुतः रूपातिशयानां वृत्त्यतिशयानां च विरोधात् । स हि रागोदयात्तिरोभूतोऽन्येनाव्यक्तेनात्मना वर्तत इति विच्छिन्नः ॥

तथा रागश्च क्वचिद्दृश्यमानो न विषयान्तरे नास्ति । कुतः ? विषयविरोधादत्र । पूर्वत्र रागेण विरोधादसमुदाचरणं क्रोधस्य । अत्र तु विषयाणामन्योन्यविरोधात् । न हि विषय एकस्मिन्नुपजनयति रागं विषयान्तरमपि तस्यैव रागस्योत्पादकम् ॥

तद्यथा—नैकस्यां स्त्रियां चैत्रो रक्त इत्यन्यासु विरक्तः । किन्तु तत्र रागो लब्धवृत्तिः यस्यां रक्तः । अन्यत्र भविष्यद्वृत्तिः अन्यासु स्त्रीषु स हि भविष्यद्रागव्यक्तिविशेषः तदा प्रसुप्तस्तनुर्वेति ॥

ननु च 'रागश्च कचित् दृश्यमान' इत्यादि भाष्यं किमर्थं? ननु रागस्वभावाख्यानं, इत्थं विषयभेदाल्लब्धभविष्यद्वृत्तिस्वभावो राग इति–सत्यम्–तथाऽपि प्रक्रान्तानुपयोगः । प्रक्रान्तं हि विच्छेदव्याख्यानं । न चैतद्विच्छेद-व्याख्यानम् । नापि वक्ष्यमाणोदारव्याख्यानेन सम्बन्धः । तस्य निराकाङ्क्षत्वात् ॥

एवं तर्हि पूर्वशेष एवायम् । कथम्? एवं मन्यते, प्रसुप्ततनूदारत्व-व्यतिरेकेण विच्छित्तिर्नाम धर्म एव नास्ति । कथम् ? यावन्न लब्धवृत्तिस्तावत्प्रसुप्त इत्युक्तम् । प्रतिपक्षभावनोपहतो मन्दप्रवृत्तिस्तनुरित्युच्यते ॥

---

1. प्रसुप्तस्तनुर्वा इति विवरणानुसारी पाठः ।

यश्चापि लब्धवृत्तिः स उदार इत्याख्यायते । विच्छिन्नो नाम स भवति, यः क्वचिदुपलब्धः पुनरुपलभ्यते । यथा सरस्वतीस्रोतः । न हि रागोदये क्रोधः क्वचिदपि दृश्यते । तस्मान्न विच्छित्तिर्नाम धर्मोऽस्ति । अदर्शनात् ॥

अत्रोच्यते—यद्यदर्शनाद्विच्छेदो नास्ति, तदा रागस्य क्वचिद्दृश्यमानस्यान्यत्रादर्शनादभावोऽस्तु । नन्वस्त्वेवाभावः, अन्यत्रादर्शनात् । न हि । कस्मात्? क्वचित् दृश्यमानत्वादेव । न हि विषयान्तराभिमुखो न भवतीति धर्मिण्यपि चेतसि नास्ति । न हि चक्षुः कदाचिद्घटाभिमुखं न भवतीति घटाभिमुखप्रवृत्तं सन्नास्ति । घटाभिमुखदर्शनादेव । तदेतदाह—**क्वचित् दृश्यमानो न विषयान्तरे नास्तीत्यादि** ॥

तथा क्रोधोऽपि रागेणोद्भूतेनाभिभूतत्वाद्विच्छिन्नदर्शनो भविष्यति, सरस्वतीस्रोतोवदेव । स हि रागो विषयान्तरे प्रसुप्तः तनुर्वा । तदाभिमुख्येनादृश्यमानविशेषत्वात् ॥

कः पुनः प्रसुप्तिविच्छेदयोर्विशेषः? यावतोभयत्रादर्शनमविशिष्टम् । उच्यते—प्रवृत्तदर्शनप्रबन्धस्यान्तराविरोधिनाऽनुबद्धत्वाददर्शनं विच्छित्तिरदग्धस्य ॥

प्रसुप्तिः पुनर्निमित्तेषु सत्स्वप्यदग्धबीजस्यैवासत्यपि विरोधिनाऽभिभवे न्यग्भूततया बीजरूपेणावस्थानम् ॥

ननु चैवं सति "स(न)हि तदा प्रसुप्तस्तनुर्वे"ति विरुद्धं, प्रवृत्तेरदर्शनप्रबन्धो हि विषयान्तरेण दृश्यते—न—विषयान्तराभिमुख्यस्य विवक्षितत्वात् । विषयान्तराभिमुख्यं नाम यो रागस्य धर्मः स हि तदा प्रसुप्तः तनुर्वा । न रागः सर्वदा आत्मनैव प्रसुप्तस्तनुर्वा । क्वचित् दृश्यमानत्वादेव । क्रोधः प्रसुप्तस्तनुर्वा आत्मनैव रागकाले सर्वविषयेषु न दृश्यते ॥

अथवा विच्छिन्नोदाहरणान्तरप्रतिपादनार्थमेव **'रागश्च क्वचि'**दित्यादि भाष्यम् । कथं? द्विप्रकारो विच्छेदः प्रदर्शयिष्य(ति) ते । एकस्तावत्प्रवृत्तदर्शनप्रबन्धस्य विरोधिनाऽभिभवात्सर्वत्रादर्शनम् । यथा दर्शितं**'रागकाले क्रोधस्यादर्शना'**दिति ॥

तथाऽयमन्यो विषयविशेषे दृश्यमानस्यैव विषयान्तरे प्राप्तिनिमित्तस्यादर्शनम् । यथा चैत्रस्य एकस्यां स्त्रियां रक्तस्य अन्यासु सतीष्वपि रागस्यादर्शनं

[ भाष्यम् ]

विषये यो लब्धवृत्तिः स उदारः । सर्व एवैते क्लेशविषयत्वं नातिक्रामन्ति ।

कस्तर्हि विच्छिन्नः प्रसुप्तः तनुरुदारो वा क्लेशः ? इति—उच्यते—सत्यमेवैतत्, किन्तु विशिष्टानामेवैतेषां विच्छिन्नादित्वम् । यथैव प्रतिपक्षभावनातो निवृत्तः, तथैव स्वव्यञ्जकाञ्जनेनाभिव्यक्त इति ।

[ विवरणम् ]

तत्र लब्धवृत्तिरिति क्वचिद्विषये दृश्यमानस्यैव यत्र भविष्यद्वृत्तिविषये यददर्शनं, स चापि विच्छेद इति ॥

. कस्मात्पुनरन्यत्र न दृश्यत इत्याह—स हि तदा प्रसुप्तस्तनुर्वा । न हि प्रसुप्तिस्तानवं वा विवक्ष्यते । यथा तथा वा भवतु । तत्रादर्शनं विच्छेदत्वेन विवक्षितम् ॥

विषये यो लब्धवृत्तिः स उदारः ।/ ननु च प्रसुप्ततनुविच्छिन्नानां कार्यासमर्थानां न क्लेशता। न हि प्रसुप्तस्तनुर्विच्छिन्नो वा प्रसुप्तिविच्छित्तितान्नियमावस्थायां कार्यं कर्तुं क्षमते। न ह्यजातश्शत्रुरुपघातायालम्। विच्छिन्ने वा प्रदेशे स्रोतसि स्नातुं शक्यम्। तस्मादविद्या क्षेत्रमुत्तरेषामित्येतावदेवास्तु। किन्तैरकार्यक्षमैः प्रसुप्ततनुविच्छिन्नैरुपदिष्टैः । एतदाशंक्याह—सर्वे चैते क्लेशविषयत्वन्नातिक्रामन्तीति । न हि शत्रुः प्रसुप्तो जनिष्यमाणो वा नापकरिष्यति ॥

कस्तर्हि विच्छिन्नः प्रसुप्तस्तनुरुदारो वा क्लेशः । न युक्तमेवं भेदेन वचनम् । एकमेवोदाहरणमस्तु । न चोदारावस्थाया अन्यत्र कार्यं करिष्यति ॥

सत्यमेवमेतत् । तथाऽपि परिहार उच्यते, किं तु विशिष्टानामेवैतेषां अपरित्यक्तक्लेशत्वधर्मकाणामेव विच्छिन्नादित्वम् । विच्छिन्नाद्यवस्थायामपि नापागमदपकर्तृत्वशक्तिरित्यदोषः ॥

तत्काले कार्याक्षमत्वमिति चेत्—न—प्रतिपक्षविधानार्थत्वाद्वचनस्य । न हि शत्रोरदृश्यमानस्य प्रसुप्तस्य जनिष्यमाणस्य वा न प्रतिविधातव्यम् ॥

श्रूयते चेन्द्रः प्रतिपक्षभयेन सप्तधा दितेर्गर्भमभिनदिति । तत्र कारणं स्वयमेव प्रकटयति—यथैव प्रतिपक्षभावनातो निवृत्तस्तथैव स्वव्यञ्जकाञ्जनेन विषयादिना अभिव्यक्त इति ॥

[ भाष्यम् ]

सर्व एवामी क्लेशाः अविद्याभेदाः । कस्मात्? सर्वेष्वविद्यैवाभिप्लवते । यदविद्यया वस्त्वाकार्यते तदेवानुशेरते क्लेशाः विपर्यासप्रत्ययकाले उपलभ्यन्ते क्षीयमाणाञ्चाविद्यामनु क्षीयन्त इति ॥ ४ ॥

तत्राविद्यास्वरूपमुच्यते—

[ सूत्रम् ]

**अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या ॥ ५ ॥**

[ विवरणम् ]

यस्मात्ते पुनरभिव्यक्ताः पुनश्च तिरोहिताः पुनरप्यभिव्यञ्जिष्यन्ते च, तस्मात्प्रसुप्ताद्यवस्था अपि प्रतिपक्षविधानाय वक्तव्या एव, क्लेशत्वानतिक्रान्तत्वात् ॥

इदानीमुपसंहरति—सर्व एवामी क्लेशा अविद्याभेदाः । कस्मात्? यस्मात् सर्वेषु अस्मितादिषु अविद्यैवाभिप्लवते प्रतरति, उद्भूता दृश्यते ॥

किञ्च—यदविद्यया वस्त्वाकार्यते प्रकल्प्यते तदनुशेरते तद्विषया उपजायन्ते क्लेशाः रागादयः । यथा स्त्र्यादिपिण्डे हेयेऽपि भोग्योऽयमित्यविद्यया परिकल्प्यात्माभिमानं कृत्वा रज्यते । धर्मज्ञाने विपरीतं परिकल्प्य द्वेष्टि ॥

कथं पुनस्तदेवानुशेरते इति—यस्मात् विपर्यासप्रत्ययकाल एवोपलभ्यन्ते । इतश्चाविद्याभेदाः, यस्मात्क्षीयमाणामविद्यामनु क्षीयन्त इति । अविद्याप्रणाशानुप्रणाशिनो हि क्लेशा अस्मितादयः । न ह्यसत्यामविद्यायां कश्चिदपि क्लेशः सम्भवति ॥ ४ ॥

तत्राविद्यास्वरूपमुच्यते । किं पुनरविद्यास्वरूपाख्याने प्रयोजनं? तत्स्वयमेव भाष्यकृदाख्यास्यते 'अविद्या मूलमस्य क्लेशसन्तानस्य' इत्यादिना । अज्ञाते च क्लेशसन्तानमूलस्वरूपे तन्मूलोन्मूलनं न शक्यं कर्तुमिति तत्स्वरूपमाख्यायते ॥

[ भाष्यम् ]

अनित्ये कार्ये नित्यख्यातिः । तद्यथा—ध्रुवा पृथिवी, ध्रुवा सचन्द्रतारका द्यौः, अमृता दिवौकसः, इति ।

तथा अशुचौ परमबीभत्से काये—

"[1]स्थानाद्बीजादुपष्टम्भान्निष्यन्दान्निधनादपि ।
कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः ॥"

इत्यशुचौ शुचिख्यातिर्दृश्यते ।

[ विवरणम् ]

अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या । कथम्? अनित्ये कार्ये नित्यख्यातिः नित्यमिति विपर्ययबुद्धिः यथ **ध्रुवा पृथिवी, ध्रुवा सचन्द्रतारका द्यौः, अमृता दिवौकस इति** ॥

ननु चैतस्मान्मन्त्रात्पृथिव्यादीनां ध्रुवत्वं प्रतीयते । तत्र कथमेषां कार्यत्वमुच्यते? आपेक्षिकत्वाददोषः । मनुष्याद्यपेक्षया पृथिव्यादयो ध्रुवाः । कार्यत्वमनित्यत्वं च सर्वप्रमाणसिद्धं श्रुतिषु वचनात् **'द्यौरासीन्न पृथिवी नान्तरिक्ष'**मित्यादिषु सिद्धम् ।

तथा अशुचौ परमबीभत्से परमोद्वेगकरेऽत्यन्तघृणास्पदे कारात्मसमनीवाशुचौ काये । कथम(पि)स्य बीभत्सकत्वमित्याह—**स्थानादशुचिः**—गर्भाशयस्थानत्वादशुचिः । **बीजादशुचिः**—शुक्लशोणितबीजो हि कायः । **उपष्टम्भात्**—वातपित्तश्लेष्मोपष्टम्भात् । तेषां चाशुचित्वं प्रसिद्धम् । **निष्यन्दात्**—प्रस्वेदमूत्रपुरीषादिमलाजस्रनिष्यन्दात् । **निधनादपि**—मरणात् । मृतसंबन्धिनां दशाहाद्याशौचस्मरणम् ॥

ननु च स्वभावतो यद्यशुचिः कायस्तस्य शौचविधानमनर्थकं प्राप्नोतीत्यत आह—**कायमाधेयशौचत्वादिति** । शास्त्रत आधातव्यमेव शौचमस्मिन्न स्वतोऽस्तीति यावत् ॥

यद्वा, करणानि बुद्धिसत्त्वादीनि सत्त्वात्मकतया शुचीन्याधेयान्यस्मिन्निति, तच्छुचित्वादस्यापि शौचम् । बुद्धिसत्त्वाद्याधेयविप्रयोगे चात्यन्ताशुचित्वदर्शनात् ॥

**तस्मात्पण्डिता ह्यशुचिं विदुः** । पण्डितग्रहणं विपर्यस्तधियां शुचित्वग्रहणख्यापनार्थम् । **अशुचौ शुचिख्यातिर्दृश्यते** विपरीतचेतसाम् ॥

---

1. वैयासिकी गाथा.

[ भाष्यम् ]

नवेव शशाङ्कलेखा कमनीयेयं कन्या मध्वमृतावयवनिर्मितेव, चन्द्रं भित्त्वा निःसृतेव ज्ञायते, नीलोत्पलपत्रायताक्षी हावगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयन्तीवेति, कस्य केनाभिसम्बन्धः । भवति चैवमशुचौ शुचिविपर्यासप्रत्यय इति ।

एतेन अपुण्ये पुण्यप्रत्ययः, तथैवानर्थे चार्थप्रत्ययो व्याख्यातः ।

तथा दुःखे सुखख्यातिं वक्ष्यति—"[1]परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" इति । तत्र सुखख्यातिरविद्या ।

तथा अनात्मन्यात्मख्यातिः—बाह्योपकरणेषु चेतनाचेतनेषु, भोगाधिष्ठाने वा शरीरे, पुरुषोपकरणे वा मनसि, अनात्मनि आत्मख्यातिः, इति ।

[ विवरणम् ]

नवेव शशाङ्कलेखा कमनीयेयं कन्या अमृतावयवनिर्मितेव चन्द्रं भित्त्वेव निस्सृता ज्ञायते नीलोत्पलपत्राक्षी भावगर्भाभ्यां लोचनाभ्यां जीवलोकं समाश्वासयन्तीति कस्य केनाभिसंबन्धो भवतीति । क्व शरीरादियाथात्म्यं, क्व भवत्येवमशुचौ (कचिद्धि) शुचिविपर्यास इति ॥

एतेनापुण्ये पुण्यप्रत्ययः, यथा संसारमोचकानां, तथैवानर्थे चार्थप्रत्ययो व्याख्यातः, यथा तस्कराणाम् ॥

तथा दुःखे सुखख्यातिं वक्ष्यति 'परिणाम[1]तापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः' इति । तत्र सर्वस्मिन् संसारे दुःखे सुखख्यातिरविद्या ॥

तथा अनात्मन्यात्मख्यातिर्बाह्योपकरणेषु चेतनाचेतनेषु गवादिघटादिषु भोगाधिष्ठाने वा शरीरे पुरुषोपकरणे वा मनस्यनात्मन्यात्मख्यातिरिति ॥

अत्रोच्यते—कस्य पुनर्मनस्यनात्मन्यात्मख्यातिरिति ? ननु मनस एव ख्यातिः, किं चोद्यते—यावता अविद्या विपर्ययश्चित्तवृत्तिरिति ह्युक्तम् । चित्तमेव प्राप्तचैतन्योपग्रहणरूपत्वादात्मानं चेतनमभिमन्यते 'अहं द्रष्टृ श्रोतृ वा अहमिदं ममे'ति चाविशेषेण ॥

1. यो. सू. पा. 2. सू. 15.

[ भाष्यम् ]

तथैतदत्रोक्तम्[1]—"व्यक्तमव्यक्तं वा सत्वमात्मत्वेनाभिप्रतीत्य तस्य सम्पदमनु नन्दत्यात्मसम्पदं मन्वानः, तस्य व्यापदमनु शोचत्यात्मव्यापदं मन्वानः, स सर्वोऽप्रतिबुद्धः" इति ।

एषा चतुष्पदा भवत्यविद्या मूलमस्य क्लेशसन्तानस्य कर्माशयस्य च सविपाकस्येति ।

तस्याश्च अमित्रागोष्पदवत् वस्तुसतत्त्वं विज्ञेयम् ।

[ विवरणम् ]

तथैतदत्र एतस्मिन्नर्थे उक्तं व्यक्तमव्यक्तं वा प्रधानादिकं शरीरेन्द्रियादि विषयविशेषपर्यन्तं किंचित् व्यक्तं आनुभाविकं, किंचिदानुमानिकमागमिकं अव्यक्तं वा सत्वमात्मत्वेनाभिप्रतीतः प्रतिपन्नः तस्य सम्पदमनु नन्दति तस्य व्यक्ताव्यक्तात्मकस्यात्मत्वेनावगतस्य सम्पदं समृद्धिं विभूतिमनु नन्दति अनु हृष्यति, आत्मसम्पदं मन्वानः 'सम्पन्नोऽहमनया सम्पदा, ममैषा सम्पदि'ति मन्यमानः । तस्य व्यापदं तस्य क्षयं अनु शोचति 'ममैषा व्यापदहमेव व्यापन्न' इति । स सर्व एवाभिमानी अप्रतिबुद्धः अज्ञ इति ॥

एषा चतुष्पदी भवत्यविद्या । ननु चापुण्ये पुण्यख्यातिः पुण्ये अपुण्यख्यातिः इत्याभ्यां सह षट्पदीत्वम्—न—चतुर्ष्वेव पादेषु यथासंभवमन्तर्भावात् । अविद्या मूलं प्रभवबीजम् अस्य क्लेशसन्तानस्य अभिनिवेशान्तक्लेशानामनवरतप्रवर्तनस्य । किं च—कर्माशयस्य च त्रिविधस्य जात्यायुर्भोगलक्षणविपाकत्रयसहितस्य सकलस्य संसारस्येत्यर्थः ॥

तस्याश्च अविद्यायाः अमित्रागोष्पदवद्वस्तुसतत्त्वं वस्त्वन्तरत्वं विज्ञेयम् । किमर्थमिदमुच्यते ! यावता विपरीतख्यातिरिति वस्तुसतत्वमुक्तमेव ॥

अयमभिप्रायः—अविद्या इति नञ्समासोऽयं तत्पुरुषः, स चोत्तरपदार्थप्रधानो वा स्यात्, यथा राजपुरुष इति । यद्वा, पूर्वपदार्थप्रधानः, अर्धपिप्पलीति ॥

तत्र यदि पूर्वपदार्थप्रधानस्तदानीं विद्यायाः प्रमाणस्याभाव (वादि) इति, यत्रैव विद्याप्रसङ्गो वृत्तिसामान्यात्तत्रैव (स्मृत्य)वृत्त्यन्तरादौ प्रतीतिरिति, अनिर्धारित-

1. पञ्चशिखाचार्येण,

[ भाष्यम् ]

यथा नामित्रो मित्राभावः, न मित्रमात्रं, किंतु तद्विरुद्धः सपत्नः । यथा वा अगोष्पदं न गोष्पदाभावः, न गोष्पदमात्रं, किंतु देश एव

[ विवरणम् ]

विशेषतत्त्वोऽर्थः प्रज्ञायेत । या तु विपरीतख्यातिः पूर्वोक्ता अविद्येति सा पारिभाषिकी स्यात् ॥

ततः को दोषः स्यात्? अविद्याशब्दश्रवणे सन्देहः स्यात् । किं प्रसिद्ध एव शब्दार्थः परिभाषितः शास्त्रसंव्यवहारार्थं, यथा लोके येष्वर्थेषु प्रसिद्धानि पदानि तानि सति सम्भवे तदर्थान्येव सूत्रेष्वित्यवगन्तव्यं इति। अथाशब्दार्थ एव, यथा 'इको गुणवृद्धी' इति । ततश्चानिश्चिते पदार्थे नाविद्याशब्देन व्यवहारः क्रियेत ॥

अथोत्तरपदार्थप्राधान्यं समानाधिकरणत्वान्नीलोत्पलवत्, तत्रापि नीलोत्पलशब्दार्थयोरविरोधाद्विशेष्यविशेषणभावेन संबन्धो युक्तः ॥

इह नञा निवृत्तिरुच्यते । विद्याशब्देनापि विद्या । तत्र यद्युत्तरपदस्यार्थं प्रधानं प्रति गुणभूतो नञ् तस्यैवोत्तरपदार्थस्याभावं कुर्यात्, तदा तद्गुणत्वमेव हीयेत । नापीतरस्य प्राधान्यम् ॥

यो हि कश्चिन्निर्वर्तयितुं अनुप्रस्थितो निर्वर्त्यमेव व्यापादयेत्, न तस्य निर्वर्त्यं प्रति गुणत्वम् । नापि निर्वर्त्यस्य प्रधानता, तद्वत् । तस्मात् प्रधानवशवर्तिना गुणेन भवितव्यमिति विद्यायामन्यस्याभाव एवेति केवलो नञ् नित्यानुवादीति विद्यामात्रं प्रतीयेत ॥

तदेतदेवं कृत्वोच्यते । 'तस्याश्चामित्रागोष्पदवद्वस्तुसतत्त्वं विज्ञेयम्' इति। यथा अमित्रो न मित्राभावः यथा पूर्वपदार्थप्राधान्ये अर्धपिप्पलीति । न मित्रमात्रम् । यथोक्तं उत्तरपदार्थप्राधान्ये प्रधानवशवर्तिना गुणेन भवितव्यं, न प्रधानविनाशेनेति । तथा चोक्तम्—"[1]अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोती"ति नञ्वार्तिके। उत्तरपदार्थप्राधान्यपक्षे नञो नित्यानुवादत्वात् । एवममित्र इति । एवमविद्यादि ॥

यथा वा अगोष्पदं न गोष्पदाभावो न गोष्पदमात्रं, किन्तु देश एव ताभ्यां गोष्पदाभावगोष्पदमात्राभ्याम् अन्यद्वस्त्वन्तरम् । [कथमेवम्?]

1. महाभाष्यम्. 2. 2. 6.

[ भाष्यम् ]

ताभ्यामन्यद्वस्त्वन्तरम् । एवमविद्या न प्रमाणं, न प्रमाणाभावः, किंतु विद्याविपरीतं ज्ञानान्तरमविद्या इति ॥ ५ ॥

[ सूत्रम् ]

**दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥**

[ भाष्यम् ]

पुरुषो दृक्शक्तिः, बुद्धिर्दर्शनशक्तिः, इत्येतयोरेकस्वरूपापत्तिरिवास्मिता क्लेश उच्यते ।

[ विवरणम् ]

यावता गोष्पदमात्रं तदभावश्च श्रूयते । उच्यते—अत एव प्रयोगसामर्थ्याद्त्यन्तागोष्पदार्थप्रतीतिः ॥

कथम्? नञस्तावत् भावविरुद्धोऽर्थः, येन च सह प्रयुज्यते तदभावमाह ॥

ततश्चागोष्पदमिति गोष्पदप्रसक्तोऽर्थः, गोष्पदमात्रं, गोष्पदविरुद्धश्चेति त्रयोऽर्थाः प्रतिभान्ति । तत्र यदि गोष्पदमात्रं भवेत्तदा नञः प्रयोगोऽनर्थक एव । अन्याभावानुवादी चेद्गोष्पदे नञ् स्यादेवमप्यनर्थक एव ॥

अथ गोष्पदप्रसङ्गयुक्तेऽर्थे, तथाऽपि नञमुख्येऽर्थे प्रवृत्तस्स्यात्, गोभिरत्यन्तासेवितत्वस्यानुक्तत्वात् । यतः सेवितत्वे भविष्यत्यपि त्रिष्वपि कालेषु शब्दप्रयोगो युक्तः स्यात् । मुख्यश्चार्थो नाम स भवति, यत्र गोभिः सेवितं न भूतं न वर्तते नाऽपि भविष्यति । तस्मात्, सति सम्भवे नञर्थः स एव युक्त इति न सेवितप्रसङ्गो नाऽपि सेवितमात्र इष्यते । गोसेवितविरुद्ध एव देशोऽगोष्पदशब्देनाभिधीयते ॥

कथं पुनर्नीलोत्पलवद्विशेष्यविशेषणभाव एकस्य, भावाभावयोर्विरोधात् । तदभावप्रतिपादनमात्रेण संव्यवहारानुपपत्तेः यस्मिन्वस्तुनि तदभाव उच्यते तदेव वस्त्वन्तरं प्रतीयते । तदुक्तम्—"**गोष्पदं सेवितासेवितप्रमाणेषु**" इति ॥

अत्रासेवितग्रहणे पुनः क्रियमाणे च बहुव्रीहिरयं विज्ञायते, अविद्यमानसेवितोऽसेवित इति । (तस्मात्) एवमविद्या न प्रमाणं न च प्रमाणाभावः । किन्तु विपरीतं ज्ञानान्तरमिति ॥ ५ ॥

दृग्दर्शनशक्त्योरेकात्मतेवास्मिता । अधुना अस्मिताख्यं विपर्ययमाचष्टे—दृक् दर्शनं उपलब्धिः पुरुषः स एव शक्तिः । दृश्यतेऽनेनेति दर्शनं सैव शक्तिः अन्तःकरणाध्यवसायस्वरूपा । तयोः दृग्दर्शनशक्त्योः उपलब्ध्य-

[ भाष्यम् ]

भोक्तृभोग्यशक्त्योरत्यन्तविभक्तयोरत्यन्तासङ्कीर्णयोरविभागप्राप्ताविव सत्यां भोगः कल्पते । स्वरूपप्रतिलम्भे तु तयोः कैवल्यमेव भवति, कुतो भोग इति ।

तथा चोक्तम्[1]—"बुद्धितः परं पुरुषमाकारशीलविद्यादिभिर्विभक्तमपश्यन् कुर्यात्तत्रात्मबुद्धिं मोहेन" इति ॥ ६ ॥

[ विवरणम् ]

ध्यवसायस्वरूपयोः एकात्मतेव एकश्चासावात्माच तस्य भाव एकात्मता । इवशब्देनात्यन्तविविक्ततामाचष्टे । एकस्वरूपापत्तिरिवास्मिता क्लेश उच्यते ॥

यस्मिन्नहंप्रत्यये चित्तपुरुषयोर्विवेको नोपलभ्यते सोऽयमहंप्रत्ययोऽस्मिताख्यः क्लेश उच्यते ॥

पूर्वत्र तु पुरुषोपकरणेऽन्तःकरणेऽनात्मन्यात्मख्यातिरिति विपरीतदर्शनमेवाविद्येत्युक्तम् । इह तु पुनर्बुद्धिपुरुषयोरविशेषदर्शनमेकस्वरूपापत्तिरिव दर्शनमस्मितेति विशेषः ॥

तदेतदुक्तं भवति—भोक्तृभोग्यशक्त्योरत्यन्तविविक्तयोः अत्यन्तासङ्कीर्णयोः अविभागप्राप्ताविव सत्यां भोगः कल्पते । भोगहेतुरस्मिताभिधानक्लेश इत्यर्थः । सति ह्यहंप्रत्यये सुखितोऽहं दुःखितोऽहमिति सुखदुःखादिसम्बन्धो भवति । तस्मादेतदेवमिति ॥

स्वरूपप्रतिलम्भे तु तयोः विवेके नाहं ममेति स्वरूपोपलब्धौ सत्यां बुद्धिपुरुषयोः कैवल्यमेव अविमिश्रतैव भवति । कुतो भोग इति । कारणे ह्यविशेषाहंप्रत्ययात्मनि सति कार्यं भोगः, तस्मिन्नसति कारणे न भोग इति ॥

न हि मनसि चेतनावत्त्वमनध्यारोप्य सुखित्वं दुःखित्वं वा शक्यं प्रत्येतुम् । अहंप्रत्ययविषयो हि सुखदुःखप्रत्ययाधिकरणम् । 'अहं सुखी दुःखी चाहम्' इति सामानाधिकरण्यात् । तस्मादस्मिताख्योऽहङ्कारो भोगहेतुः ॥

तथा चोक्तं—बुद्धितः परं पुरुषं बुद्धितः सकाशात् विभक्तं विलक्षणमन्यम् । कैर्गुणैर्विभाग इत्याह—आकारशीलविद्याभिः आकारेण वृत्तिसारूप्येण, शीलेन बुद्धिप्रतिसंवेदितया । विद्यया चैतन्यस्वरूपतया । अथवा आकारेण शुद्धानन्तस्वरूपत्वेन, शीलेन अपरिणामित्वादप्रतिसंक्रमत्वेन, विद्यया चितिशक्तिस्वरूपतया । तदेतैर्धर्मैर्बुद्धितो विभागः ॥

1. पञ्चशिखाचार्येण,

[ सूत्रम् ]

[1]सुखानुजन्मा रागः ॥ ७ ॥

[ भाष्यम् ]

सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गर्धः, तृष्णा, लोभः, स राग इति ॥ ७ ॥

[ विवरणम् ]

तथा बुद्धेरपि आकारेण सुखदुःखमोहात्मकत्वेन, शीलेन प्रख्या-प्रवृत्तिस्थित्यात्मना, विद्यया सर्वार्थाध्यवसायात्मकत्वेन पुरुषात् विभागः । इत्थमन्योन्यमाकारशीलविद्याभिर्विभक्तं पुरुषं अपश्यन् कुर्यात्तत्र तस्यां बुद्धौ आत्मबुद्धिं आत्मप्रत्ययं मोहेन लोक इति । विद्याशीलाकारैरत्यन्तविभक्तयोर्बुद्धि-पुरुषयोरविभाग इव तद्दर्शनमित्यनेनांशेनोदाहरणम् ॥

यत्तु विभक्तमपश्यन कुर्यात्तत्रात्मबुद्धिम् इति । सा पूर्वोक्तैवाविद्या । यद्वा अस्मिताया अविद्याभेदत्वात् सर्वमुदाहरणमिति । अपश्यन् कुर्यादिति पुरुषस्वरूपादर्शनमविद्यायाः, अस्मितायाश्च हेतुः कारणं चित्तस्य द्रष्टृदृश्योप-रक्तता । पुरुषस्य त्वदर्शनं द्रष्टृत्वादेव ॥ ६ ॥

सुखानुजन्मा सुखानुशयी रागः । अनु जन्म, अनु उत्पत्तिर्यस्य सः । सुखानुशयी तथा दुःखानुशयीति अन्येषां पाठः । सुखानुशयी रागः दुःखानुशयी द्वेष इति ते व्याचक्षते, सुखमनुभवितुं शीलमस्य स सुखानुशयी, तथा दुःखानुशयीति । उभयथाऽप्यनुजन्मतैव । तदेव ताच्छील्यम् । तथा च वक्ष्यति—'धर्मात्सुखं सुखाद्रागः' इति ॥

कथं सुखानुशयित्वमिति तदाह—सुखाभिज्ञस्य सुखे आभि-ज्ञानमभिज्ञा यस्य स सुखाभिज्ञः सुखं य उपलब्धवांस्तस्य, सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखं पूर्वानुभूतमनुस्मरन् सुखे ह्लादे तत्साधने वा अगरुचन्दनादावनुरज्यते । तत्र योऽसौ गर्धः स उच्यते तृष्णा लोभो राग इति ॥ ७ ॥

---

1. इदानीन्तनमुद्रितग्रन्थपाठस्तु "सुखानुशयी रागः" इति ।

[ सूत्रम् ]

[1]दुःखानुजन्मा द्वेषः ॥ ८ ॥

[ भाष्यम् ]

दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा [2]यो मन्युः, उज्जिहासा, क्रोधः, स द्वेषः ॥ ८ ॥

[ सूत्रम् ]

स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः ॥ ९ ॥

[ भाष्यम् ]

सर्वस्य प्राणिन इयमात्माशीर्नित्या भवति '[3]मरणं माऽन्वभूवं, भूयासम्' इति ।

[ विवरणम् ]

दुःखानुजन्मा दुःखानुशयी द्वेषः । दुःखमुक्तम् '[4]येनाभिहताः प्राणिनस्तदपघाताय प्रयतन्ते' इति । दुःखाभिज्ञस्येति पूर्ववद्व्याख्यानम् । दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा सतस्करादौ यो मन्युरुज्जिहासा उद्धातुमिच्छा क्रोधः स द्वेषः । रागेण तुल्यं व्याख्यानं सर्वम् ॥ ८ ॥

स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः स्वरसेन स्वभावेन चित्तस्याविद्यामात्रेण वोढुं प्रवर्तितुं शीलमस्य । वहतेरकर्मकस्यापि दर्शनात् यथा नदी वहतीति । अथवा स्वरसं स्वभावं वोढुं शीलमस्य स्वरसवाही विदुषोऽपि सम्यग्दर्शनस्यापि । अपिशब्दादविदुष एव युक्तो मरणत्रास आत्मोच्छेदमानिन इत्यभिप्रायः । सम्यग्दर्शनस्यात्मानुच्छेदमानिनोऽयुक्त इति । तथा विमूढतरबुद्धिष्वात्मोच्छेददर्शिष्वयमभिप्रायो मरणत्रासो रूढोऽभिनिविष्टः स्थिरो यथा तथैव विदुषोऽप्यात्मानुच्छेददर्शित्वादयुक्तोऽपि रूढः ॥

कस्मात् पुनरयं मरणत्रासः स्वरसेनैव रूढ इति? यतः सर्वस्य प्राणिनः इयमात्माशीर्नित्या भवति, यदसौ मरणं मान्वभूवम् उच्छेदं मा प्रापम् । इयमाशीर्वा, भूयासं गुणैः शुभात्मभिः सम्पत्सीयेति न तैर्वियोगो भूयादिति । मूढेषु भोगसम्पदामात्मनश्चानुच्छेदः प्रार्थनीयः ॥

---

1. इदानीन्तनमुद्रितग्रन्थपाठस्तु 'दुःखानुशयी द्वेषः' इति ।

2. इदानीन्तनमुद्रितभाष्यपाठस्तु 'यः प्रतिघो, मन्युः, जिघांसा, क्रोधः, स द्वेषः' इति ।

3. इदानीन्तनमुद्रितभाष्यग्रन्थपाठस्तु 'मा न भूवं, भूयासम्' इति ।

4. यो. सू. पा. 1. सू. 31.

[ भाष्यम् ]

न चाननुभूतमरणधर्मकस्यैषा भवत्यात्माशीः । एतया च पूर्वजन्मानुभवः प्रतीयते । स चायमभिनिवेशः क्लेशः स्वरसवाही कृमेरपि जातमात्रस्य प्रत्यक्षानुमानागमैरसम्भावितो मरणत्रास उच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति ।

यथा चायमत्यन्तमूढेषु दृश्यते क्लेशः, तथा विदुषोऽपि विज्ञातपूर्वापरान्तस्य रूढः । कस्मात् ? समाना हि तयोः कुशलाकुशलयोर्मरणदुःखानुभवादियं वासनेति ॥ ९ ॥

[ विवरणम् ]

किमेतयाऽऽशिषा अवगम्यत इत्याह—न चाननुभूतमरणधर्मकस्य भवत्येषा आत्माशीरिति । एतया च आत्माशिषा पूर्वजन्मानुभवः प्रतीयते । तदेतदुक्तं भवति—न ह्यननुभूते सुखे भवति प्रार्थना, नाप्यननुभूते दुःखे तत्परिहारवाञ्छा भवतीति । येनापि प्रत्यक्षानुमानाभ्यामननुभूतं मरणदुःखं तस्याप्यनयात्माशिषा पूर्वो मरणानुभवः प्रतीयते, सोऽपि नान्तरेण जन्मेति जन्मानुभवः । तया पूर्वः पूर्वो जन्ममरणानुभवोऽनादिरिति मतः । स चायमभिनिवेशः क्लेशः कृमेरपि जातमात्रस्येति ॥

मरणानुभवकारणमाचष्टे—प्रत्यक्षानुमानागमैरसम्भावितो मरणत्रास उच्छेददृष्ट्यात्मक आत्मभोगोच्छेदप्रतिपत्तिहेतुः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति । यथा चायमत्यन्तमूढेषु दृश्यते कृमिप्रभृतिषु क्लेशस्तथा विदुषोऽपि विज्ञातपूर्वापरान्तिकस्यापि पूर्वान्तिकं बन्धः अपरान्तिकं मुक्तिः । ज्ञातजन्ममरणान्तिकस्य वा रूढः । कस्मात् पुनर्मूढस्येव विदुषो रूढ इति, तत आह—समाना हि कुशलाकुशलयोर्विद्वदविदुषोर्मरणानुभवादियं वासना मरणभयवासना ॥ ९ ॥

'क्लेशमूलः[1] कर्माशयः' 'सति[2] मूले तद्विपाकः' इति वक्ष्यते । तस्मात्ते क्लेशा हातव्याः । हानार्थञ्च ते प्रदर्शिताः । तदवहानौ चोपायं वक्ष्यति—'ध्यान-

1. यो. सू. पा. 2. सू. 12.
2. यो. सू. पा. 2. सू. 13.

[ सूत्रम् ]

**ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥**

[ भाष्यम् ]

ते पञ्च क्लेशाः दग्धबीजकल्पा योगिनश्चरिताधिकारे चेतसि प्रलीने सह तेनैवास्तं गच्छन्ति ॥ १० ॥

स्थितानान्तु बीजभावोपगतानाम्—

[ सूत्रम् ]

**ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥**

[ भाष्यम् ]

क्लेशानां या वृत्तयः स्थूलास्ताः क्रियायोगेन तनूकृताः सत्यः प्रसंख्यानेन ध्यानेन हातव्याः यावत्सूक्ष्मीकृता यावद्दग्धबीजकल्पाः इति ।

[ विवरणम् ]

**हेया[1]स्तद्वृत्तयः'** इति । तत्र न ज्ञायते किंविषयो ध्यानप्रयोगः, किं दग्धबीजकर्मक्लेशविषयः ? किं सर्वविषयः ? इति । तद्विषयविभजनार्थमिदं सूत्रमारभ्यते—**ते प्रतिप्रसवहेयाः सूक्ष्मा इति ॥**

**ते पञ्च क्लेशाः दग्धबीजकल्पाः योगिनश्चरिताधिकारे चेतसि प्रलीने सह तेनास्तं गच्छन्ति** । एतदुक्तं भवति—सम्यग्दर्शनाभ्यासानलदग्धबीजसामर्थ्यानां क्लेशानां कृताशेषपुरुषप्रयोजनस्य चेतसः प्रतिप्रसवेनैव प्रलयेनैव प्रलयोत्पत्तेर्न ध्यानसाधनापेक्षा । न हि दग्धं दाहमपेक्षते, पिष्टं वा पेषणमिति । चेतस्तु साधितपुरुषार्थत्वात् स्थितिप्रयोजनाभावाच्च स्वयमेव निवर्तते ॥ १० ॥

कीदृशानां पुनर्ध्यानादिसाधनापेक्षेत्यत उच्यते—**स्थितानां तु बीजभावोपगतानामिति ॥**

**ध्यानहेयास्तद्वृत्तयः । क्लेशानां या वृत्तयः स्थूलास्ताः क्रियायोगेन** तपस्स्वाध्यायेश्वरप्रणिधानाख्येन स्थूलप्रतिपक्षेण **तनूकृताः** पूर्वम् । तत इदानीं तनूकरणाद्बीजशक्त्यवस्थाः **प्रसंख्यानेन** सम्यग्दर्शनशीलनतो नैपुणविशेषेण **ध्यानेन** महता बलीयसा प्रतिपक्षेण **हातव्याः**, ततोऽपि **यावत्सूक्ष्मीकृताः** । किमुक्तम् भवति ? **यावद्दग्धबीजकल्पाः** यावन्निर्बीजीकृता इति ॥

---

1. यो. सू. पा. 2. सू. 11.

[ भाष्यम् ]

यथा वस्त्राणां स्थूलो मलः पूर्वं निर्धूयते, पश्चात्सूक्ष्मो यत्नेनोपायेन चापनीयते, तथा स्वल्पप्रतिपक्षाः स्थूला वृत्तयः क्लेशानां, सूक्ष्मास्तु महाप्रतिपक्षा इति ॥ ११ ॥

[ सूत्रम् ]

**क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः ॥ १२ ॥**

[ भाष्यम् ]

तत्र पुण्यापुण्यकर्माशयः कामलोभमोहक्रोधभवः ।

[ विवरणम् ]

तत् किमिवेति? **यथा वस्त्राणां स्थूलो मलः पूर्वं निर्धूयते, पश्चात्सूक्ष्मो** मलः स्नेहनादिनिमित्तो **यत्नेन चोपायेन** क्षारादिविशिष्टोपायेन अपनीयते, **तथा स्वल्पप्रतिपक्षाः** तपस्स्वाध्यायेश्वरप्रणिधानयमनियमादियोगाङ्गानुष्ठानादिप्रतिपक्षाः **स्थूला वृत्तयः क्लेशानाम् । सूक्ष्मास्तु महाप्रतिपक्षा इति** । तपस्स्वाध्यायाद्यनुष्ठानप्रतिलब्धदीप्तिप्रकर्षाविप्लवसम्यग्दर्शनमहाप्रतिपक्षाः सूक्ष्मा बीजशक्त्यपेक्षा इति ॥ ११ ॥

किमर्थं पुनः क्लेशहानाय प्रयतत इत्याह—यतः **क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः** । **क्लेशा** अविद्यादयो **मूलं** जन्मकारणं यस्य कर्माशयस्य स **क्लेशमूलः कर्माशय** इति । आकर्मफलप्रदानादन्तःकरणे शेत इति कर्माशयः शुक्लकृष्णात्मकः । दृष्टं चादृष्टं च दृष्टादृष्टे जन्मनी तयोर्वेदनीयमनुभवनीयं फलं यस्य स **दृष्टादृष्टजन्मवेदनीयः कर्माशयः** । यो दृष्टादृष्टकर्मानुभवितव्यफलः कर्माशयः स क्लेशमूल इति सूत्रार्थः ॥

यस्य पुण्यापुण्यरूपस्य कर्माशयस्य यस्मिन् जन्मनि निष्पत्तिस्तस्य तस्मिन्नेव जन्मनि वेदनीयं फलं स दृष्टजन्मवेदनीयः । यस्य तु जन्मान्तरे वेदनीयं फलं सोऽदृष्टजन्मवेदनीयः कर्माशय इति ॥

भाष्यमिदानीं व्याख्यायते—**तत्र पुण्यापुण्यकर्माशयो लोभक्रोधमोहप्रभव इति**, क्लेशमूलत्वं तस्याचष्टे । पुण्यकर्माशयो लोभप्रभवो यथा—स्वर्गे वा अत्र वा शुभं फलमनुभविष्यामीति स्वर्गकामपुत्रकामयागादिः । क्रोधप्रभवो यथा–विश्वामित्रस्याम्बायाश्च । मोहप्रभवो यथा—द्रौपद्याः कुम्भकर्णस्य च ॥

[ भाष्यम् ]

स दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयश्च । तत्र तीव्रसंवेगेन मन्त्रतपस्समाधिभिर्निर्वर्तितः, ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशय इति ।

[ विवरणम् ]

अपुण्यकर्माशयोऽपि लोभप्रभवो यथा—चर्मणि द्वीपिनं हन्ति कुञ्जरं हन्ति दन्तयोः । कर्णस्य चाब्रज्ञानलोभादनृतवचने । क्रोधप्रभवो यथा—ब्रह्महत्या । भारते(भावे)ऽप्यश्वत्थाम्नश्च । मोहप्रभवो यथा–संसारमोचकादीनां नहुषस्य च ॥

अस्मिताविषयोर्लोभक्रोधमोहैः प्रत्येकं सम्बन्धः । कथम्? अहमधिक्षिप्तोऽस्मीति क्रुध्यति । अहं सुखमनुभविष्यामीति लुभ्यति । अहं मुह्यामीति मुह्यति ॥

अविद्याऽपि सर्वत्रैव विपरीतदर्शनलक्षणा सम्बध्यते । नह्यसत्याम-विद्यायामस्मितादीनां सम्भवोऽस्ति । रागस्तु लोभ एव । द्वेषस्तु क्रोधः । अभिनिवेशो विमोह एवान्तर्भवति ॥

यत्तु मोहः पुनरविद्येति, तदविवेकसामान्यादुक्तम् । लोभक्रोधमोहास्तु परस्परनिरपेक्षा धर्माधर्मोत्पत्तिद्वारम् । तथा च वक्ष्यति––लोभक्रोधमोह-पूर्विका इति ॥

**स दृष्टजन्मवेदनीयश्च** स लोभक्रोधमोहप्रभवः कर्माशयो **दृष्टजन्म-वेदनीयश्च अदृष्टजन्मवेदनीयश्च** ॥

कथं पुनः कर्मणां स्वरूपनिमित्ततुल्यत्वे कस्यचिद्दृष्टजन्मवेदनीयत्वं कस्यचिददृष्टजन्मवेदनीयत्वञ्चेत्याह––**यथा तीव्रसंयोगेन** तीव्रोद्यमेन **मन्त्र-तपस्समाधिभिर्**यथाप्रसिद्धरूपैस्तीव्रसंवेगानुष्ठितै**र्निर्वर्तितः, ईश्वरदेवतामहर्षि-महानुभावानामाराधनाद्वा** । ईश्वर उक्तः, देवता आदित्यादयः, महर्षयो भृग्वादयः, महानुभावा धर्मज्ञाननिरतमतयः, एत एव वा (तदेषां वा) । तीव्रतराराधनपरिनिष्पन्नः **सद्यः परिपच्यते** स तस्मिन्नेव जन्मनि । यथा नन्दीश्वरकुमारस्य ॥

[ भाष्यम् ]

तथा तीव्रक्लेशेन भीतव्याधितकृपणेषु, विश्वासोपगतेषु वा, महानुभावेषु वा तपस्विषु [यः] कृतः पुनः पुनरपकारः, स चापि पापकर्माशयः सद्य एव परिपच्यते ।

यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः । तथा नहुषोऽपि देवानामिन्द्रः स्वकं परिणामं हित्वा तिर्यक्त्वेन परिणतः इति ।

तत्र नारकाणां नास्ति दृष्टजन्मवेदनीयः कर्माशयः ।

[ विवरणम् ]

तथा तीव्रक्लेशेन लोभादिप्रकर्षेण भीतव्याधितकृपणेषु विस्रम्भोपगतेषु महानुभावेषु वा तपस्विषु ज्ञानधर्मनिरतमतिषु तपस्विषु पुनः पुनः आभीक्ष्ण्येन कृतोऽपकारः, स चापि पापकर्माशयः सद्य एव परिपच्यते फलति । यथा नहुषस्य ॥

लोकेऽपि क्षेत्रबीजसंस्कारविशेषेण वृक्षादिफलसन्निकर्षः प्रसिद्धः वृक्षायुर्वेदप्रसिद्धया । तथा क्रियासु फलसन्निकर्षविप्रकर्षदर्शनं गमिपच्यादिषु तीव्रमन्दानुष्ठानविशेषतः ॥

तत्र पुण्यकर्माशयस्योदाहरणमाह––यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं स्वकं हित्वा महेश्वराराधनपरिनिष्पन्नेन तीव्रतरक्लेशानुष्ठानेन जन्मना देवतात्वेन परिणतः ॥

तथा नहुषोऽपुण्यकर्माशयस्योदाहरणम् । स देवानामिन्द्रः । स स्वकं परिणामं हित्वा तीव्रतरमोहानुष्ठानजेन कर्माशयेन तिर्यक्त्वेन परिणत इति ॥

क्रोधादीनां तु यथासंख्यं दृष्टादृष्टजन्मवेदनीयत्वेनोदाहरणानि व्याख्यातानि पूर्वमेव । एतेन च मन्दमन्दतरलोभादिक्लेशानुष्ठानजन्मानौ पुण्यपापकर्माशयावदृष्टजन्मवेदनीयौ व्याख्यातौ लोकवदेव । तत्रापि तावदुच्यते ॥

तत्र नारकाणां नास्ति–यैर्नरकप्राप्त्यर्थमेव कर्मानुष्ठितं ब्रह्महत्यागुरुदारगमनादिलक्षणं, तेषां नारकाणां नारकत्वस्याशुभावित्वमाश्रित्य तेषां नारकाणां नास्ति दृष्टजन्मवेदनीयफलः कर्माशयः [ येन फलं] आरभ्यते ॥

[ भाष्यम् ]

क्षीणक्लेशानामपि नास्त्यदृष्टजन्मवेदनीयः कर्माशय इति ॥ १२ ॥

[ सूत्रम् ]

## सति मूले तद्विपाको जात्यायुर्भोगाः ॥ १३ ॥

[ भाष्यम् ]

सत्सु क्लेशेषु कर्माशयो विपाकारम्भी भवति नोच्छिन्नक्लेशमूलः । यथा तुषावनद्धाः शालितण्डुलाः अदग्धबीजभावाः प्ररोहसमर्था भवन्ति,

[ विवरणम् ]

कथं पुनर्नारकाणां कर्मारम्भस्तिर्यगादीनां देवतानां च? मनुष्याणां हि कर्माधिकारः । एषा च कर्मभूमिर्न नरकादिरित्युच्यते—न—नहुषादीनां कर्मदर्शनात् । श्रूयते च शतक्रतोरपि वृत्रादिवधेन ब्रह्महत्याप्रातियोगाद्यनुष्ठानश्रवणं च ॥

यन्मनुष्याणां कर्माधिकारः इयं च कर्मभूमिरिति, तत्क्षिप्रफलसिद्ध्यपेक्षम् । तदुक्तम्—"[1]क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा" इति । व्यासेन कीटोपाख्यान(श्रव)स्मरणाच्च तिरश्चामपि कर्मोपपत्तिः ॥

किञ्च—देहेन्द्रियादिमतः क्रियोपपत्तेः । क्रियाणां च कायवाङ्मनःप्रभवानां फलारम्भकत्वं, क्लेशपूर्वकत्वात् ॥

क्षीणक्लेशानामपि सम्यग्दर्शिनामपि नास्त्यदृष्टजन्मवेदनीयः कर्माशयः क्लेशाभावादेव । न हि वीतरागो जातो दृश्यते । क्लेशानां कर्मारम्भ इव कर्मफलारम्भेऽपि हेतुत्वात् । क्षीणक्लेशस्यापि ज्ञानप्राप्तेः प्रागारब्धो दृष्टजन्मवेदनीयः सम्भवति कर्माशयः प्रवृत्तफलत्वान्मुक्तशरवदिति ॥ १२ ॥

किञ्च—सति मूले तद्विपाको जात्यायुर्भोगाः । मूलं हि कर्मणां क्लेशः । अस्मिन् सति मूले क्लेशेषु सत्स्वित्यर्थः । तस्य लोभक्रोधप्रभवस्य पुण्यापुण्यकर्माशयस्य विपाकः फलनिष्पत्तिः तद्विपाकः । किं पुनस्तत्फलमित्याह—जात्यायुर्भोगाः ॥

भाष्यं 'सत्सु क्लेशेषु कर्माशयो विपाकारम्भी भवति नोच्छिन्नक्लेशमूल' इति, मूलस्य व्याख्यानम् । तत्र सत्सु क्लेशेषु कर्माशयो विपाकारम्भीत्यस्य दृष्टान्तमाह—यथा तुषावनद्धाः शालितण्डुला अदग्धबीजभावाः ॥

1. भगवद्गीता 4. 12.

[ भाष्यम् ]

नापनीततुषा दग्धबीजभावा वा, तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति, नापनीतक्लेशो न प्रसंख्यानदग्धक्लेशबीजभावो वेति । स च विपाकस्त्रिविधो जातिरायुर्भोग इति ।

तत्रेदं विचार्यते—

[ विवरणम् ]

तुषावनद्धा अपि कदाचिद्दग्धबीजभावा न प्ररोहसमर्था भवन्ति । अदग्धबीजभावा अपि व्यपनीततुषा न प्ररोहायालं भवन्ति । उभयथा च दार्ष्टान्तिकप्रतिपादनार्थं दृष्टान्तविकल्पः ॥

कथम्? तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति क्लेशोपबन्धः तुषावनद्धशालितण्डुलवत् । नापनीतक्लेशो [न प्रसंख्यान] दग्धक्लेशबीजभावो वेति । अपनीततुषशालितण्डुलवदपनीतक्लेशो न विपाकप्ररोही ॥

योगाङ्गानुष्ठानक्लेशक्षयपूर्वसम्यग्दर्शनानां योगिनाम[न]पनीतक्लेशोऽप्य[न]पनीततुषदग्धबीजशक्तिशालिवद्योगाङ्गानुष्ठानप्रणालिकेवलसम्यग्दर्शनानलदग्धबीजसामर्थ्यो न विपाकप्ररोही भवति ॥

तथा च व्यासः सांख्यानां योगिनां च पृथङ्मोक्षं दर्शयति ॥

"बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः ॥" इति ॥

तथा "योगैश्वर्यमतिक्रान्तो योगी मुच्येत" इत्यादि । वक्ष्यति चात्रापि प्राप्ताप्राप्तैश्वर्ययोगयोः कैवल्यम् ॥

कतिप्रकारोऽसौ विपाक इत्याह—स च विपाकस्त्रिविधः जातिरायुर्भोग इति ॥

तत्रेदं विचार्यते । किं पुनर्विचारफलम्? उच्यते—एकैकेन प्राणिना विरुद्धफलानि भूयिष्ठान्येकस्मिन्नेव जन्मनि कर्माणि क्रियन्ते । तद्यथा

"शरीरजैः कर्मदोषैर्याति स्थावरतां नरः ।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥"

[ भाष्यम् ]

किमेकङ्कर्मैकस्य जन्मनः कारणम्? अथैकं कर्मानेकं जन्माऽऽक्षिपतीति ।

द्वितीया विचारणा—किमनेकं कर्मानेकं जन्म निर्वर्तयति? अथानेकं कर्मैकं जन्म निर्वर्तयतीति ।

[ विवरणम् ]

स्वर्गार्थानि च तावदनुतिष्ठति । नरकप्रापीणि च कर्माणि । तत्रैकस्य ब्रह्महत्यादिकर्मणोऽनेकजन्मकारकत्वं श्रूयते [1]श्वसूकरखरोष्ट्राणामित्यादिस्मृतेः ॥

तत्र विरुद्धदेशकालनिमित्तविपाकानां कर्मणामेकजन्मारम्भे विरुद्ध-विपाकतादर्थ्यं हीयेत । ततश्च तादर्थ्यचोदनाः कर्मणां बाध्येरन् ॥

अथ पर्यायेण जन्मारम्भित्वं, कर्मणामसंख्येयत्वात् केनचिदेव फलमारब्धं नान्यैरिति, तत्र नियमानुपपत्तिः, केनारब्धः केन वा नेति । तथा च कर्तॄणां कर्मफलं प्रत्य(त्य)विस्रम्भादुत्साहविभङ्गः स्यात् अभ्युदयनिःश्रेयसप्रवृत्तिषु ॥

अथान्यतमेनारम्भे विनाश एवान्येषामिति, तथाऽपि स एव दोषः, किं विनष्टं किमारम्भकमित्यनियमात् ॥

अथाविनाश एव, तथाप्यवशिष्टस्यारम्भकालाभावो मोक्षाभावश्चेति । तस्मात्प्रवृत्तिनिवृत्तिशास्त्रार्थवत्त्वप्रतिपादनार्थमिदं विचार्यते ॥

किमेकं कर्म एकस्य जन्मनः कारणं स्वर्गादिप्राप्तिनिमित्तेषु बहुषु कर्मसु सत्सु । अथैकं कर्मानेकं जन्माक्षिपतीति प्रथमा विचारणा । विरुद्धपक्षद्वयालम्बिनी हि विचारणा एकैव स्यात् ॥

द्वितीया विचारणा—किमनेकं कर्मानेकं जन्म निर्वर्तयति विरुद्धफलमविरुद्धफलं वा । अथानेकं कर्मैकं जन्म निर्वर्तयति विरुद्धफलमविरुद्धफलं वा ॥

1. "श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम् ।
चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति ॥"

[ भाष्यम् ]

न तावदेकं कर्मैकस्य जन्मनः कारणम् । कस्मात् ? अनादिकाल-प्रचितस्यासंख्येयस्यावशिष्टस्य कर्मणः सांप्रतिकस्य च फलक्रमानियमादनाश्वासो लोकस्य प्रसक्तः, स चानिष्ट इति । नचैकं कर्मानेकस्य जन्मनः कारणम् । कस्मात् ? अनेकेषु कर्मस्वेकैकमेव कर्मानेकस्य जन्मनः कारणमित्यवशिष्टस्य विपाककालाभावः प्रसक्तः, स चाप्यनिष्ट इति ।

[ विवरणम् ]

किञ्चातः ? न तावदेकं कर्मैकस्य जन्मनः कारणम् । कस्मात् ? बहुषु कर्मसु सत्स्वेकमेव कर्म जन्मैकं नारभत इति ॥

यद्येकस्यैव जन्मारम्भित्वं, तदा अनादिकालप्रचितस्य संसारानादित्वादेकैकेन पुरुषेणासंख्येयमेकैकस्मिन् जन्मनि कर्म प्रचीयते विरुद्धफलमविरुद्धफलं च ॥

तत्र अवशिष्टस्य जन्मारम्भिकर्मव्यतिरिक्तस्य असङ्ख्येयस्य अनेकजन्मान्तरप्रचितस्य कर्मणः कर्मकलापस्य साम्प्रतस्य च वर्तमानजन्मप्रचितस्यानारब्धकार्यस्य फलक्रमानियमात् किं पूर्वजन्मोपचितकर्मराशिगतस्य कस्यचिदेव भविष्यज्जन्मारम्भित्वं, आहोस्विदिदानीन्तनजन्मकर्मराशिगतस्य कस्यचिदिति फलक्रमो न नियम्येतेति अनाश्वासो लोकस्य ॥

किं पूर्वजन्मकर्मणा दुष्टेनादुष्टेन वा फलमारब्धव्यम् ? अथेदानीन्तनकर्मणा दुष्टेनादुष्टेन वा ? इत्यविस्रम्भात् न कश्चिदग्निहोत्रादि कुर्वीत । नापि मोक्षाय समीहेतेत्यनाश्वासः प्रसक्तः, स चानिष्टः ॥

इदानीं प्रथमविचारणायां द्वितीयं पक्षं निराकरोति—न चैकं कर्मानेकस्य जन्मनः कारणम् । कस्मात् ? एकैकस्मिंस्तावज्जन्मनि अनेकं कर्मानुष्ठीयते, तत्रैकैकमेव चेत्कर्मानेकस्य जन्मविपाकस्य जन्मपरिणामस्य निमित्तं भवेत्, ततोऽवशिष्टस्य आरब्धकार्यादन्यस्य विपाककालाभावः प्रसक्तः, स चाप्यनिष्टः । फलक्रमानियमश्चेति पूर्वदोषोऽपि । नैवंभूतमनिष्टमभ्युपगन्तव्यम् । यत्तु ब्रह्महत्यादिकर्मणामेकैकस्यानेकजन्मारम्भित्वं, तस्य शास्त्रगोचरत्वात् ब्रह्महत्यादिविषयत्वमेवाभ्युपगम्यते ॥

[ भाष्यम् ]

न चानेकं कर्मानेकस्य जन्मनः कारणम् । कस्मात् ? तदनेकं जन्म युगपन्न सम्भवतीति क्रमेणैव वाच्यम् । तथा च पूर्वदोषानुषङ्गः ।

तस्माज्जन्मप्रायणान्तरे कृतः पुण्यापुण्यकर्माश[1]यप्रचयो विचित्रः प्रधानोपसर्जनभावेनावस्थितः प्रायणाभिव्यक्त एकप्रघट्टकेन मरणं प्रसाध्य संमूर्छित एकमेव जन्म करोति । तच्च जन्म तेनैव कर्मणा लब्धायुष्कं भवति । तस्मिन्नायुषि तेनैव कर्मणा भोगः सम्पद्यत इति ।

[ विवरणम् ]

द्वितीयविचारणायामिदानीं प्रथमः पक्षो निराक्रियते—**न चानेकं कर्मानेकस्य जन्मनः कारणम्**। कस्मादेवं नाभ्युपगम्यते? तदुच्यते, **तदेवानेकं जन्म युगपन्न सम्भवति** एकस्यानीश्वरस्य । ततश्च **क्रमेण वाच्यमाने** किमेकमनेकं जन्मारभत इति । **तथा च पूर्वदोषानुषङ्गः** सर्वत्र प्रथमदोषानुषङ्गः फलक्रमानियमादनाश्वास इति ॥

**तस्मात्** एवं पक्षत्रयानुपपत्ताविदानीं सिद्धान्तमुपसंहरति—**जन्मप्रायणान्तरे** जन्ममरणयोरन्तरे मध्ये **कृतः पुण्यपापकर्माशयः** अविरुद्धजन्मदेशनिमित्त इति वाक्यशेषः । विरुद्धजन्मदेशनिमित्तः पुनः अदृष्टजन्मवेदनीयः अप्रतिनियतविपाकः । तस्य त्रिधा विनियोगं वक्ष्यति । तस्मादविरुद्धफलस्यैव पुण्यापुण्यकर्माशयस्यायं नियम उच्यते ॥

**प्रचयविचित्रः** तुल्यातुल्यानेककर्मप्रचितत्वात्प्रचयेन विचित्रः । **प्रधानोपसर्जनभावेनावस्थितः** किञ्चित्कर्म कस्यचित्कर्मणः प्रधानमपि कस्यचिदन्यस्योपसर्जनमुपसर्जनमपि प्रधानमित्येवमनेककर्मशबलिम्नाऽवस्थितः ॥

**प्रायणाभिव्यक्तः** यथा बीजक्षेत्रसंस्कारसंयोगोऽङ्कुरभावाभिव्यक्तिकारणं, तथा प्रायणमप्यविरुद्धानां कर्मणामभिव्यक्तिनिमित्तम् । **एकप्रघट्टकेन** एकलोलीभावेन **समुच्चितः** एकीभूतः **एकमेव जन्म करोति** ॥

**तच्च जन्म तेनैव** प्रायणाभिव्यक्तात्मना **कर्मणा लब्धायुष्कं भवति । तस्मिन्नायुषि तेनैव कर्मणा भोगः सम्पद्यते,** येन जन्मायुषी कृते । यथा येन बीजेनाङ्कुरो निर्वृत्तस्तेनैव फलपुष्पादयोऽपि ॥

1. 'कर्माशयः प्रचयविचित्रः' इति विवरणाभिमतपाठः ॥

[ भाष्यम् ]

असौ कर्माशयो जन्मायुर्भोगहेतुत्वात्त्रिविपाकोऽभिधीयत इति । अत एकभविकः कर्माशय उक्त इति ।

दृष्टजन्मवेदनीयस्त्वेकविपाकारम्भी भोगहेतुत्वात्, द्विविपाकारम्भी वा आयुर्भोगहेतुत्वात्, [1]नन्दीश्वरवत्, नहुषवद्वेति । क्लेशकर्मविपाकानु-

[ विवरणम् ]

तेन च कर्मणा भोगायुर्निर्वृत्तिर्भवत्येवेत्यवधार्यते । न पुनरन्यस्यायुर्भोगादिनिमित्तस्य पुत्रपशुकामादियागादेः पुत्रायुरादिप्राप्तेर्हेतुत्वं निराक्रियते । इतरथा हि सर्वश्रुतिस्मृतिविप्रकोपः स्यात् । तस्मात्तेनैव कर्मणेति जन्ममात्रमारभ्य कृतकार्यत्वाद्विनिवृत्त्याशङ्कानिषेधमात्रं क्रियते ॥

असौ कर्माशयो जन्मायुर्भोगहेतुत्वात् त्रयो विपाका जन्मादयो यस्य स त्रिविपाकोऽभिधीयते । अयमैकभविकः कर्माशय उक्तः एक(एव)-जन्मप्रयोजन एकभविकः ॥

दृष्टजन्मवेदनीयस्त्वेकविपाकारम्भी यथा—पुत्रग्रामादिकामयागः । द्विविपाकारम्भी वा भोगायुर्हेतुत्वात् । यथा आयुरादिकामयागः । त्रिविपाकारम्भी वा नन्दीश्वरनहुषवत् ॥

ननु च नन्दीश्वरनहुषयोर्दृष्टजन्मवेदनीयत्वं त्रिविपाकारम्भित्वं च विरुद्धम् । दृष्टं हि जन्म नन्दीश्वरस्य मनुष्यत्वम् । यत्पुनर्नन्दीश्वरस्य देवत्वं, नहुषस्य चाजगरत्वं तत् द्वयमप्यदृष्टं, न हि मनुष्यत्व एव देवत्वं संवेद्यं नन्दीश्वरस्य, नापि देवत्व एव नहुषस्याजगरत्वं संवेद्यमिति, कथं त्रिविपाकारम्भित्वं दृष्टजन्मवेदनीयत्वं चेति ॥

नैष दोषः । दृश्यमानजातिविशिष्टमेव शरीरं तयोर्जात्यन्तरत्वेन परिणतम् । न च यथाऽन्येषां दृष्टजातिविशिष्टशरीरोपमर्देन जात्यन्तरोपादाननिषेकादिनिमित्तापेक्षया जात्यन्तरप्राप्तिः, तथा नन्दीश्वरनहुषयोः । तस्मात् त्रिविपाकारम्भित्वं दृष्टजन्मवेदनीयत्वं चेत्युदाहृतम् ॥

तत्र द्विविधः कर्मराशिर्दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयश्च । दृष्टजन्मवेदनीयस्त्वनियतविपाकः कदाचिद्भोगहेतुरित्येकविपाकः । कदाचिद्भोगायुर्हेतुत्वात् द्विविपाकः । कदाचित् जात्यायुर्भोगहेतुत्वात् त्रिविपाको नन्दीश्वरनहुषयोरिव ॥

---

1. 'त्रिविपाकारम्भी वा जन्मायुर्भोगहेतुत्वात्' इत्यधिकः पाठः विवरणानुसारी ॥

[ भाष्यम् ]

भवनिर्वर्तिताभिस्तु वासनाभिरनादिकालसंमूर्छितमिदं चित्तं विचित्रीकृतमिव सर्वतो मत्स्यजालं ग्रन्थिभिरिवाऽऽततमित्येता अनेकभवपूर्विका वासनाः । यस्त्वयं कर्माशय एष एवैकभविक उक्त इति । ये संस्काराः स्मृतिहेतवस्ता वासनाः, ताश्चानादिकालीना इति ।

यस्त्वसावेकभविकः कर्माशयः स नियतविपाकश्चानियतविपाकश्च ।

[ विवरणम् ]

अदृष्टजन्मवेदनीयस्तु द्विविधो नियतविपाकश्चानियतविपाकश्च । नियतविपाकस्तु प्रदर्शितः तस्माज्जन्मप्रायणान्तरे कृत इत्यादिना । यस्त्वनियतविपाकः स त्रिविधो वक्ष्यते ॥

इदानीं तु कर्मविपाकजनितो वासनाराशिरपर आख्यायते—क्लेशकर्मविपाकानुभवनिर्वर्तिताभिः क्लेशानुभवश्च कर्मानुभवश्च विपाकानुभवश्च क्लेशकर्मविपाकानुभवाः, तैर्निर्वर्तिताभिः वासनाभिः संस्कारैः अनादिकालसंमूर्छितमिदं चित्तं चित्रीकृतमिव पटकुड्यादिवत् सर्वतो मत्स्यजालं ग्रन्थिभिरिवाततं व्याप्तम् ॥

अथैकैकस्मिन् जन्मनि अनेकभवपूर्विका वासनाः कर्मणि विपाके च तदङ्गीभावेन व्याप्रियन्ते । न हि वासनायाः कर्मविपाकानङ्गभावे सति जातमात्रस्य पृषदंशदारकस्य वृषयुवानं प्रति स्फुरितपरिकोपस्यावस्कन्दनं जाघटीति । न च सकृदनुभववासनामात्रतया तेन शक्यं भवितुम् ॥

यस्त्वयं कर्माशयः यस्त्वयं जन्मप्रायणान्तरे कृतोऽविरुद्धजन्मदेशनिमित्तः प्रधानोपसर्जनीभावेन त्रिविपाकारम्भी एष एवैकभविक उक्तः । न दृष्टजन्मवेदनीयः, नाप्यनियतविपक्तिरदृष्टजन्मवेदनीयः, नापि च वासनाः ॥

तासां तावत्स्वरूपमाह—ये संस्काराः स्मृतिहेतवस्ता वासनास्ताश्चानादिकालीनाः, संसारस्य क्लेशकर्मविपाकानुभवरूपस्यानादित्वात् ॥

यस्त्वसावेकभविकः कर्माशयः पूर्वोक्तस्तस्यापवाद उच्यते एकदेशस्य । कथं? स नियतविपाकश्चानियतविपाकश्च । कोऽसौ नियतविपाकः? यः प्रायणाभिव्यक्तः कार्यमारभते । स एव चैकभविकः ॥

यस्तु विरुद्धजन्मदेशकालनिमित्तः सोऽदृष्टजन्मवेदनीयत्वसामान्ये सत्यप्यनियतविपाकः। कस्मात्? नियतविपाकेन विरोधात्। न चायमेकभविकः, विरोधादेव। यत्त्वस्यैकभविकत्वमुक्तं, यस्त्वसावेकभविकः कर्माशय इति, तददृष्टजन्मवेदनीयत्वसामान्येन ॥

ननु च यद्येवं जन्मप्रायणान्तरे कृतः पुण्यपापकर्माशयः प्रचयविचित्रः प्रधानोपसर्जनभावेनावस्थितः प्रायणाभिव्यक्त एकप्रघट्टेन सम्मूर्छित एकजन्म करोतीत्येवमादिनियमो विरुध्येत। कुतः? प्रायणस्य सर्वपूर्वकर्माभिव्यञ्जकत्वात्, आशयाधारोपमर्देन चाशयान्तरोत्पत्तेः, मानुष्यकाशयाधारे पूर्वं दैवतैर्यग्योनाशयानां समवस्थानं, तदाधारोपमर्दनकाले च प्रायणे साधारणे सर्वकर्माभिव्यक्तिकारणे दैवतैर्यग्योनाशयानां कस्यचिदेवाभिव्यक्तिर्नेतरेषामिति नास्ति हेतुः। न हि स्वगोचरापन्नं व्यङ्ग्यमेकदेशपरित्यागेनाभिव्यनक्ति प्रदीपः ॥

अत्रोच्यते—नैतद्युक्तं, कर्मानर्थक्यप्रसङ्गात्। बहुप्रकाराणि हि कर्माणि परस्परविरुद्धानि क्रियन्ते। यो हि स्वर्गार्थं कर्म कृतवान् स एव पशुग्रामाद्यर्थं कर्मानुष्ठाय पुनर्ब्रह्महत्यां वा स्थावरादिप्राप्त्यर्थं वा बलवत्कर्मानुतिष्ठेत्। तत्र नरकस्थावरादिप्राप्तस्य न हि पशुग्रामादिलाभसंभवः। ततश्च तत्कर्मणामानर्थक्यं प्रसज्येत ॥

अथ तत्रापि ग्रामादिलाभसुखं भवतीति चेत्—न हि ग्रामकाम इत्युक्ते ग्रामसुखत्वमभिप्रेतम्। न हि ग्रामसुखं प्राप्तो ग्रामं प्राप्तवान् ॥

किञ्च—सर्वशास्त्रविप्रकोपश्च स्यात्। अदृष्टानां च स्वर्गनरकादीनां सुखदुःखमात्रप्रसङ्गः। 'ततः[1] शेषेण' इति शेषसद्भावज्ञापनश्रुतिस्मृतयो बाध्येरन्। तस्मान्न सर्वं कर्म प्रायणेऽभिव्यज्यते। अत्यन्तविरुद्धानां कर्मणामानर्थक्यप्राप्तेः। कर्मशास्त्रानर्थक्ये च मोक्षशास्त्रेऽप्यनाश्वासप्रसङ्गः ॥

अभिव्यञ्जकानामपि कस्यचिदभिव्यञ्जकत्वं कस्यचिन्नेति दृश्यते व्यभिचारः। यथा चक्षुषो रूपाभिव्यञ्जकत्वेऽपि चैत्रोलूकचक्षुषोरहोरात्रयोरितरेतरव्यभिचारः। आलोकस्य च समाने सर्वचक्षुस्सहकारित्वे, नोलूकचक्षुस्सहकारित्वम्। एकस्मिंश्च स्त्र्यादिपिण्डे सुखदुःखमोहानां सर्वेषामभिव्यक्तिनिमित्तेऽपि कस्यचिदेवाभिव्यक्तिः ॥

---

1. गौतमधर्मसूत्रम् 11. 31.

तत्र कर्माद्यपेक्षया विरोधाददोष इति चेत्—इहापि विरोधादनभिव्यक्तिः सर्वकर्मणाम्। न चापि बीजाधारे क्षेत्रे उपमर्द्यमाने जलादिनिमित्तसंयोगे सत्यपि तद्गतानां बीजानां विरुद्धजातीयानामङ्कुरादिकार्यारम्भित्वम्। एवं मानुष्यकालीनाशयाधारेऽप्युपमर्द्यमाने, न विरुद्धजातीयदैवतैर्यग्योनाशयानां सर्वेषां युगपद्वृत्तिलाभः ॥

न च प्रायणमेव कर्मणामभिव्यञ्जकम्। दृष्टजन्मवेदनीयानां भोगार्थानां दर्शनात्। येषां प्रायणमेवाभिव्यञ्जकं तेषां सर्वेषां भवत्वभिव्यक्तिरिति चेत्—न—विरोधाद्दैवतैर्यग्योनमानुष्यकाशयानाम् ॥

प्रायणानां च भूतभविष्यत्कालविशेषैर्वि(षावि)शेषोपपत्तेर्न सर्वकर्माभिव्यञ्जकत्वम्। प्रायणविशेषश्रवणाच्च प्रायणभेदः यथा—'यं यं [1]वापि स्मरन्भावं त्यजत्यन्ते कळेबरम्' इति स्मरणविशेषभेदात् प्रायणभेदः। तस्मान्न सर्वकर्माभिव्यञ्जकत्वं प्रायणस्य। अन्यथा विशेषणानर्थक्यप्रसङ्गात् ॥

न च स्मरणादिविशेषणेन प्रकृतस्यान्यथात्वं नाशो वा स्यात्। तन्नाशान्यथात्वकरणे हि स्मरणस्य प्रकृतकर्मसहकारित्वं न स्यात्। स्वतन्त्रं हि स्मरणं स्यात्। तथा चानुष्ठितकर्मनैरर्थक्यं भवेत् ॥

किंच—कललाद्यवस्थासु मृतानां मोक्षप्रसङ्गः। कर्मानारम्भात्। तासां फलत्ववत्कर्मत्वमपीति चेत्—न—करणाव्यूहात्। करणेषु हि व्यूहितेषु कर्मणां वृत्तिलाभः फलत्वं च। न तदा तद्व्यूह उपपद्यते ॥

स्वप्नवदिति चेन्न। तत्रापि कर्मानभ्युपगमात्। श्रुतिश्च 'स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन[2] भवति' इति कर्मणा स्वप्नदर्शनजेनासम्बन्धं दर्शयति। न कश्चित्स्वप्नैरपराधवानस्ति। ब्रह्महत्यादिकरणदर्शनात्। अथ स्कन्नप्रायश्चित्तादिदर्शनान्नेति चेन्न, रेतस्स्कन्दननिमित्तत्वात्प्रायश्चित्तस्य ॥

तस्माद्यद्यपि स्वप्नाद्यवस्थायामिव कललाद्यवस्थासु फलमभ्युपगम्यते, तथाऽपि करणव्यापाराभावात् स्वप्नावस्थावदेव फलमात्रं तत्, न कर्मकर्तृत्वमिति मोक्षप्रसङ्ग एव गर्भप्रसृतानामापतित इति ॥

---

1. भगवद्गीता. 8. 6.
2. बृ. उ. 4. 3. 15

[ भाष्यम् ]

तत्रादृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियमो, न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य। कस्मात्? यो ह्यदृष्टजन्मवेदनीयोऽनियतविपाकस्तस्य त्रयी गतिः—कृतस्याविपक्वस्य नाशः, प्रधानकर्मण्यावापगमनं वा, नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानमिति। तत्र कृतस्याविपक्वस्य नाशो यथा—शुक्लकर्मोदयादिहैव नाशः कृष्णस्य।

[ विवरणम् ]

तस्मान्न सर्वकर्माभिव्यञ्जकत्वं प्रायणानां, तेषां च विशेषोपपत्तेरित्यत इदमुच्यते–तत्रादृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियमो योऽसौ 'जन्मप्रायणान्तरे कृत' इत्येवमादिभाष्येण त्रिविपाकारम्भित्वनियम उक्तः, न तु अदृष्टजन्मवेदनीयस्य अनियतविपाकस्य। कस्मात्? यस्त्वदृष्टजन्मवेदनीयः अनियतविपाकस्तस्य त्रयी गतिः॥

कथम्? कृतस्याविपक्वस्य विनाशः नाशकालमप्राप्तस्यैव नाशः। यथा—प्रायश्चित्तादिना प्रतिषिद्धस्य कृतस्य नाशः॥

प्रधानकर्मण्यावापगमनं प्रधानकर्मणि नियतवेदनीये आवापापत्तिः प्रधानकर्मफलातिरस्कारेण स्वयमपि मन्दमन्दं फलं मध्यमनुप्रविश्य प्रयच्छति। यथा—सकलेषु तण्डुलेषु विपच्यमानेषु असकला अपि तण्डुलकणा उप्ता अल्पीयांसमर्थं साधयन्त्येव। नियतविपाकप्रधानकर्माभिभूतस्य वाऽप्यवस्थानं नियतविपाकं यत्प्रधानकर्म प्रारब्धफलं तेनाभिभूतस्य न्यक्कृतस्य विरुद्धदेशकालनिमित्तविपाकत्वादवस्थानम्। यथा—विजिगीषमाणयोरन्यतरेण प्रवृत्तराज्येनाभिभूतस्येतरस्यावस्थानं देशकालनिमित्तापेक्षया॥

तत्र कृतस्याविपक्वस्य नाशो यथा शुक्लकर्मोदयादिहैव तपस्स्वाध्याययोगादिलक्षणस्य शुद्धस्योदयात् प्रायश्चित्तादिलक्षणस्य च, कृष्णस्य अशुद्धिरूपस्य हिंसादिलक्षणस्य प्रागेव वृत्तिलाभात् नाशः। इहैवेति त्वविवक्षितम्। जन्मान्तरेऽपि प्राग्वृत्तिलाभान्नाशोपपत्तेः। यथा कौनख्यादिनिमित्तपापविशेषाणां कौनख्यादिचिह्नैरवगम्य प्रायश्चित्तेन नाशः क्रियते॥

[ भाष्यम् ]

यत्रेदमुक्तम्—" द्वे द्वे ह वै कर्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोऽपहन्ति । तदिच्छस्व कर्माणि सुकृतानि कर्तुमिहैव ते कर्म कवयो वेदयन्ते" ।

प्रधानकर्मण्यावापगमनम् । यत्रेदमुक्तम्—" स्यात्स्वल्पः संकरः सपरिहारः सप्रत्यवमर्षः कुशलस्य नापकर्षायालम् । कस्मात्? कुशलं हि मे बह्वन्यदस्ति यत्रायमावापं गतः स्वर्गेऽप्यपकर्षमल्पं करिष्यति" इति ।

[ विवरणम् ]

तदेतत्तन्त्रान्तरप्रसिद्धेनोदाहरणेन व्याचष्टे—यत्रेदमुक्तं द्वे द्वे ह वै कर्मणी शुक्लकृष्णे जन्मनि जन्मनि साधकस्य पुरुषस्याधिकृतस्य । एको राशिः स्वाध्यायादिपुण्येन कृतः पुण्यकृतः अपहन्तीतरमपुण्येन कृतं राशिम् । अथ वा पुण्यकृतः पुरुषस्य शुक्लकर्मराशिः कृष्णकर्मराशिमपहन्ति । तदिच्छस्व तस्मात् स्वच्छकर्माणि स्वकीयानि कर्माणि शुक्लानि सुकृतानि कर्तुम् । कुतः? यतः इहैव अत्रैव तत्र शर्म सुखं शान्ति कवयो वेदयन्ते कर्मविपाकविभागज्ञाः ज्ञापयन्ति ॥

प्रधानकर्मण्यावापगमनमुदाहरणेन प्रदर्श्यते—स्वल्पसङ्करः अल्पीयान् दोषावकरः । कुतः? सपरिहारः परिहारसहितः । परिहारमपेक्षते, न तु परिहृतः । परिहारशक्त्युपायविज्ञानसमानाश्रय इत्यर्थः । सप्रत्यवमर्शः सप्रत्यवेक्षणः । कथमकार्यं मया क्रियते कदा नु निस्तरिष्याम्येतत् न पुनः करिष्यामीत्यापदि प्रवृत्तस्याकार्यं कुर्वतः प्राणस्थित्यादिनिमित्तम् ॥

कुशलस्य कर्मफलदोषपरिहारादिविभागविशारदस्य विदुषः । नायमपकर्षाय नायं स्वल्पः संकरः पुण्यफलात्प्रवृत्ताद्बहुतरादपकृष्टुं, अपकृष्य च स्वकार्ये नियोक्तुं पर्याप्तः । अथ वा, कुशलस्य कर्मण एव नायमपकर्षाय पर्याप्तः । कस्मात्? कुशलं हि मे । साधक एवं मन्यते । शुभं यस्मान्मम बह्वन्यदस्ति यत्रायं यस्मिन् बहुनि शुभे अयं सङ्कर आवापगतः स्वर्गेऽप्यपकर्षमल्पं करिष्यतीति ॥

[ भाष्यम् ]

नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानम् । कथमिति? अदृष्टजन्मवेदनीयस्यैव नियतविपाकस्य कर्मणः समानं मरणमभिव्यक्तिकारणमुक्तम्, न तु [1]अदृष्टजन्मवेदनीयस्यानियतविपाकस्य।

यत्त्वदृष्टजन्मवेदनीयं कर्मानियतविपाकं तन्नश्येदावापं वा गच्छेदभिभूतं वा चिरमप्युपासीत, यावत्समानं कर्माभिव्यञ्जकं निमित्तमस्य न विपाकाभिमुखं करोतीति । तद्विपाकस्यैव देशकालनिमित्तानवधारणादियं कर्मगतिश्चित्रा दुर्विज्ञाना चेति। [2]न चोत्सर्गस्यापवादान्निवृत्तिरित्येकभविकः कर्माशयोऽनुज्ञायत इति ॥ १३ ॥

[ विवरणम् ]

नियतविपाकप्रधानकर्मभिभूतस्य वाऽप्यवस्थानम्। कथमिति दुष्टाभिप्रायः प्रश्नः । कथं? प्रवृत्तराज्येनापरस्याप्रवृत्तराज्यस्याभिभवो युक्तो निमित्तभेदेन राज्यप्रवृत्तेः। इह तु निमित्तमभिव्यञ्जकं मरणं सर्वेषां कर्मणां तुल्यं तस्मिंस्तु निमित्ते सति सर्वेषां कर्मणां वृत्तिलाभो युक्त इति प्रधानकर्माभिभवो न युक्त इतरस्येति मन्यते । ततश्चावापगमनमेवास्त्विति ॥

अत्रोच्यते—तत्रादृष्टजन्मवेदनीयस्यैव अविरुद्धदेशकालविपाकादिनिमित्तस्य नियतविपाकस्य पुण्यापुण्यरूपस्यानेकस्य कर्मणः समानं मरणमभिव्यक्तिकारणमुक्तम् । न तु दृष्टजन्मवेदनीयस्य पुत्रग्रामादिविषयस्य, अनियतविपाकस्य वा अदृष्टजन्मवेदनीयस्य यथाकृतव्याख्यानस्य ॥

यत्त्वदृष्टजन्मवेदनीयमनियतविपाकं तन्नश्येदावापं वा गच्छेदभिभूतं वा चिरमप्युपासीत उदासीत, यावत्समानमविरुद्धं तुल्यजातीयमभिव्यञ्जकं निमित्तं कर्म । समानजातीयं हि कर्म विपच्यमानमेतदभिमुखं करोति ॥

तद्विपाकस्यैव तस्यानियतविपाकस्य कर्मणो विपाकस्यैव । देशकालनिमित्तानवधारणात्कस्मिन्वा देशे कस्मिन्वा निमित्ते कस्मिन्काले वा तत्कर्म

---

1. 'न तु दृष्टजन्मवेदनीयस्यानियतविपाकस्य वा अदृष्टजन्मवेदनीयस्य' इति विवरणाभिमतपाठः ॥

2. 'न तस्योत्सर्गस्य' इति 'कर्माशयो दुर्ज्ञान इति' इति च विवरणाभिमतो भाष्यपाठ इति ज्ञायते ॥

[ सूत्रम् ]

**ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् ॥ १४ ॥**

[ भाष्यम् ]

ते जन्मायुर्भोगाः पुण्यहेतुकाः सुखफलाः, अपुण्यहेतुका दुःखफला इति । यथा चेदं दुःखं प्रतिकूलात्मकमेवं विषयसुखकालेऽपि दुःखमस्त्येव प्रतिकूलात्मकं योगिनः ॥ १४ ॥

[ विवरणम् ]

विपाकाभिमुखं भविष्यतीत्यनवधारणात् । इयं गतिश्चित्रा दुर्ज्ञाना च भवति । चित्रा नाशावापाभिभवादिवैचित्र्यात् । दुर्ज्ञाना देशकालनिमित्तानवधारणात् ॥

ननु चादृष्टजन्मवेदनीयस्य प्रायणेऽभिव्यक्तस्य एकमेव जन्म करोतीत्येकजन्मारम्भित्वमुक्तम्, तदिदानीं नाशावापाभिभवावस्थानादिवचनाद्बाध्येतेति चेत्—न—उपपादितोत्तरत्वात् अदृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियम इति । न तस्योत्सर्गस्य अस्मादनियमापवादान्निवृत्तिरिति । कथं[न] निवृत्तिः ? एकभविकः कर्माशयो दुर्ज्ञान इत्येवं न निवृत्तिः । अनियतविपाकस्याप्येकजन्मारम्भित्वं न प्रतिषिद्धमित्यर्थः ।

अथवा, उत्सर्गस्यापवादान्निवृत्तिरिति मत्वा नैकभविकः कर्माशयो दुर्ज्ञान इत्यनेन नञ् संबध्यते । यस्मादुत्सर्गस्यैकदेशस्यापवादो निवर्तको न सर्वस्य, तस्मान्नियतविपाक एकभविकः कर्माशयः सुज्ञान एव ॥

अपरः कल्पः–इह कर्मगतिर्ज्ञातव्येति प्रकृतं, तस्यायमपवाद एकभविकः कर्माशयो दुर्ज्ञान इति । तत्रेतिशब्दो हेत्वर्थे । यस्माद्धेतोरौत्सर्गिकस्य कर्मगतिज्ञानस्य प्रकृतस्य एतस्मादपवादान्न निवृत्तिरिति, तस्माद्यथा ज्ञेया कर्मगतिस्तथा ज्ञातव्यैव । दुर्ज्ञाना इति दुःखेन ज्ञेयत्वमुच्यते क्लेशेन ॥ १३ ॥

कर्माशय उपव्याख्यातो दृष्टजन्मवेदनीयश्च अदृष्टजन्मवेदनीयश्च । तस्यापि त्रिविधा विपाका जात्यायुर्भोगाः ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् । ह्लादः सुखं, परितापो दुःखं, ह्लादश्च परितापश्च ह्लादपरितापौ, तौ फलं येषां ते ह्लादपरितापफलाः । तथा पुण्यं च अपुण्यञ्च पुण्यापुण्ये, ते एव हेतू येषां ते पुण्यापुण्यहेतवः, तेषां भावः पुण्यापुण्यहेतुत्वं, तस्मात्पुण्यापुण्यहेतुत्वात् । ते जात्यायुर्भोगाः पुण्यहेतुकाः सुखफलाः । अपुण्यहेतुका दुःखफलाः । यथेदं दुःखं प्रतिकूलात्मकमेवं विषयसुखकालेऽपि दुःखमस्त्येव प्रतिकूलात्मकं योगिनः ॥ १४ ॥

[ भाष्यम् ]

कथं ? तदुपपाद्यते—

[ सूत्रम् ]

**परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥ १५ ॥**

[ भाष्यम् ]

सर्वस्यायं रागानुविद्धश्चेतनाचेतनसाधनाधीनः सुखानुभव इति तत्रास्ति रागजः कर्माशयः ।

[ विवरणम् ]

कथं विषयसुखकाले योगिनः दुःखमस्ति ? । तथा पूर्वत्र चोक्तं[1] दुःखे सुखख्यातिं वक्ष्यतीति । तदुपपाद्यते प्रतिपाद्यते ; तत्र चैतन्न प्रतिपादितम् । दुःखस्य कर्मकार्यत्वात्, कर्मानन्तरं प्रतिपादनं युक्तमिति, बहुवक्तव्यत्वाच्च । परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥

परिणतिः परिणामः, तप्तिस्तापः, संस्कृतिः संस्कारः, तापश्च संस्कारश्च तापसंस्कारौ, परिणामश्च तापसंस्कारौ च परिणामतापसंस्काराः, त एव दुःखा दुःखनिमित्तानि, एतैः परिणामतापसंस्कारदुःखैर्हेतुभिः सर्वमेव दुःखम् । किन्तत्सर्वं ? क्लेशा दुःखकारणत्वादेव हेतोः । कर्माणि ह्लादपरितापफलत्वात् । जात्यायुर्भोगाश्च क्लेशादीनामाश्रयनिमित्तविषयाश्च दुःखहेतुत्वादित्येतत्सर्वमेव दुःखम् ॥

किं सर्वस्यैव ? नेत्याह— विवेकिन इति । क्लेशादीनां विभागविवेको यस्य विद्यते स विवेकी ; तस्य क्लेशकर्मविपाकाभिज्ञस्य परिणामतापसंस्कार-गुणवृत्तिविरोधात्मक(धाच्च)सर्वदुःखत्वोपपादक(प्रतिपादक)हेत्वभिदर्शिन इत्यर्थः । नेतरस्यानित्यंदर्शिनः ॥

तस्य तु तप्तिमात्रं दुःखम् । तदपि 'अहं तप्य' इत्यात्मत्वेन प्रतिपद्यमानः तत्रापि संशयानोऽसौ ममेदं दुःखमित्येतावन्मात्रमपि विविङ्क्ते । यदि ह्येतावद-प्यन्तरं विविञ्चीत, ततो दुःखसाधनमप्येतद्दुःख(साधन)मिति मन्वीत ।

---

1. या. सू. पा. 2. सू. 5.

[ भाष्यम् ]

तथा च द्वेष्टि दुःखसाधनानि मुह्यति चेति द्वेषमोहकृतोऽप्यस्ति कर्माशयः । तथा, नानुपहत्य भूतान्युपभोगः सम्भवतीति हिंसाकृतोऽप्यस्ति शारीरः कर्माशय इति । विषयसुखं चाविद्येत्युक्तम् ।

[ विवरणम् ]

तथा च सर्वमिदं दुःखमिति तितिक्षेदिति सोऽपि विवेकी स्यात् । तस्माद्यद्यपि तापकाले दुःखमात्रं पश्यन्ति, तथाऽपि न तत्साधनादि सर्वं दुःखमिति मन्यन्ते निर्विवेकिनः । यस्य पुनः परिणामदुःखहेतुदर्शनं तस्य विवेकिनः सर्वमेव दुःखम् ॥

तत्र तावत्परिणामदुःखतां व्याचष्टे-—**सर्वस्यायं रागानुविद्धः** । सर्वस्येत्यनेन सर्वप्राणिप्रसिद्धत्वादव्यभिचारिप्रत्यक्षावगम्यत्वं दर्शयति । **चेतनाचेतनाधीनः** पुत्रपशुहिरण्यादिसाधनायत्तः **सुखानुभव इति** । सुखानुभवकाले रागो मनोव्यापारः तद्विशिष्टो हि सुखमनुभवति । स सर्वो व्यापारः क्लेशोपसंहितत्वाद्धर्माधर्महेतुः । तत्पूर्वश्च कर्माशयः प्रारब्धफल उपभुज्यते, भोगकाले चापर उपचीयते । ततश्च **क्लेशमूलः कर्माशयः सति मूले तद्विपाक** इत्युपपन्नं भवति ॥

**तथा**, सुखवेलायां सुखप्रत्यनीकभूतानि **दुःखसाधनानि** उपलभमानो **द्वेष्टि**, तथा सुखोपभोगपरिपालनव्यग्रतरमानसो **मुह्यति चेति द्वेषमोह**पूर्वव्यापारजनितो**ऽप्यस्ति कर्माशयः** । अथवा द्वेषमोहावेव व्यापाररूपाविति तत्कृत एव ॥

**तथा**, यश्चासौ सुखोपभोगः स **नानुपहत्य** नानुपहिंस्य **भूतान्युपभोगः सम्भवतीति** । उपभोग एवोपघातहेतुत्वादुपहन्तृत्वेन विवक्षित इति, समानकर्तृकत्वम् । अन्योऽपि मदीयमेवोपभोक्ष्यत इति मन्यते, तत्रापि सर्वोपभोगसामर्थ्ययुक्तं धनमिति तस्मिन्नुपादीयमाने ध्रुवं परपीडा स्यात् । किमुत पीडयित्वैव यदुपादीयते । ततश्च **हिंसाकृतोऽप्यस्ति कर्माशयः शारीरः** । तदुपादानव्यापारस्य शरीरनिर्वर्त्यत्वात् ॥

एवमेकस्मिन्नुपभोगकाले बहुधा कर्माशयो लोभक्रोधमोहनिमित्त **उपचीयते** । तथा च रागद्वेषमोहविशिष्टत्वादनेकसुखकर्माशयविशिष्टः सुखानुभवः परिणममानः सन्ननुबन्धे दुःखीभवतीति परिणामदुःखतेत्युच्यते । विवेकिनस्त्वेवं पश्यतः सुखानुभवकालेऽपि दुःखमस्त्येव । तद्यथा—विषदिग्धतां ज्ञात्वा दध्योदनं भुञ्जानस्य ॥

[ भाष्यम् ]

या भोगेष्विन्द्रियाणां तृप्तेरुपशान्तिस्तत्सुखम् । या लौल्यादनुपशान्तिस्तद्दुःखम् । न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्तुं शक्यम् । कस्मात्? यतो भोगाभ्यासमनु विवर्धन्ते रागाः कौशलानि चेन्द्रियाणामिति ।

[ विवरणम् ]

इतश्च सर्वं दुःखमेव, अविद्यात्वाद्विषयसुखस्य । अविवेकप्रत्ययात्मको हि विषयसुखानुभवः । तदेतदाह—विषयसुखं चाविद्येत्युक्तमिति । क्वोक्तम्? इहैव पर्यायशब्देन "[1]अत्यन्तविवि[भ]क्तयोरत्यन्तासङ्कीर्णयोरविवेकप्राप्ताविव सत्यां भोगः कल्पते । स्वरूपप्रतिलम्भे तु तयोः कैवल्यमेव भवति कुतो भोग इति" इत्यनेन भाष्येण ॥

यद्वा, सूत्रकारेणोक्तमुपरिष्टात् "[2]प्रत्ययाविशेषो भोगः" इति । अविद्या च परिणममाना सर्वमनर्थं करोति । ततश्च दुःखबीजत्वाद्दुःखमेव विषयसुखम् । यथा व्याधिनिमित्तत्वात् स्वादुतरमपि भक्ष्यमाणम् ॥

विषयसुखं चाविद्येत्यस्यैवार्थस्य प्रकाशनार्थं तन्त्रसिद्धमुदाहरणं दर्शयति—या भोगेष्विन्द्रियाणां भुज्यन्त इति भोगाः शब्दादयः तेषु निमित्तेषु या तृप्तिः तत इन्द्रियाणां उपशान्तिः उपशमः किमनर्थायासहेतुकया वृत्त्येति निराकुलतयावस्थानं तत् सुखम् ॥

या तु लौल्यादीप्सया तृष्णातः सकाशादनुपशान्तिः अनुपरतिः तद्दुःखम् । तदुक्तम्—

"नास्ति तृष्णासमं दुःखं नास्त्यतृष्णासमं सुखम्" इति ॥

ननु चोपभोगेनैव वैतृष्ण्यं भवति उपभोगान्ते । उपभोगश्च सुखं भविष्यति । तत आह—न चेन्द्रियाणां भोगाभ्यासेन शक्यं वैतृष्ण्यं कर्तुम् । कस्मात्? अत आह—यतो भोगाभ्यासमनु विवर्धन्ते इन्द्रियाणां रागाः । तथा चोक्तम्—

"न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥" इति ।

---

1. यो. सू. पा. 2. सू. 6.
2. यो. सू. पा. 3. सू. 35.

[ भाष्यम् ]

तस्मादनुपायः सुखस्य भोगाभ्यास इति । स खल्वयं वृश्चिकविषभीत इवाऽऽशीविषेण दष्टः, यः सुखार्थी विषयानुवासितो महति दुःखपङ्के निमग्न इति । एषा परिणामदुःखता नाम प्रतिकूला सुखावस्थायामपि योगिनमेव क्लिश्नाति ।

अथ का तापदुःखता? सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभव इति तत्रास्ति द्वेषजः कर्माशयः ।

[ विवरणम् ]

कौशलानि नैपुणानि च भोगाभ्यासेष्विन्द्रियाणामनु विवर्धन्ते । यद्यपि मनःकौशलपूर्वकमिन्द्रियाणां कौशलं, तथाऽपि दृश्यत एव भिक्षा[क्षत्रा]दीनामिन्द्रियस्यापि कौशलम् । तस्मादनुपायः सुखस्य भोगाभ्यास इति भोगाभ्यासान्निवृत्तिरेव सुखम ॥

स खल्वयं वृश्चिकभीत इवाशीविषेण दष्टो यः सुखार्थी विषयानन्ववसितः अन्ववबद्धः अनुप्रवृत्तोऽनुव्यवसितो वा, यथा मन्दविषाद्वृश्चिकादुपजातभीतिः पटुतरेणाशीविषेण ग्रस्तो महत्तरं दुःखमभिप्रपद्यते,

तथाऽयमप्रदुःखाभासायाः परिणाममहासुखाया निवृत्तो दुःखबुद्ध्या भीतः सन्नपारे महति दुःखपङ्के मग्न इत्येषा परिणामदुःखता सुखस्य प्रतिकूला सुखावस्थायामपि योगिनः । स हि योगी प्रवृत्तवेपथुनैव हृदयेन प्रतिनियतवेदनीयस्य कर्मणो बलीयस्त्वादनुभुङ्क्ते सुखम् । तस्मात् सर्वं दुःखं विवेकिनः ॥

अथ तापदुःखता व्याख्यायते—सुखोपभोगस्तु परिणममानः सन्ननुबन्धे विज्ञाने विषदिग्धस्वादुदध्योदनोपभोगवद्दुःखीभवति, स्वरूपतः पुनरविद्यारूपोऽनुकूलवेदनागन्धोऽपि । इह पुनः स्वरूपत एव दुःखता तापस्य प्रतिकूलात्मकत्वात् ॥

कथम्? सर्वस्य द्वेषानुविद्धः द्वेषानुगतः चेतनाचेतनसाधनाधीनः शत्रुकण्टकादिसाधनायत्तः तापानुभवः पूर्ववदेवाधर्मफलमनु भवति अपूर्वश्चोपचीयमानः तत्रास्ति द्वेषजः कर्माशयः ॥

[ भाष्यम् ]

सुखसाधनानि च प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते, ततः परमनुगृह्णात्यपहन्ति चेति परानुग्रहपीडाभ्यां धर्माधर्मावुपचिनोति। स कर्माशयो लोभान्मोहाच्च भवतीत्येषा तापदुःखतोच्यते।

का पुनः संस्कारदुःखता? सुखानुभवात्सुखसंस्काराशयो दुःखानुभवादपि दुःखसंस्काराशय इति। एवं कर्मभ्यो विपाकेऽनुभूयमाने सुखे दुःखे वा पुनः कर्माशयप्रचय इति।

एवमिदमनादि दुःखस्रोतो विप्रसृतं योगिनमेव प्रतिकूलात्मकत्वादुद्वेजयति।

[ विवरणम् ]

तेन च दुःखेन परितप्यमानः सुखसाधनानि चन्दनादीनि प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते चेष्टते। तच्च परिस्पन्दनं परानुग्रहाय परपीडनाय वा भवति। ततः परानुग्रहपीडाभ्यां धर्माधर्मावुपचिनोति। स च परानुग्रहपीडाकृतो धर्माधर्माख्यः कर्माशयो लोभान्मोहाच्च प्रभवतीत्येषा तावत् तापदुःखता द्राघीयसी विप्रसृता। एवं पश्यतो विवेकिनः सर्वमेवाश्रयविषयनिमित्तं दुःखमिति॥

अधुना ह्लादपरितापानुभवजनितसंस्कारदुःखमुच्यते—का पुनः संस्कारदुःखता? सुखानुभवात् सुखसंस्काराशयः, दुःखानुभवादपि दुःखसंस्काराशयः। सुखदुःखयो रागद्वेषानुविद्धत्वात्तत्संस्काराशयावपि रागद्वेषानुविद्धौ। एवं कर्मणो विपाके जात्यायुर्भोगाख्येऽनुभूयमाने सुखदुःखे भवतः॥

ततोऽपि सुखदुःखानुभवसंस्काराशयः यथा नैरन्तर्येण सुखदुःखानुभवस्तथैव तदनुभवसंस्कारावपि रागद्वेषानुविद्धौ निरन्तरतया भवतः। तौ च संस्काराशयौ क्रियाया उपभोगस्य चाङ्गीभवतः। एवं संस्काराशयस्य दुःखहेतुत्वम्। संस्कारहेतुकं संस्कारदुःखं, तथा च तत्संस्कारदुःखता। न ह्यस्मरन्नुपभोगाय क्रियायै वा साधनमुपादत्ते। स्मृतेश्च संस्कारनिमित्तत्वमुपपादितम्॥

यद्यपि संस्कारस्य स्वरूपतो दुःखता नास्ति, तथापि संस्कारस्य दुःखहेतुतां जानतो विवेकिनः सत्तामात्रेण दुःखत्वं, भक्षितमात्रविषवत्। इत्थमेतैः परिणामतापसंस्कारहेतुभिः सर्वमेव दुःखमित्यनादिदुःखस्रोतो योगिनमेव प्रतिकूलात्मकत्वादुद्वेजयति॥

[ भाष्यम् ]

कस्मात्? अक्षिपात्रकल्पो हि विद्वानिति। यथोर्णातन्तुरक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति, न चान्येषु गात्रावयवेषु, एवमेतानि दुःखान्यक्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति, नेतरं प्रतिपत्तारम्। इतरं तु [1]स्वकर्मोपहृतं दुःखमुपात्तमुपात्तं त्यजन्तं त्यक्तं त्यक्तमुपाददानमनादिवासनाविचित्रया चित्तवृत्त्या समन्ततोऽनुविद्धमिवाविद्यया हातव्य[2] एवाहङ्कारममकारानुपातिनं जातं जातं बाह्याध्यात्मिकोभयनिमित्तास्त्रिपर्वाणस्तापा अनुप्लवन्ते।

[ विवरणम् ]

ननु चेतरस्यापि प्रतिकूलात्मकमेव, कस्मान्न तमुद्वेजयति। नात्यन्तक्लेशादिकालुष्याविवेककिणीकृतचेतस्त्वादितरमुद्वेजयति। न प्रतिकूलात्मकता प्रभाव्यते। यो हि दयितामुष्टिघातं मुद्गराभिघातदेशीयमपि मस्तकेन प्रतीच्छति। पुत्रस्य वा मूत्रपुरीषमुरसा धारयति। असावानन्दमहोदन्वत्तरङ्गायमाणः [णं] स्वात्मन्यपि न वातितराम् [स्वात्मानमपि न वेत्ति तराम्]। न हि तस्य तत्प्रतिकूलात्मकम्। रागमेव हि तदितरस्य प्रतिपत्तृत्वादभिवर्धयति तराम्॥

ननु च योगिनोऽपि तत्समानं निमित्तं, कस्मात्तमुद्वेजयतीति। उद्वेजयत्येव तम्। कस्मात्? अक्षिपात्रकल्पो हि सः। प्रसन्नत्वाद्विरक्तत्वादित्यर्थः। तस्मान्न समानं निमित्तं तस्य, यतोऽसौ विद्वानिति। न हि विदुषः क्लेशादिकालुष्याविवेकाकिणीकृतचेतस्त्वम्। न च तत्किणीकृतचेतस्त्वतिरस्कारादृते विद्वत्ता। तस्मादक्षिपात्रकल्पत्वाद्विद्वांसमेवोद्वेजयति, नेतरम्॥

तत्र दृष्टान्ताभ्यां विद्वदविदुषोरन्तरमाचष्टे—यथोर्णातन्तुरतिमृदुस्पर्शोऽप्यक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति स्वच्छतरत्वादक्षिपात्रस्य, तथा योगिनं विविक्ततरप्रज्ञानमकलुषहृदयमुद्वेजयति दुःखम्। स एवोर्णातन्तुरन्येषु गात्रेषु क्षिप्तः खरतरसंस्पर्शेनापि न दुःखयति, तथा नेतरं प्रतिपत्तारं दुःखं पीडयति, क्लेशादिकिणीकृतचेतस्त्वात् कठिनतरेतरगात्रावयवकल्पो हि सः॥

तदिदमाह--एवमेतानि दुःखानि अक्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति नेतरं प्रतिपत्तारम्। इतरस्य तु प्रतिपत्तुरितरगात्रावयवस्वभावतां दर्शयन्नाह—इतरं त्विति। तापा अनुप्लवन्त इत्येवमन्तेन वाक्यसमाप्तिः॥

---

1. "स्वकारणोपहृत कर्मतामपादितं" इति,

2. "हातव्याहङ्कार" इति च विवरणाभिमतः पाठः।

[ भाष्यम् ]

तमे(दे)वमनादिना दुःखस्रोतसा व्युह्यमानमात्मानं भूतग्रामं च दृष्ट्वा योगी सर्वदुःखक्षयकारणं सम्यग्दर्शनं शरणं प्रपद्यते इति ।

[ विवरणम् ]

स्वकारणोपहृतं दुःखप्राप्तिनिमित्तैश्चेतनाचेतनादिभिरुपहृतमुपनीतं बुद्धिवृत्तिद्वारेण पुरुषस्य कर्मतामापादितं, दुःखमुपात्तं त्यजन्तं शरीरत्यागेन, अन्यत्र च त्यक्तं पुनरन्यं शरीरादिलक्षणमेव दुःखसमुदायमुपाददानमनादिवासनाचित्रया अविद्यया चित्तवृत्त्या सर्वतोऽनुविद्धमिव ॥

इतरं प्रतिपत्तारं किंविशिष्टम्? हातव्याहङ्कारममकारानुपातिनम् । कार्यकरणेषु तद्धर्मेषु च क्रियागुणफलेषु विपर्ययेण प्रतिपत्तिरहङ्कारः । ममकारस्तु तेषु बाह्येषु च चेतनाचेतनेषु ममेति प्रत्ययः । तौ च विपर्ययत्वात् समस्तक्लेशकर्मविपाकबीजत्वाच्च हातव्यौ । न हि तावन्तरेण रागादयः कर्मविपाका वा समुदाचरन्ति । तस्माद्धातव्यौ तौ तावनुपतितुं शीलमस्येति हातव्याहङ्कारममकारानुपाती, तम् ॥

जातं जातं अन्यगात्रावयवकल्पं बाह्याध्यात्मिकोभयनिमित्ताः बाह्यं देवता भूतानि च, आध्यात्मिकं कार्यं कारणं च, बाह्याध्यात्मिकानि चोभयानि च निमित्तं येषां ते बाह्याध्यात्मिकोभयनिमित्ताः ॥

त्रिपर्वाणः बाह्यादिनिमित्तमेव त्रिपर्वत्वम् । भूतभविष्यद्वर्तमानत्वं वा त्रिपर्वत्वम् । वक्ष्यति च "हेयं दुःखमनागतम्"[1] इति । यद्वा, क्लेशकर्मविपाकात्मकत्वम् । यद्वा, परिणामतापसंस्कारदुःखत्वम् । अतस्ते त्रिपर्वाणस्तापा अनुप्लवन्ते अनुषज्यन्ति ॥

त(मे)देवं अविवेकं प्रतिपत्तारम् अनादिदुःखस्रोतसोह्यमानमात्मानं च दुःखस्रोतसि मग्नं तथा भूतग्रामं च दृष्ट्वा योगी सर्वदुःखक्षयकरं सम्यग्दर्शनं शरणं प्रपद्यत इति ॥

ननु च योगित्वादेव सम्यग्दर्शनं प्रतिपन्नः । उच्यते—योगाङ्गानुष्ठानादेव योगित्वं, ऋतेऽपि सम्यग्दर्शनात् । तस्मात् सम्यग्दर्शनसाधनत्वं योगस्य

1. यो. सू. पा. 2. सू. 16.

[ भाष्यम् ]

गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः। प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिगुणाः परस्परानुग्रहतन्त्रीभूत्वा शान्तं घोरं मूढं वा प्रत्ययं त्रिगुणमेवाऽऽरभन्ते। चलं च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम्। रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते, सामान्यानि त्वतिशयैः सह प्रवर्तन्ते।

[ विवरणम् ]

दर्शयति। योगं योगफलं च सर्वमेव दुःखं पश्यन् सम्यग्दर्शनैकशरणं प्रतिपद्यते। तथा च वक्ष्यति--"[1]तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्" इति॥

इतश्च सर्वं दुःखं विवेकिनः। कुतश्च? गुणवृत्तिविरोधाच्चापि। ननु च किमर्थं सूत्रे पृथग्विभक्तिक्रिया? यावता परिणामतापसंस्कारगुणवृत्तिविरोधैरित्येव कर्तव्यम्। नैष दोषः। सुखदुःखानुभवतद्वासनाः सर्वजनप्रसिद्धा इति परिणामतापसंस्कारदुःखैरिति निर्दिष्टाः। तत्कारणविभागज्ञानविशारदस्यैव विवेकप्रकर्षवतो गुणवृत्तिविरोधा विज्ञेया इति पृथक्करणम्। सर्वदुःखहेतुत्वसामान्यात्त्वेकसूत्रविन्यासः॥

गुणाः सत्त्वादयः, तेषां वृत्तयो गुणवृत्तयः, तासां विरोधाद्गुणवृत्तिविरोधात्। ते च गुणा अन्तःकरणाद्याकारसन्निविष्टाः। तेषां गुणप्रधानभावेनाभिन्नपरिणामत्वाच्च विरुद्धवृत्तित्वं भवति। अन्यतमवृत्तिरुद्भवन्त्याऽन्यतमवृत्त्याऽभिभूयते॥

एवं त्रयाणामपि प्रतिक्षण(पक्ष)मन्योन्यवृत्तितिरस्कार इतरेतरवृत्त्युद्भावित्वं च। न सुखदुःखमोहात्मकानां गुणानामन्यतमवृत्तिलाभोऽन्यतमाननुसंहितः। तत एतत्सिद्धं भवति—यदा दुःखात्मकं रज उद्भवति, तदा दुःखत्वादेव तद्वृत्तेर्न दुःखमिति वक्तव्यम्। सत्त्वतमसोरपि रजोऽनुगतिरस्त्येवेति तयोरपि दुःखत्वमेव। सत्त्वतमःप्रवृत्तिनिवृत्त्योरपि रजोव्यापारानुजत्वाद्दुःखत्वमेव सर्वस्येति॥

एतदुपव्याचष्टे—प्रख्याप्रवृत्तिस्थितिशीलाभिर्वृत्तिभिर्गुणाः परस्परानुग्रहतन्त्राः परस्परविरुद्धा अपि परस्परोपकार्योपकारकभावेन तैलवर्त्यग्निवत् शान्तं सात्त्विकं घोरं राजसं मूढं तामसं प्रत्ययं त्रिगुणमेवारभन्ते। इ(तरे)तरयोरङ्गभावेनानुगतत्वाद्यदा सात्त्विकः शान्तः प्रत्यय उद्भूतः सोऽनन्तरमेवोद्बुभूषता तमोऽनुसंहितेन घोरेण राजसेन प्रत्ययेन हन्यते॥

---

1. यो. सू. पा. 3. सू. 50,

[ भाष्यम् ]

एवमेते गुणा इतरेतराश्रयेणोपार्जितसुखदुःखमोहप्रत्ययाः सर्वे सर्वरूपा भवन्तीति, गुणप्रधानभावकृतस्त्वेषां विशेष इति । तस्माद्दुःखमेव सर्वं विवेकिन इति ।

[ विवरणम् ]

यदा च राजसो घोरः प्रत्यय इतरगुणानुगत उद्भूतो भवति सोऽनन्तरमेवोद्बुभूषता तामसेन प्रत्ययेन मूढेन सत्त्वानुगतेन सात्त्विकेन वा तमोऽनुगतेन हन्यते । तथा तामसोऽपीतरप्रत्ययाभ्यां पर्यायेण । तथा सात्त्विकेन इतराविल्यन्योन्योदयाभिभवप्रवृत्तया गुणाः ॥

कस्मात्? यतः चलं गुणवृत्तं गुणस्वभावत्वं चित्ताकारेण गुणाः सन्निविष्टा इति क्षिप्रपरिणामं चित्तमुक्तम् । क्व? तन्त्रे ॥

कस्मात् पुनर्गुणा विरुध्यन्त इति । अनेकातिशयानामेकत्रासम्भवात् । यथा अपवरके तमःप्रकाशयोरतिशयवतोः, एवमन्तःकरणाकारसन्निवेशिनां सुखदुःखमोहरूपाणां प्रकाशप्रवृत्तिनियमवृत्तीनां गुणानां रूपेण वा सुखादिना वृत्त्या वा ज्ञानादिलक्षणया युगपदतिशयो न सम्भवति ॥

सामान्यानां त्वविरोधादव्यक्तरूपाणामतिशयैर्व्यक्तैः सह वृत्तिर्युक्ता । तेन 'रूपातिशया वृत्त्यतिशयाश्च विरुध्यन्ते । सामान्यानि त्वतिशयैः सह वर्तन्ते' इत्युच्यते । यदा सुखरूपातिशयस्तदा न दुःखरूपातिशयो मोहरूपातिशयो वा । तथा इतरातिशये नेतरातिशयः । तथा, ज्ञानवृत्त्यतिशये न लोभप्रत्ययवृत्त्यतिशयः । तथा, अन्यतमवृत्त्यतिशये नान्यतमवृत्त्यतिशयः ॥

एवमेते गुणा इतरेतरोपाश्रयेणोपार्जितसुखदुःखमोहप्रत्ययाः । सत्त्वेन रजस्तमउपाश्रयेणोपार्जितः सुखप्रत्ययः । रजसापि सत्त्वतमउपाश्रयेणोपार्जितो दुःखप्रत्ययः । तमसापि सत्त्वरजउपाश्रयेणोपार्जितो मोहप्रत्ययः । ततः सर्वे सर्वकार्या भवन्ति ॥

यद्येवमयं प्रत्ययः सात्त्विकः, तामसोऽयं, राजसश्चायमिति विशेषः क्व इत्याह—गुणप्रधानभावकृतस्त्वेषां विशेष इति । प्रधानोपसर्जनतया संज्ञालाभालाभौ । यथा पाञ्चभौतिकत्वेऽपि पार्थिवं तैजसमाप्यमिति ॥

यत एवं गुणवृत्तिविरोधः, तस्मात् सर्वमेव दुःखं विवेकिन इति । गुणवृत्तिविरोधादित्येतत्परवैराग्यार्थम् । कथं? परिणामतापसंस्कारदुःखैरिति दृष्टानु-

[ भाष्यम् ]

तदस्य महतो दुःखसमुदायस्य प्रभवबीजमविद्या । तस्याश्च सम्यग्दर्शनमभावहेतुः ।

यथा चिकित्साशास्त्रं चतुर्व्यूहम्—रोगो रोगहेतुरारोग्यं भैषज्यमिति, एवमिदमपि शास्त्रं चतुर्व्यूहमेव । तद्यथा—संसारः संसारहेतुर्मोक्षो मोक्षोपाय इति ।

तत्र दुःखबहुलः संसारो हेयः। प्रधानपुरुषयोः संयोगो हेयहेतुः । संयोगस्यात्यन्तिकी निवृत्तिर्हानम् । हानोपायः सम्यग्दर्शनम् ।

[ विवरणम् ]

अविकाविषयवितृष्णस्यैव सर्वस्य दुःखप्रतिपादनार्थं पृथग्विभक्तिकं कृतम् । न हि तत्र दुःखत्वमपश्यतो वैराग्यमुपकल्पत इति ॥

एतत्तु गुणवृत्तिविरोधाच्चेति गुणानां परस्परविरोधिवृत्तित्वेन दुःखत्वप्रतिपादनात्तेभ्यो व्यक्ताव्यक्तधर्मकेभ्यः परं वैराग्यमुपकल्प्यत इत्येवमर्थम् । तथा चात्रापि प्रधानोपसर्जनभावेन सर्वे सर्वरूपा भवन्तीति व्यक्ताव्यक्तधर्मत्वं प्रतिपादितम् । एवं च कृत्वा सूत्रेऽपि गुणवृत्तिविरोधाच्चेति पृथक् पठितम् ॥

परिणामतापसंस्कारदुःखधर्मत्वात् तस्यैतस्य महतो गुणगौणलक्षणस्य दुःखसमुदायस्य प्रभवबीजमविद्या । तस्याश्च सम्यग्दर्शनमभावहेतुः प्रतिपक्षत्वात् । भूतार्थाश्रयत्वाद्विद्याया अभूतार्थाश्रयत्वाच्चाविद्याया विद्यैवाभावहेतुः । यथा सद्विषयेणैकचन्द्रदर्शनेनासद्विषयस्यानेकचन्द्रदर्शनस्य बाधनम् ॥

सह दुःखनिदानेन क्लेशकर्मविपाकलक्षणेन सर्वं दुःखमित्युपपादितम् । अनेन दुःखेन यो दुःखी विवेकी स एतस्य सम्यग्दर्शनशास्त्रस्य विषयः अधिकृतो, नेतरो दुःखस्यैव प्रतिपत्तृत्वादित्येतद्दृष्टान्तेन प्रतिपिपादयिषन्नाह—यथा चिकित्साशास्त्रं चतुर्व्यूहम्—रोगो रोगहेतुरारोग्यं भैषज्यमिति । रोगरोगहेतुभ्यां तन्निविवर्तयिषुर्भैषज्यस्य शास्त्रस्यारोग्यस्य प्रयोजनस्य विषयः ॥

एवमिदमपि शास्त्रं चतुर्व्यूहमेव । यथा—संसारः संसारहेतुर्मोक्षो मोक्षहेतुः । तत्र दुःखबहुलः संसारो हेयः । प्रधानपुरुषसंयोगो हेयहेतुः । संयोगस्यात्यन्तिकी निवृत्तिर्हानम् । हानोपायः सम्यग्दर्शनमित्येते चत्वारो व्यूहाः ॥

[ भाष्यम् ]

तत्र हातुः स्वरूपमुपादेयं वा हेयं वा न भवितुमर्हतीति, हाने त्वस्योच्छेद-वादप्रसङ्गः,

[ विवरणम् ]

यथा चिकित्साशास्त्रं रोगे रोगहेतौ चारोग्ये च तत्प्रयोजनके भैषज्ये च चतुष्टये स्वरूपप्रतिपादनाय व्यूहितं, तत एव च रोगादयोऽस्य चत्वारो व्यूहा इति चतुर्व्यूहं, तथा अस्य शास्त्रस्य । दुःखबहुलः संसारः [हेयः], अविद्याहेतुकश्च प्रधानपुरुषसंयोगो हेतुः, सनिमित्तस्य संसारस्य हानं सम्यग्दर्शनशास्त्रस्य प्रयोजनं, तथा सम्यग्दर्शनं चेति चत्वार एते व्यूहा अस्यापि इति चतुर्व्यूहं शास्त्रम् । एषु वाऽर्थेषु चतुर्धा व्यूहोऽस्येति चतुर्व्यूहम् ॥

तत्र हातुः स्वरूपमिति । ननु 'द्रष्टा दृशिमात्रः' इति हातृलक्षणसूत्र एतद्वदितव्यम् । नैष दोषः । शास्त्रारम्भप्रयोजनप्रतिपिपादयिषुणा क्लेशादिकः समस्तो दुःखावसानः संसारो निर्वर्णितः । संसारी च यः संसारदुःखेन निर्विण्णो विवेकी सोऽस्य शास्त्रस्य विषय उपपादितः । तस्य विवेकिनः शास्त्रमतःपरमारभ्यते । एतच्च प्रथमसूत्रे प्रदर्शितम् । आरभ्यमाणस्य शास्त्रस्य सम्यग्दर्शनमेव प्रयोजनम् । तच्च संसारदुःखनिर्वर्णनानन्तरमवसरप्राप्तं प्रति-पादयितव्यमित्येतदुच्यते—तत्र हातुः स्वरूपमिति ॥

हाता पुरुषः, तस्य स्वरूपमुपादेयं वा हेयं वा न भवति । कुत एतदेवम्? हेयोपादेयव्यतिरेकेण वस्त्वदर्शनात् । यथा लोके सुखं तत्कारणं चोपादेयं, दुःखं तत्कारणं च हेयम्, एवमयमपि पुरुषो वस्तुत्वादन्यतरधर्मा भवितुमर्हतीत्यभिप्रायः । किमतो यद्येवम्? अत एतद्भवति, हाने त्वस्योच्छेद-वादप्रसङ्ग इति ॥

यद्यसौ हेयत्वधर्मा, तत एष हातव्यः । हाने त्वस्य किं स्यात्? आत्मोच्छेदवादप्रसङ्गः स्यात् । अतः को दोषः स्यात्? दोषं कैवल्यपादे प्रतिपादयिष्यामः ॥

किञ्चान्यत्—अस्य हात्रन्तरस्य(किञ्चान्यतरस्य)अभावाद्धानानुपपत्तित्वम् । स्वयमेवात्मन आत्मा हातेति चेत्—न—स्वात्मनि क्रियाविरोधाद्भे-दाभावाच्च । हेयादात्मन आत्मा हाता चेदन्यस्तदाऽनवस्थासङ्गः । यो यो हाता तस्यापि हेयत्वात् । न च युगपद्द्वयोर्हात्रोः संभवोऽस्ति । भिन्नकालभाविनोस्तु हेयहातृत्वानुपपत्तिः ॥

[ भाष्यम् ]

उपादाने च हेतुवादः, उभयप्रत्याख्याने शाश्वतवाद, इत्येतत्सम्यग्दर्शनम् ॥ १५ ॥

[ विवरणम् ]

हातुश्च हेयत्वाभ्युपगमे तस्यानवस्थितत्वाद्धेयसम्बन्धानुपपत्तिः । हातुरनवस्थितत्वे च स्वयमेव हेयत्वप्रतिपत्तेर्हातुर्हानायोद्यमानर्थक्यप्रसङ्गः । हानफलानुपपत्तिश्च । न हि बद्धस्य स्वरूपनाश एव फलम् । मोक्षो हि तस्य फलम् । नापि म्रियमाणोऽपि ज्ञातक्षणान्तरमरणः स्वरूपविनाशमिच्छति । विनाशस्यार्थप्राप्तत्वादेवमनवस्थितश्चेद्धाता न स्वरूपहानमिच्छेत्, अर्थप्राप्तेर्हानस्य ॥

यथा च हातुर्नित्यत्वं तथा द्रष्टृसूत्रे[1] कैवल्यपादे च व्याख्यास्यामहे । तस्मान्न हेयत्वधर्मा पुरुषः । संसारस्तु महदादिव्यक्तिः दुःखबहुलो हेयः । तत्तुल्यधर्मकः पुरुषो न भवतीत्यर्थः । तत्तुल्यधर्मकत्वे तस्योच्छेदवादप्रसङ्ग इति ॥

अस्तु तर्ह्युपादेयः, यथा सुखार्थं सुखकारणं द्रव्यम् । नैतदेवम् । कस्मात्? उपादाने त्वस्य हेतुवादप्रसङ्गात् । यस्य द्रव्याद्युपादानफलेन सम्बन्धः स चेदुपादीयेत, तन्निर्हेतुकमस्योपादानं स्यात् । अन्यस्योपादातुरभावात् । न हि पटः पटेनैवोपादीयते । अन्यस्य ह्यन्यदुपादेयम् । उपादात्रन्तरसम्भवे हि तदनवस्थाप्रसङ्गः, सोऽप्यन्येनोपादीयते सोऽपि चान्येनेति ॥

किं च—पारार्थ्यप्रसङ्गश्च । अन्यस्य हि हेतोरन्यदुपादीयते, सत्त्वादिलक्षणस्य प्रधानस्योपादाने पुरुषो हेतुरभ्युपेयते, यथा घटाय मृत्पिण्डोपादाने कुलालो हेतुः । स चेत्पुरुषः प्रधानोपादानहेतुः प्रधानवदुपादीयेत, तस्यापि सत्त्वादिधर्मत्वं स्यात्, उपादेयत्वान्मृत्पिण्डवत् । ततोऽस्य प्रधानस्य निर्हेतुकं कार्यार्थमुपादानं प्राप्नोति ॥

अथेश्वरार्थमुपादेयः, पुरुषाणां वा परस्परार्थमिति चेत्, भोग्यत्वाचेतनत्वपरिणामित्वादिदोषसामग्री प्रसज्येत, तस्मान्नापि प्रधानधर्मकः पुरुष इत्युपादाने च हेतुवादप्रसङ्ग इत्युच्यते ॥

तदुक्तम्—हेतुस्त्वपुरुषो भवतीति । तस्य चोपादाने अहेतुः प्रधानवृत्तिर्निर्हेतुकी स्यात् । न च स्वयं स्वार्थे शक्यं विज्ञातुम् । प्रकाशादिषु स्वार्थत्वादर्शनात् ॥

---

1. यो. सू. पा. 2. सू. 17.

[ भाष्यम् ]

तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते—

[ सूत्रम् ]

## हेयं दुःखमनागतम् ॥ १६ ॥

[ भाष्यम् ]

दुःखमतीतमुपभोगेनातिवाहितं न हेयपक्षे वर्तते । वर्तमानं च स्वक्षणे भोगारूढमिति न तत्क्षणान्तरे हेयतामापद्यते । तस्माद्यदेवानागतं दुःखं तदेवाक्षिपात्रकल्पं योगिनं क्लिश्नाति, नेतरं प्रतिपत्तारम् । तदेव हेयतामापद्यते ॥ १६ ॥

[ विवरणम् ]

उभयप्रत्याख्याने हेयत्वोपादेयत्वप्रत्याख्याने । शाश्वतवादप्रसङ्गः आत्मनित्यत्ववादप्रसङ्गः । यद्यपि प्रधानस्योपादेयस्यापि शाश्वतत्वं, तथाऽपि विकारात्मना तदशाश्वतमेव । अनेकात्मकत्वमशुचित्वमविद्यात्वं परार्थत्वमित्येवमादयो दोषाः प्रधाने । पुरुषाणामपि तथात्वे सत्यनिर्मोक्षप्रसङ्गः । बन्धमोक्षयोस्तद्धेत्वोश्च विद्याविद्ययोः स्वरूपाव्यतिरेकाद्बन्धमुक्तयोश्च निर्विशेषत्वप्रसङ्गात् । तस्माद्धेयोपादेयत्वप्रत्याख्यानेन शाश्वतवाद इत्येतदेव सम्यग्दर्शनम् ॥ १५ ॥

यथा चिकित्स्यव्यतिरिक्तरोगादिचतुष्टयमन्तरेण चिकित्साशास्त्रमारोग्यप्रयोजनं चतुर्व्यूहं न संभवति, तथेदमपि हातृस्वरूपव्यतिरिक्तहेयादिचतुष्टयमन्तरेण सम्यग्दर्शनशास्त्रं हानफलं चतुर्व्यूहं न सम्भवतीति, हेयादिचतुष्टयप्रतिपादनेन तदेतच्छास्त्रं चतुर्व्यूहमभिधीयते ॥

कथम्? हेयं दुःखमनागतम् । दुःखमतीतम् अतिक्रान्तं, वर्तमानाज्जन्मनोऽतिक्रान्तजन्मलक्षणं दुःखं, तदुपभोगेनातिवाहितम् अतिनीतं न हेयपक्षे वर्तते । स्वयमेव हीनत्वात् ॥

वर्तमानं च यज्जन्मलक्षणं दुःखम् स्वक्षणोपभोगारूढम् स्वं वर्तमानं भोगविशिष्टं क्षणमध्यानमुपभुज्यमानात्मकत्वेनारूढं तत् दुःखं न क्षणान्तरे हेयतामापद्यते । स्वयमेव भोगेन हीनं न हानाय क्षणान्तरमपेक्षते ॥

तस्माद्यदेवानागतं प्रायणानन्तरभाविजन्मदुःखलक्षणं दुःखं तदेवाक्षिपात्रकल्पं योगिनं क्लिश्नातीति तदेव हेयं सम्यग्दर्शनेन हानीयमुच्यते । भविष्यज्जन्माभावायैव यतितव्यम् । न वर्तमानदुःखनिरोधाय ॥

[ भाष्यम् ]

तस्माद्यदेव हेयमित्युच्यते तस्यैव कारणं प्रतिनिर्दिश्यते—

[ सूत्रम् ]

## द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥

[ भाष्यम् ]

द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषः। दृश्याः बुद्धिसत्त्वोपारूढाः सर्वे धर्माः।

[ विवरणम् ]

वर्तमानजन्मयियतिषायां हि सम्यग्दर्शनमशक्यविनियोगत्वादनर्थकं स्यात्। मुक्तबाणवत् प्रवृत्तफलत्वाद्वर्तमानदुःखस्य। भविष्यति पुनरप्रवृत्तत्वाद्बीजनिरोध उपकल्पत इति सम्यग्दर्शनार्थवत्त्वम्। स्वविषयो हि सम्यग्दर्शनस्य स इति ॥ १६ ॥

तदेतच्छास्त्रं चतुर्व्यूहमभिधीयत इत्युक्तम्। एकश्चतुर्षु व्यूहः प्रतिपादितः हेयं दुःखमनागतमिति। इदानीं द्वितीयो व्यूहः तस्य दुःखस्य कारणं, हेतुः प्रतिनिर्दिश्यते ॥

ननु निर्दिष्टमेव दुःखकारणमिति, तथैवोपसंहृतमन्ते—तस्यैतस्य महतो दुःखसमुदायस्य प्रभवबीजमविद्येति। सत्यमेवम्। किन्तु दुःखस्वरूपमात्रं तत्कारणस्वरूपमात्रं च पूर्वं निर्दिष्टम्। न च तत्स्वरूपमात्रे, इति तत्कारणं निर्दिश्यते। द्रष्टृदृश्ययोः संयोगो हेयहेतुः ॥

द्रष्टा च दृश्यं च द्रष्टृदृश्ये। तयोर्द्रष्टृदृश्ययोरिति। द्रष्टृदृश्यसंयोग इति तु वक्तव्ये पृथग्विभक्तिग्रहणं तयोर्भिन्नजातीयत्वख्यापनार्थम्। भोक्तृभोग्ययोः स्वस्वामिनोः प्रधानपुरुषयोरिति वा सूत्रयितुं शक्यत एव। तथापि द्रष्टृदृश्यग्रहणमनेन द्रष्टृदृश्यत्वेनैव संयोगो नान्यथेत्येवमर्थम् ॥

द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषो वक्ष्यमाणलक्षणः। प्रतिसंवेदितुं शीलमस्य स प्रतिसंवेदी। कस्य? बुद्धेरिति। दृश्या बुद्धिः अन्तःकरणं प्रत्ययरूपेण ॥

ननु च शब्दादयोऽपि विषया दृश्या एवेत्यत आह—सत्त्वोपारूढाः सर्वे धर्माः शब्दादयो बुद्धिसत्त्वमुपारूढा बुद्धिप्रत्ययाकारा एव दृश्या न स्वतः। स्वतश्च दृश्यत्वे ज्ञाताज्ञातविषयत्वं पुरुषस्य स्यात्। सदा ज्ञातविषयत्वं च पुरुषस्य न्यायेन स्थाप्यते। तस्माद्बुद्ध्युपारूढा एव सर्वे धर्मा दृश्याः ॥

[ भाष्यम् ]

तदेतद्दृश्यमयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन स्वं भवति पुरुषस्य दृशिरूपस्य स्वामिनः, अनुभवकर्मविषयतामापन्नं यतः। अन्यस्वरूपेण प्रतिलब्धात्मकं स्वतन्त्रमपि परार्थत्वात्परतन्त्रम्। तयोर्दृग्दर्शनशक्त्योः अनादिरर्थकृतः संयोगो हेयहेतुः, दुःखस्य

[ विवरणम् ]

**तदेतद्दृश्यमयस्कान्तमणिकल्पम्** अयसोऽपि क्रियार्थेनैवोपकर्ताऽयस्कान्तमणिर्यथा, तथा **पुरुषस्य** पुरुषार्थेन द्विविधेन भोगापवर्गलक्षणेनोपकर्तृत्वादयस्कान्तमणिरिव **स्वं दृशिरूपस्य** चितिस्वरूपमात्रस्य **स्वामिनः** ॥

कथं स्वमित्यत आह—**कर्मविषयत्वमापन्नं** कर्मैव विषयः कर्मविषयः, कर्मत्वापत्तिरेव। विषयो दृशिरूपस्य दृश्यतामापन्न इत्येतत्। कथम्भूतं सत्कर्मविषयतामापद्यत इति तद्विशेषणार्थमाह—**अन्यस्वरूपेण प्रतिलब्धात्मकमिति** ॥

अन्यस्वरूपेण स्वपरपुरुषरूपेण शब्दादिरूपेण च प्रतिलब्धात्मकं प्रतिलब्धविशेषरूपं प्रतिलब्धपुरुषशब्दादिविशेषस्वभावं पुरुषस्वरूपेण लब्धात्मकं सद्दृश्यत्वेन कर्मतामापन्नमपवर्गार्थेन स्वं भवति। शब्दाद्याकारेण लब्धात्मकं सद्दृश्यत्वेन कर्मतामापन्नं भोगार्थेन स्वं भवति ॥

ननु कथं स्वतन्त्रस्य स्वत्वम्। न हि किञ्चित् स्वतन्त्रं स्वयं व्याप्रियमाणमन्यदपेक्षते। यदपि स्वव्यापारानुनिष्पादिपुरुषार्थरूपं, तदपि स्वभावादेव। न पुरुषनियोगकारि। तस्मात् स्वतन्त्रस्य सतः स्वत्वं न युक्तमित्यत आह—**स्वतन्त्रमपि** पुरुषार्थद्वयकर्तृत्वेन **परार्थत्वात् परतन्त्रम्**। ततश्च स्वमेव ॥

**तयोर्दृग्दर्शनशक्त्योरिति**। द्रष्टृदृश्ययोरित्युपक्रम्य दृग्दर्शनशक्त्योरित्युपसंहारः, बुद्धिपुरुषसंयोगस्य बुद्ध्युत्पत्त्यनन्तरभावित्वादादिमत्त्वमाशङ्क्य तदनादिमत्त्वप्रदर्शनार्थं क्रियते। **दृग्दर्शनशक्त्योरनादिः संयोगः**। धर्मिणां नित्यत्वात् नित्यसम्बन्धोपपत्तेस्तच्छक्त्योरपि द्रष्टृदृश्यत्वलक्षणोऽनादिः संयोगोऽर्थकृतः पुरुषार्थप्रयोजनवश इत्यर्थः ॥

तथा च सत्यनादित्वेऽपि प्रयोजननिवृत्तौ संयोगनिवृत्तिरुपपद्यते। धर्मिणां तु स्वरूपसंयोगः सत्तामात्रेण न प्रयोजनकृत इति नित्य एव। धर्ममात्राभिस्त्वनित्याभिरनित्यः संयोगः। स तु बुद्धिपुरुषसंयोगो **हेयहेतुः दुःखस्य कारणम्** इत्यर्थः ॥

[ भाष्यम् ]

कारणमित्यर्थः । तथा चोक्तम्[1]—"तत्संयोगहेतुविवर्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः । कस्मात्? दुःखहेतोः परिहार्यस्य प्रतीकारदर्शनात् । तद्यथा—पादतलस्य भेद्यता, कण्टकस्य भेत्तृत्वं, परिहारः कण्टकस्य पदाऽनधिष्ठानं पादत्राणव्यवहितेन वाऽधिष्ठानम्, [2]एतद्‌द्वयं यो वेद लोके स तत्र प्रतीकारमारभमाणो भेदजं दुःखं नाऽऽप्नोति । कस्मात्? त्रित्वोपलब्धिसामर्थ्यात्" इति । अत्रापि तापकस्य रजसः सत्त्वमेव तप्यम् ।

[ विवरणम् ]

तथा चोक्तं तन्त्रे—तत्संयोगहेतुविवर्जनात् तयोर्बुद्धिपुरुषयोः संयोगस्तस्य हेतुरविद्या तद्विवर्जनात् । कथं विवर्जनम्? विद्यया सम्यग्दर्शनेन तत्प्रतिपक्षेण निवर्तनात् । तस्मात्तत्संयोगहेतुविवर्जनात् आत्यन्तिकोऽत्यन्ताय प्रभवति दुःखप्रतीकारः । कोऽसौ? यत्सम्यग्दर्शित्वम् ॥

कथमेतदिति, प्रसिद्धं दृष्टान्तमाह—तद्यथा—पादतलस्य भेद्यता सुकुमारतरत्वात् । कण्टकस्य भेत्तृत्वं कर्कशस्वभावत्वात् । तत्संयोगो विशिष्टो दुःखहेतुरित्यर्थसिद्धम् । तत्र कण्टकव्यथादुःखस्य परिहारः कण्टके पदा पादेन अनधिष्ठानम् अनाक्रमणम् । अथाधिष्ठानकारणं चेदस्ति पादत्राणव्यवहितेन वा पदाधिष्ठानम् । एतद्‌द्वयं यो वेद भेद्यभेत्तृद्वयं परिहारद्वयं वा यो वेद लोके स तत्रान्यतरं परिहारमारभते । स तत्र प्रतीकारमारभमाणो भेदजं कण्टकभेदजनितं दुःखं नाप्नोति ॥

तथेहापि पुरुषः सत्त्वद्वारेण कण्टकस्थानीयं प्रधानम्, तयोर्विशिष्टः संयोगोऽविद्यानिमित्तो दुःखकारणम्, दुःखपरिहारोऽप्ययम—गुणगौणेभ्यः प्रधानमात्रविशेषेभ्यो दृश्येभ्यो निरपेक्षता, सम्यग्दर्शनेन प्रयोजनाभावं बुद्ध्वा पुरुषस्याविक्रियत्वात् कण्टकाधिष्ठानवच्छरीरारम्भिणो वा कर्मणो नियतवेदनीयत्वादवश्यं फलदायित्वं बुद्ध्वा अप्रार्थितोपनतानां शब्दादीनां सम्यग्दर्शनव्यवहितेन सत्त्वेन भोगः । एवं परिहारं सञ्जानानः कण्टकभेददुःखपरिहारमिव संसारदुःखं नाप्नोति ॥

---

1. पञ्चशिखेन ।
2. 'एतत्त्रयं' इति पाठान्तरम् ।

[ भाष्यम् ]

कस्मात्? तपिक्रियायाः कर्मस्थत्वात् । सत्त्वे कर्मणि तपिक्रिया नापरिणामिनि निष्क्रिये क्षेत्रज्ञे । दर्शितविषयत्वात् । सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽप्यनुतप्यत इति ॥ १७ ॥

दृश्यस्वरूपमुच्यते—

[ विवरणम् ]

कस्मादेतदेवमिति? त्रित्वोपलब्धिसामर्थ्यात् । प्रधानपुरुषसंयोगत्रित्वोपलब्धिसामर्थ्यात् । एवं हि विज्ञानस्य सामर्थ्यं दृश्यते, पादतलकण्टकतत्संयोगेष्वज्ञानस्य च त्रित्वानुपलब्धेर्दुःखहेतुत्वं दृश्यत एव ॥

एतमर्थं प्रचिख्यापयिषन्नाह । अत्रापि तापकस्य रजसः । यद्यपि प्रधानं कण्टकस्थानीयं तापकं, तथापि रजसो दुःखात्मकत्वाद्रजोद्वारेणैव प्रधानस्य तापकत्वमित्युच्यते—तापकस्य रजस इति । तस्य रजसः कर्मभूतं सत्त्वमेव तप्यम् । कस्मात्? छिदिक्रियावत्तपिक्रियायाः कर्मस्थत्वात् । कर्मणि हि तपिक्रिया वर्तते, न रजसस्तापकस्य विषयिणि पुरुषे । तप्तेश्च फलस्य पुरुषविषयत्वात् ॥

न हि परशुश्छेत्तरि स्वात्मनि वा वर्तते छिदिर्वा फलं, विषय एव छेद्ये काष्ठादौ । एवं पुरुषस्यैव तप्तिः कर्मणि सत्त्वे वर्तमाना फलं, रजश्च काष्ठादाविव परशुः सत्त्व एव पुरुषस्य दृश्ये वर्तते ॥

इतश्च पुरुषे तपिक्रिया न वर्तते । अपरिणामित्वात् द्रष्टुः । तपिरपि हि कर्मविक्रिया । यथा छेदनस्य फलं छेद्यस्य कर्मणो द्वैधीभावो विक्रिया, तद्वत् । नापरिणामिनि निष्क्रिये क्षेत्रज्ञे । अपरिणामित्वं च सदा ज्ञातविषयत्वेन साधयिष्यति ॥

यद्येवं पुरुषश्चेन्न तप्यते पुरुषार्थं प्रधानं प्रवर्तत इत्येतदनुपपन्नम् । वृत्तिसारूप्येणोक्तोत्तरत्वात् । तदेवेदमुच्यते—दर्शितविषयत्वात् । अपरिणामिनोऽविक्रियत्वाद्दर्शितविषयत्वम् । तस्माद्दृशिकर्मणि सत्त्वे तप्ये तदाकारानुरोधी तदाकारानुवर्ती । तदाकारानुरोधित्वं तद्दृशिसन्निधौ बौद्धस्य प्रत्ययस्य दृशिरूपावभासता । यथा लाक्षारससन्निधौ स्फटिकस्य लाक्षाकारावभासता, तथा पुरुषोऽपि तप्यत इत्युपचर्यते ॥ १७ ॥

[ सूत्रम् ]

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम् ॥ १८ ॥

[ भाष्यम् ]

प्रकाशशीलं सत्वम्, क्रियाशीलं रजः, स्थितिशीलं तम इति।

[ विवरणम् ]

दृश्यस्वरूपमुच्यते। ननु च द्रष्टृदृश्ययोरित्युक्तं पूर्वसूत्रे। तत्र क्रमप्राप्तसन्निधानं द्रष्टृस्वरूपमेव पूर्वं वक्तव्यम्। नैष दोषः। दृश्यस्वरूपावगमपूर्वकत्वाद्द्रष्टृस्वरूपावबोधस्य। दृश्यस्य हि स्वात्मव्यतिरिक्तद्रष्ट्रर्थत्वाद्व्यतिरिक्तद्रष्टृसद्भावसिद्धिः। अत एव प्राधान्यात् पूर्वसूत्रे द्रष्टुः पूर्वनिपातः कृतः। तल्लक्षणे त्वर्थक्रमो विवक्ष्यते॥

प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्। प्रकाशश्च क्रिया च स्थितिश्च प्रकाशक्रियास्थितयः। प्रकाशस्याभ्यर्हितत्वात् पूर्वनिपातः। बहुषु चानियमात् स्थितिक्रियाशब्दयोरनियम इति क्रियाशब्दस्य पूर्वनिपातः। ता एव शीलं यस्य तत्प्रकाशक्रियास्थितिशीलम्। प्रकाशनं प्रकाशः, स शीलं यस्य तत् प्रकाशशीलं सत्त्वम्। ननु च यदा प्रकाशनं क्रिया, कथं तच्छीलं सत्त्वं स्यात्? रजो हि तच्छीलं, स्थितिशीलं वा तमः कथमिति॥

ननु च स्वरूपमेव तत्प्रकाशनं स्थितिश्च। न। स्वरूपमात्रे शीलशब्दायोगात्। न हि मृदङ्गशीलो मार्दङ्गिकः। मृदङ्गवादनशीलो हि स उच्यते। न हि व्यापारशून्ये क्वचिदपि शीलशब्दः प्रयुज्यते॥

ननु च स्थितिप्रकाशावपि सत्त्वतमसोः स्वरूपम्। तदेतेनैव गम्यते स्वरूपे शीलशब्दः प्रसंक्ष्यत इति। उच्यते—न स्वरूपे सर्वत्र शीलशब्दप्रयोगः। इहापि रजसि दुःखस्वरूपे क्रियाशीलमिति क्रियया सम्प्रयुज्य शीलशब्दव्यपदेशः। स्थितिप्रकाशावपि व्यापाररूपावभिप्रेतौ॥

अथ मतं—क्रियापि रजसः स्वरूपमेवेति—न—प्रधानावस्थायां साम्याभ्युपगमात् गुणानाम्। यदि क्रिया रजसः स्वरूपमभविष्यत् प्रधानस्यापि क्रियावत्त्वं गुणसाम्यावस्थायामभविष्यत्। कार्यावस्थायां हि क्रियावत्त्वमभ्युपगम्यते, न प्रधानवेलायाम्। तस्मान्न स्वरूपाभिप्रायेण शीलशब्दप्रयोगः॥

[ भाष्यम् ]

**एते गुणाः परस्परोपरक्तप्रविभागाः परिणामिनः संयोगवियोगधर्माण इतरेतरोपाश्रयेणोपार्जितमूर्तयः [1]परस्पराङ्गाङ्गित्वेऽप्यसम्भिन्नशक्तिप्रविभागाः**

[ विवरणम् ]

तत्राक्रियाशीलयोरपि सत्त्वतमसोर्नित्यं क्रियाशीलेन रजसा संयोगाद्रजः-क्रिययैव क्रियावत्त्वं स्थितिप्रकाशयोरपीति तत्क्रियोपचारेण **प्रकाशशीलं सत्त्वं स्थितिशीलं तम** इति व्यपदिश्यते । स्थितिप्रकाशयोरात्मलाभस्य रजःक्रियापूर्वत्वाच्चलतोरेवाभिव्यक्तेस्ताच्छील्यं सत्त्वतमसोरुच्यते ॥

तत्र **प्रकाशशीलं** यत्तत्सत्त्वम् । **क्रियाशीलं** प्रवृत्तिशीलं **रजः** । **स्थितिशीलं** वरणशीलं नियमशीलं **तम** इत्येते **गुणाः परस्परोपरक्तप्रविभागाः** परस्परेणोप-रक्तः प्रविभागो भेदो येषां गुणानां ते **परस्परोपरक्तप्रविभागाः** ॥

यथा प्रकाशशीलमिति सत्त्वमुच्यतेऽत्रैव । रजःक्रियोपरञ्जनात् सर्वा-वभाससमर्थस्यापि सत्त्वस्य नियतप्रकाशत्वं तमउपरक्तत्वेन । तथा रजसोऽपि प्रवृत्त्यभिव्यक्तिः सत्त्वोपरागेण । नियतप्रवृत्तित्वं तु तमउपरागेण । तथा तमसोऽपि स्थित्यभिव्यक्तिः सत्त्वोपरागेण । स्थितिशीलत्वं रजउपरागेण । स्थितिस्तु स्वत एव । रजसोऽपि प्रवृत्तिः स्वतः । सत्त्वस्यापि प्रकाशः स्वत एव । इत्थमेवान्येष्वपि कार्येषु सत्वादीनामितरेतरोपरागो द्रष्टव्यः ॥

**संयोगवियोगधर्माणः** । संयोगश्च वियोगश्च संयोगवियोगौ, तौ धर्मौ येषां ते संयोगवियोगधर्माणः । कस्मिंश्चित् कार्य आरभ्यमाणे गुणप्रधानभावेनान्योन्यं संयुज्यन्ते । तथैवारब्धकार्यविरोधिधर्मान्तरोदये परस्परं वियुज्यन्ते ॥

**इतरेतरोपाश्रयेणोपार्जितमूर्तयः**—महदादिस्तम्बपर्यन्ता मूर्तय इतरेत-रोपाश्रयेणोपार्जिता धर्मधर्मिलक्षणा यैस्ते इतरेतरोपाश्रयेणोपार्जितमूर्तयः ॥

परस्परतो भिन्ना अपि—परमार्थतोऽन्योन्यतोऽन्येऽपि । **असम्भिन्न-शक्तिप्रविभागाः**—अत्यन्तं व्यावृत्तकार्यारम्भाभिमुख्यसामर्थ्यप्रभेदाः ॥

---

1. 'परस्परतो भिन्ना अपी'ति विवरणाभिमतो भाष्यपाठः ।

[ भाष्यम् ]

तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिनः प्रधानवेलायामुपदर्शितसन्निधाना गुणत्वेऽपि च व्यापारमात्रेण [1]प्रधानान्तर्णीतानुमितास्तिताः पुरुषार्थकर्तव्यतया प्रयुक्तसामर्थ्याः सन्निधिमात्रोपकारिणोऽयस्कान्तमणिकल्पाः प्रत्ययमन्तरेणैकतमस्य वृत्तिमनु वर्तमानाः प्रधानशब्दवाच्या भवन्ति ।

[ विवरणम् ]

एतदुक्तं भवति—एकस्मिन् कार्ये आरब्धव्येऽत्यन्तव्यतिषक्तपरस्परशक्तयः कार्यारम्भकाले [2]पृथक्त्वेनानुपलक्ष्यमाणशक्तिप्रविभागा इति ॥

**तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिनः** । सात्त्विकानां सत्त्वं तुल्यजातिः, राजसानां रजस्तुल्यजातिः, तामसानां तम इति च । परस्परापेक्षया तु भिन्नजातीयत्वम् । तुल्यजातीयातुल्यजातीयानां शक्तिप्रभेदमनुपतितुं शीलं येषां ते **तुल्यजातीयातुल्यजातीयशक्तिप्रभेदानुपातिनः** । न हि सात्त्विके वा राजसे तामसे वा प्रारब्धव्यस्य त्रयाणां शक्तिप्रभेदानुपातमन्तरेण कार्यारम्भः सम्भवति ॥

यद्येवं सर्वशक्तिप्रभेदानुपातित्वादेकैकस्य कार्यारम्भे तुल्यं प्राधान्यमित्यत आह—**प्रधानवेलायामुपदर्शितसन्निधानाः** सर्वे । एकैकस्मिन् प्राधान्येन स्वकार्यारम्भिणि तत्काल इतरयोरपि सन्निधानमुपसर्जनभावेनोपदर्शितमिति **प्रधानवेलायामुपदर्शितसन्निधानाः** । न हि सर्वेषां युगपत् प्राधान्यम् । समप्रधानत्वे हि प्रधानमेव भवेयुः, न कार्यारम्भित्वम् ॥

अथोच्यते—कथं पुनरेकस्मिन् प्राधान्येन कार्यारम्भिणीतरास्तित्वमवगम्यत इति । तदुच्यते—**गुणत्वे** चोपसर्जनभावे **च व्यपारमात्रेण** प्रधान उपलक्ष्यमाणेन व्यापारमात्रेण । **प्रधानान्तर्नीतेन** न हि प्रधानस्यान्तर्नीतो व्यापारः इतरयोरुपसर्जनभावेनासन्निधाने संभविष्यतीति प्रधानव्यापारेणा**नुमितास्तित्वाः** ॥

---

1. 'प्रधानान्तर्नीतेनानुमितास्तित्वाः' इति विवरणाभिमतो भाष्यपाठः ।

2. अत्र आदर्शकोशे 'पृथक्त्वेनानुप' इत्येतदुपरि 'च तत्सारूप्यमादर्शितं' इत्यादिः अत्र (192) पुटे मुद्रितो ग्रन्थः उपलभ्यते । तस्यानन्वयात् आदर्शकोशे (55) पुटानन्तरं लिखितः 'लक्ष्यमाण' इत्यादिग्रन्थो योजितः ॥

[ भाष्यम् ]

एतद्दृश्यमित्युच्यते ।

तदेतद्भूतेन्द्रियात्मकं भूतभावेन पृथिव्यादिना सूक्ष्मस्थूलेन परिणमते । तथेन्द्रियभावेन श्रोत्रादिना सूक्ष्मस्थूलेन परिणमत इति ।

तत्तु नाप्रयोजनम्, अपि तु प्रयोजनमुररीकृत्य प्रवर्तत इति, भोगापवर्गार्थं हि तद्दृश्यं पुरुषस्येति । तत्रेष्टानिष्टगुणस्वरूपावधारणमविभागापन्नं भोगः ।

[ विवरणम् ]

पुरुषार्थेतिकर्तव्यताप्रयुक्तसामर्थ्याः पुरुषार्थो भोगापवर्गौ तस्येतिकर्तव्यता यथा यथा अर्थनिष्पत्तिस्तथा तथा प्रयुक्तं कार्यारम्भं प्रति सामर्थ्यं येषां ते पुरुषार्थेतिकर्तव्यताप्रयुक्तसामर्थ्याः ॥

सन्निधिमात्रोपकारिणः विकारप्रत्ययरूपसन्निधिमात्रेण पुरुषस्योपकुर्वन्तीति सन्निधिमात्रोपकारिणः । अयस्कान्तमणिकल्पाः ॥

प्रत्ययं वृत्तिं ज्ञानमन्तरेण एकतमस्य वृत्तिं स्थितिलक्षणां समतामनुवर्तमानाः । प्रधानशब्दवाच्या भवन्ति । नैव त्रिगुणीव्यतिरेकेणान्यत्प्रधानं नामास्ति । त एव गुणाः साम्यावस्थाः प्रधानैकशब्दाभिधानीयकं प्रतिपद्यन्ते । वैषम्यं भजन्तो विकारशब्दाभिधेया वृत्तिमन्तो भवन्ति ॥

एतद्दृश्यमित्युच्यते । तदेतद्दृश्यं भूतेन्द्रियात्मकं भूतात्मकमिन्द्रियात्मकं च । कथं तदात्मकत्वमित्याह—भूतभावेन पृथिव्यादिना सूक्ष्मस्थूलेन सूक्ष्मेण तन्मात्ररूपेण स्थूलेन विशेषरूपेण । द्विविधो हि भूतभावस्तन्मात्ररूपो विशेषरूपश्च । विपरिणमते स्थूलसूक्ष्मभावमापद्यते । इन्द्रियभावेनेन्द्रियरूपेण श्रोत्रादिना सूक्ष्मस्थूलेन विपरिणमते । सूक्ष्मेणाहङ्काररूपेण स्थूलेन श्रोत्रादिरूपेण ॥

तत्तु दृश्यं नाप्रयोजनम् । सर्वत्रैव प्रवृत्तेः प्रयोजनदर्शनात् । अपि तु प्रयोजनमुरीकृत्य अङ्गीकृत्य प्रवर्तते । किं पुनर्दृश्यप्रवृत्तिप्रयोजनमित्याह—भोगापवर्गार्थं हि दृश्यं पुरुषस्य अग्न्यादिप्रतिपत्तिवत् ॥

[ भाष्यम् ]

भोक्तुः स्वरूपावधारणमपवर्ग इति । द्वयोरतिरिक्तं अन्यद्दर्शनं नास्ति । तथा चोक्तम्[1]—"अयं तु खलु त्रिषु गुणेषु कर्तृष्वकर्तरि च पुरुषे तुल्यातुल्यजातीये चतुर्थे तत्क्रियासाक्षिण्युपनीयमानान् सर्वभावानुपपन्नाननुपश्यन्न दर्शनमन्यच्छङ्कते" इति ।

तावेतौ भोगापवर्गौ बुद्धिकृतौ बुद्धावेव वर्तमानौ कथं पुरुषे व्यपदिश्येते इति ।

[ विवरणम् ]

कौ पुनस्तौ भोगापवर्गावित्याह—तत्रेष्टानिष्टगुणस्वरूपावधारणमविभागापन्नम् इष्टानां अगरुचन्दनस्पर्शनादिलक्षणानां अनिष्टानां प्रतिकूलात्मकानां कृपाणकण्टकादिस्पर्शनरूपाणां गुणानां स्वरूपावधारणं स्वरूपावगमः स्वरूपाध्यवसानम् । तस्य विशेषणं अविभागापन्नं पुरुषप्रत्यये 'नायं पुरुष इदं सत्त्वम्' इत्यविभागतां गतम् । प्राप्तचैतन्योपग्रहरूपत्वाद्बौद्धस्य प्रत्ययस्य । स इत्थंभूतः पुरुषस्य भोग इत्याख्यायते ॥

तस्माद्भोगस्वरूपाद्बौद्धात् प्रत्ययाद्विविच्य तत्साक्षिणो दृशिरूपस्य स्वरूपावधारणं भोक्तृस्वरूपादवधार्यमाणादुत्तरकालमप्यप्रवृत्तस्य विशेषाभावादपवर्ग इत्युच्यते । सर्वदा स्वरूपप्रतिष्ठो हि (तदा) स इति । वृत्तिसारूप्यमितरत्र विशेष इति ॥

द्वयोर्भोगापवर्गयोरतिरिक्तमन्यत्तृतीयं दर्शनं नास्ति । यावदविद्या तावदिष्टानिष्टे स्त इति भोग एव । पुरुषस्य त्वहेयानुपादेयस्वरूपत्वात् तदवधारणे कुतो भोग इति भोगरूपस्याविद्यालक्षणस्य प्रत्ययस्य प्रतिपक्षः प्रत्ययः पुरुषावधारणम् । यस्मादेतदत एतद्दर्शनद्वयव्यतिरेकेण तृतीयं दर्शनान्तरं न कल्पयितुं शक्यते ॥

तथा चोक्तम्—अयं तु खल्वेवं सम्यग्दर्शी त्रिषु गुणेषूक्तलक्षणेषु कर्तृषु सर्वव्यापारनिर्वृत्तिकरेष्वकर्तरि च गुणधर्मविलक्षणे पुरुषे चतुर्थे तत्क्रियासाक्षिणि गुणक्रियासूपद्रष्टरि सन्धिक्रियासाक्षिभूतोपद्रष्टृत्वदुपानीयमानान् अन्तःकरणलक्षणैर्गुणैः प्राप्यमाणान् दर्शितविषयत्वात् सर्वभावान्

1. पञ्चशिखेन.

[ भाष्यम् ]

यथा विजयः पराजयो वा योद्धृषु वर्तमानः स्वामिनि व्यपदिश्यते, स हि तत्फलस्य भोक्तेति, एवं बन्धमोक्षौ बुद्धावेव वर्तमानौ पुरुषे व्यपदिश्येते, स हि तत्फलस्य भोक्तेति। बुद्धेरेव पुरुषार्थापरिसमाप्तिर्बन्धस्तदर्थावसायो मोक्ष इति। एतेन [1]ग्रहणधारणोहापोहतत्त्वज्ञानाभिनिवेशा बुद्धौ वर्तमानाः पुरुषेऽध्यारोपितसद्भावाः, स हि तत्फलस्य भोक्तेति ॥ १८ ॥

[ विवरणम् ]

उपपन्नान् गौणानेव बौद्धप्रत्ययाकारेण परिनिष्पन्नान् पश्यन् उपलभमानो नाहं न ममेत्येवं न दर्शनमितोऽन्यत् सम्भवति सम्यग्दर्शनमिति न शङ्कते। नास्त्येवान्यत् सम्यग्दर्शनमिति मन्यते ॥

तावेतौ भोगापवर्गौ बुद्धिकृतौ बुद्धिनिर्वर्तितौ बुद्धावेव वर्तमानौ। अन्यकृतस्याप्यन्यत्र वृत्तिर्दृष्टा यथा रजककृतो वस्त्रराग इति कथं पुरुषेऽपदिश्येते? इति तौ बुद्धावेव वर्तमानौ पुरुषेऽपदिश्येते इति कुत एतत्? स हि तत्तत्फलस्य भोक्तेति सम्यङ्मिथ्याप्रत्यययोरुपलब्धेति ॥

दृष्टान्तेन व्याख्यातमर्थं निगमयति—यथा विजयः पराजयो वेति। बुद्धेरेवार्थापरिसमाप्तिर्बन्ध इति। यावत् समाप्तौ कर्तव्यौ भोगाऽपवर्गाविति बुद्धिर्मन्यते तावद्बन्धः। तदर्थावसायो मोक्षः। तस्या एव बुद्धेरर्थावसायः कर्तव्यसमाप्तिः। यदा आत्मविलक्षणं बन्धमोक्षासम्बन्धिनं पुरुषमीक्षते नास्य कर्तव्यमस्तीति, स कर्तव्यावसायो बुद्धेर्मोक्ष इति ॥

एतेन ग्रहणधारणविज्ञानोहापोहक्रियावचनयथान्यायावधारणाभिनिवेशाः पुरुषेऽध्यारोपितसद्भावा इति ज्ञेयाः। प्रत्ययत्वाविशेषात् बुद्धिधर्माः बुद्धावेव वर्तमानाः बुद्धिकृताः पुरुषेऽध्यारोपितसद्भावाः पुरुषो गृह्णाति पुरुषो धारयतीत्येवमेव पुरुषे अध्यारोप्यन्ते ॥

---

1. 'ग्रहणधारणविज्ञानोहापोहक्रियावचनयथान्यायावधारणाभिनिवेशाः' इति विवरणाभिमतो भाष्यपाठः।

[ भाष्यम् ]

दृश्यानां गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते—

[ सूत्रम् ]

विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥

[ भाष्यम् ]

तत्र आकाशवाय्वग्न्युदकभूमयो भूतानि शब्दस्पर्शरूपरसगन्धतन्मात्राणामविशेषाणां विशेषाः । तथा श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि बुद्धीन्द्रियाणि, वाक्पाणिपादपायूपस्थाः कर्मेन्द्रियाणि, एकादशं मनः सर्वार्थम्, इत्येतान्यस्मितालक्षणस्याविशेषस्य विशेषाः ।

[ विवरणम् ]

ग्रहणं शब्दादीनां श्रोत्रादिभिरुपादानम । गृहीतानामविस्मरणं धारणम् । धारितस्य सामान्यविशेषावधारणं विज्ञानम् । विज्ञातस्यैव पुनस्तद्गतविशेषावबुभुत्सयोहनमूहः । ऊहितस्य विरुद्धानां धर्माणां व्युदसनमपोहः । विषयेषु प्रवृत्तिः क्रिया । वाक्यविषयो वृत्तिविशेषश्चितस्य वचनम् । यो यो न्यायो यथान्यायं यस्य च वस्तुनो यथैवोपपत्तिस्तथैवावधारणं यथान्यायावधारणम् । तत्र पुनः पुनः सम्यक्प्रत्ययाविचलनाय यश्चित्तस्याभियोगः सोऽभिनिवेशः । त एते ग्रहणादयः पुरुषेऽध्यारोपितसद्भावाः । स हि तत्फलस्य भोक्तेति ग्रहणादिफलस्योपलब्धेति ॥ १८ ॥

दृश्यानां गुणानां यथाव्याख्यातात्मनां स्वरूपभेदावधारणार्थं तत्तावस्थाभेदावधारणार्थमिदं सूत्रमारभ्यते—विशेषाविशेषलिङ्गमात्रालिङ्गा गुणपर्वाणः । विशेषाश्चाविशेषाश्च लिङ्गमात्रं चालिङ्गश्च, न लिङ्गति, कुतश्चिन्नागच्छति प्रधानाख्योऽर्थ इति पचाद्यच् सर्वधातुभ्य इति यौगिकत्वसन्नभिधेयलिङ्गं भजते । यो हि चिह्नपर्यायो लिङ्गशब्दः स नपुंसकलिङ्गः । स च करणसाधन इति । अथ वा लिङ्गं न विद्यते, लिङ्गमवगमनं परिच्छेदः प्रत्यक्षेण प्रधानाख्यस्यार्थस्यासावलिङ्ग इति बहुव्रीहिः ॥

ते च विशेषादयः पुरुषाभिप्रायं पालयन्ति भोगापवर्गप्रदानेन, पूरयन्ति वा विकारान् स्वानिति पिपर्तेः 'अन्येभ्योऽपि दृश्यन्ते' इति कर्तरि वनिप्रत्ययः । तथा च सति यन्नान्तमकर्तरि तन्नपुंसकम् । यत्तु नान्तं कर्तरि तत्सर्वलिङ्गं

भवति । यथा मेरुदृश्वा मेरुदृश्वनीति । ततश्च विशेषादयः पर्वाणः । केषां ते सम्बन्धिन इति ? गुणानां पर्वाणो गुणपर्वाणः । केषांचिदयमेव पाठो—**विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणीति** ॥

**तत्राकाशवाय्वग्निजलभूमयो भूतानि** । शब्दतन्मात्रारब्धमाकाशम् । स्पर्शतन्मात्रेण शब्दस्पर्शलक्षणेनारब्धो वायुः । रूपतन्मात्रेण शब्दस्पर्शरूपलक्षणेनारब्धोऽग्निः । रसतन्मात्रेण शब्दस्पर्शरूपरसचतुष्टयलक्षणेनाऽऽप आरब्धाः । गन्धतन्मात्रेण शब्दस्पर्शरूपरसगन्धपञ्चतयलक्षणेन भूमिरारब्धा ॥

ननु च नित्यमाकाशम्, प्रागुत्पत्तेर्विनाशकालं च विशेषाभावात् । यो य उत्पत्तिमांस्तस्य तस्य पृथिव्यादेः प्रागुत्पत्तेर्विनाशोत्तरकालं च विशेषो दृष्टः । तथा आकाशं यद्युत्पत्तिमत् स्यात् प्रागुत्पत्तेर्विनाशोत्तरकालं च भवेद्विशेषः । न च सोऽस्ति । तस्मादाकाशमनुत्पत्तिकम् ॥

अथावकाशदानाभावो विशेष इति चेन्न, मूर्तिमतोऽन्यस्याभावात्तुल्यं नित्यत्वेऽपि । अनित्यलक्षणाभावाच्च नित्यमाकाशम्, सर्वगतत्वादात्मादिवत् ॥

न—आगमविरोधात् । [1]"तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः' इत्यागमविरोधः । स्मृतिविरोधश्च । अवकाशं कुर्वति तदुपचार इति चेन्न, वाय्वादिष्वप्युपचारप्रसङ्गात् । आकाशाद्वायुः सम्भूत इत्येकवाक्यत्वात् ॥

प्रागुत्पत्तेर्विशेषाभावादनित्यो न भवतीति च ब्रुवता विशेषाभावान्नित्यत्वमित्युक्तं भवति । विशेषभावाच्चानित्यत्वमित्युक्तं भवति । तथा च सत्यात्मादीनामपि बन्धमोक्षोपलब्ध्यनुपलब्ध्यादिविशेषाभावात् सतो वैशेषिकस्य अनित्यत्वप्रसङ्गः । तथा, परमाण्वादीनां चानित्यत्वं प्रसज्येत ॥

अथाप्युत्पत्तिमत एव प्रागूर्ध्वं च विशेषभावाभावौ विवक्षिताविति चेत्—न—आकाशस्योत्पत्त्यभ्युपगमप्रसङ्गात् । अथाकाशोत्पत्त्यादिना विशेषो वक्तुं न शक्यत इति चेत्—न—पुरुषार्थसाधनासाधनत्वविशेषात् । सर्वगतत्वादिति चासिद्धो हेतुः ॥

---

1. तै उप 2. 1.

असर्वगतानि कालदिगाकाशमनांस्यनित्यानि च, स्वार्थाभावे परार्थत्वात्, घटादिवत्। उत्पत्तिमन्ति च, प्रधानपुरुषाभ्यामन्यत्वात्, घटादिवत्। एवमाकाशं [उत्पत्तिमदनित्यं च] बाह्येन्द्रियविषयगुणत्वात्, घटादिवत्। भूतत्वाच्च, पृथिवीवत्। अनित्यद्रव्यसंयोगोत्पाद्यगुणत्वात्, पृथिव्यादिवत्। चिकित्सानिवर्त्यप्रकोपकरत्वात्, वायुवत्। नभसश्च प्रकोपश्चिकित्सानिवर्तनीयश्चिकित्सकप्रसिद्धिमुपारूढः। एतेनानित्यसाधर्म्यं व्याख्यातम्॥

एतानि च भूतानि **शब्दस्पर्शरूपरसगन्धतन्मात्राणामविशेषाणां विशेषाः।** शान्तघोरमूढाद्यनेकविशेषवत्त्वाद्विशेषाः। शान्ताद्यभावाच्चाविशेषाः तन्मात्राणि॥

**तथा श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि,** शब्दादिविषयबुद्ध्यर्थत्वाद्बुद्धी**न्द्रियाणि** स्वविषयबुद्धिभिरेवानुमितानि। **वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि** वचनादिक्रियानिर्वर्तकानि तदनुमितान्येव। न वागादीनि कर्मेन्द्रियाणि सिद्धानीति चेन्न, श्रुतिप्रसिद्धत्वात्। इन्द्रियाणि प्रकृत्य **'सर्वेषां[1] वेदानां वागेकायनम्'** इत्यादिश्रुतेः॥

स्मृतिषु च सर्वत्रैव विधिप्रतिषेधविषयप्रवृत्तिनिवृत्तिमत्त्वाच्च श्रोत्रादिवदिन्द्रियत्वम्। **'न वाक्चपलो न पाणिपादचपलः'** इत्यादेर्विधिप्रतिषेधविषयप्रवृत्तिनिवृत्तिमत्त्वसिद्धिः॥

तथा, वागादीनीन्द्रियाणि, कौशलवत्त्वात्, चक्षुरादिवत्। सर्वगात्रेषु चेन्द्रियशक्तिः करणवृत्त्याः सन्दर्शनादिष्यत एव। वाग्गुदप्रभृतीनां सर्पादीनां मूकषण्डानां च मुखमेवोपस्थेन्द्रियम्। **एकादशं मनः सर्वार्थम**तीतानागतवर्तमानविषयार्थं बुद्धीन्द्रियकर्मेन्द्रियविषयार्थं च॥

**एतान्येकादशेन्द्रियाण्यस्मितालक्षणस्य** अस्मिभावोऽस्मिता अस्मीति प्रत्ययः, स च लक्षणं यस्य सोऽस्मितालक्षणोऽस्मिताप्रत्ययेन हि लक्ष्यते लिङ्ग्यते षष्ठमविशेषाख्यं तत्त्वमहङ्कारः। तस्या**विशेषस्य विशेषा एतानि॥**

**गुणानामविशेषाकारसंस्थितानां** सत्त्वादीनामेष **षोडशको विशेषपरिणामः** सत्त्वबहुलमाकाशं, रजोबहुलो वायुः, सत्त्वरजोबहुलोऽग्निः, [जलं च]। सत्त्वतमोबहुला पृथिवी, प्राधान्यात्। तामसत्वेऽप्येषां गुणप्रधानकृतो विशेषः।

---

1. बृ. उप. 2. 4. 11.

[ भाष्यम् ]

गुणानामेष षोडशको विशेषपरिणामः ॥

षडविशेषाः । तद्यथा—शब्दतन्मात्रं स्पर्शतन्मात्रं रूपतन्मात्रं रसतन्मात्रं गन्धतन्मात्रं चेति एकद्वित्रिचतुःपञ्चलक्षणाः शब्दादयः पञ्चाविशेषाः । षष्ठश्चाविशेषोऽस्मितामात्र इति ॥

एते सत्तामात्रस्यात्मनो महतः षडविशेषपरिणामाः, यत्तत्परमविशेषेभ्यो लिङ्गमात्रं महत्तत्त्वं, तस्मिन्नेते सत्तामात्रे महत्यात्मन्यवस्थाय विवृद्धिकाष्ठामनुभवन्ति ॥

प्रतिसंसृज्यमानाश्च तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय यत्तन्निस्सत्तासत्तं निस्सदसन्निरसदव्यक्तमलिङ्गं प्रधानं, तत्प्रति यान्ति ।

[ विवरणम् ]

करणानि प्रकाशत्वात् सत्त्वबहुलानि, मनःषष्ठानि तु बुद्धीन्द्रियाणि प्रकाशप्राधान्यात् सत्त्वबहुलानि । कर्मेन्द्रियाणि क्रियाप्राधान्याद्रजोबहुलानि ॥

षडविशेषाः । तद्यथा शब्दमात्रं स्पर्शमात्रमिति द्विलक्षणस्यापि प्रधानेन व्यपदेशः । तथा रूपमात्रमिति त्रिलक्षणस्यापि प्रधानेन व्यपदेशः । तयोत्तरयोरपि मात्रशब्दः शान्तघोरादिविशेषव्यावर्तनार्थः । एकद्वित्रिचतुःपञ्चलक्षणभेदाः शब्दतत्त्वैकलक्षणः शब्दतन्मात्रभेदः । शब्दस्पर्शलक्षणः स्पर्शतन्मात्रभेदः, इत्येवमेकैकाधिक्येनोत्तरत्रापि द्रष्टव्यम् । षष्ठश्चाविशेषोऽस्मितामात्रः। शब्दादितन्मात्रापेक्षया षष्ठ इन्द्रियाणामेकादशानामविशेषः ॥

एते सत्त्वमात्रस्यास्तित्वमात्रस्य लिङ्गमात्रस्य मूर्तिमात्रस्य, प्रधानस्यामूर्तस्य प्रथमा मूर्तिरियं यथा बीजस्याङ्कुरीभावः । आत्मनो वस्तुरूपस्य महतः सर्वविशेषाविशेषेभ्यो महत्त्वात् षडविशेषपरिणामाः षडविशेषा एव परिणामाः सत्त्वादीनां महद्रूपावस्थितानाममी अविशेषपरिणामाः ॥

यत्तत्परं सूक्ष्ममविशेषेभ्यो लिङ्गमात्रं महत्तत्त्वम्, तस्मिन्नेते सत्तामात्रे महत्त्वान्महत्यवस्थाय कारणस्वरूपे महत्यवस्थाय विवृद्धिकाष्ठां पृथिव्यादिविशेषान्ततामनुभवन्ति ॥

[ भाष्यम् ]

एष तेषां लिङ्गमात्रः परिणामो निस्सत्तासत्तं चालिङ्गपरिणाम इति ॥

अलिङ्गावस्थायां न पुरुषार्थो हेतुः, नालिङ्गावस्थायामादौ पुरुषार्थता कारणं भवतीति। न तस्याः पुरुषार्थता कारणं भवतीति। नासौ पुरुषार्थकृतेति नित्या आख्यायते ॥

त्रयाणां त्ववस्थाविशेषाणामादौ पुरुषार्थता कारणं भवति। स चार्थो हेतुर्निमित्तं कारणं भवतीत्यनित्या आख्यायते ॥

गुणास्तु सर्वधर्मानुपातिनो न प्रत्यस्तमयन्ते नोपजायन्ते। व्यक्तिभिरेवातीतानागतव्ययागमवतीभिर्गुणान्वयिनीभिरुपजननापायधर्मका इव प्रत्यवभासन्ते। यथा देवदत्तो दरिद्राति। कस्मात्? यतोऽस्य म्रियन्ते गाव इति। गवामेव मरणात्तस्य दरिद्राणं न स्वरूपहानादिति समः समाधिः ॥

[ विवरणम् ]

प्रतिसंसृज्यमानाश्च प्रतिलीयमानाश्चाविशेषाः तस्मिन्नेव सत्तामात्रे लिङ्गमात्रे महत्यात्मन्यवस्थायाव्यक्तं प्रति यान्ति। किंविशिष्टम्? निस्सत्तासत्तं विशेषाविशेषधर्मरहितम्। निस्सदसदिति अव्यक्तादीषद्विकृतमिति सत्, अविशेषेभ्यः सूक्ष्मतरमिति चासत्, सच्चासच्च सदसदिति महत्तत्त्वमुच्यते। तद्धर्मरहितमव्यक्तं निस्सदसदिति ॥

एष तेषां गुणानां सत्त्वादीनां लिङ्गमात्रः परिणामः यस्मिन्नवस्थाय विवृद्धिकाष्ठां प्रतिलयं च प्रतियान्त्यविशेषाः। निस्सत्तासत्तं चाव्यक्तं च यत् स तेषामेव गुणानामलिङ्गपरिणामः। परश्च न सूक्ष्मोऽवस्थान्तरपरिणामोऽस्ति गुणानाम्। '[1]सूक्ष्मविषयत्वं चालिङ्गपर्यवसानम्' इति हि व्याख्यातम् ॥

अलिङ्गत्वादेवालिङ्गावस्थायां न पुरुषार्थो हेतुः। अलिङ्गावस्थानिमित्तं न पुरुषार्थो हेतुः। नालिङ्गावस्था पुरुषार्थप्रयुक्तेत्यर्थः। तदेतत् व्याचष्टे—नालिङ्गावस्थायामादौ पुरुषार्थता कारणम्। कस्मात् पुनस्तदवस्था पुरुषार्थप्रयुक्ता न भवतीति? तत आह—यस्मान्नास्यां पुरुषार्थता कारणं विद्यते। स्वयमपि नासौ पुरुषार्थता महदादिवदसंवेद्यत्वादीश्वराणामपि ॥

1. यो. सू. पा. 1. सू. 45.

[ भाष्यम् ]

लिङ्गमात्रमलिङ्गस्य प्रत्यासन्नं, तत्र तत्संसृष्टं विविच्यते क्रमानतिवृत्तेः ।

[ विवरणम् ]

यतश्चैतदेवं तस्मान्नित्या व्याख्यायते । यो हि पुरुषार्थप्रयुक्तः सोऽनित्यो दृष्टो यथा पृथिव्यादिः । न चैषा प्रधानावस्था पुरुषार्थप्रयुक्तेति नित्या व्याख्यायते ॥

त्रयाणां त्ववस्थाविशेषाणां विशेषाविशेषलिङ्गमात्राणामादौ पुरुषार्थता महदाद्यवस्था पुरुषार्थप्रयुक्ता । स चार्थः स च पुरुषार्थो हेतुर्निमित्तं कारणमित्यनित्या व्याख्यायन्ते महदाद्यास्तिस्रोऽवस्थाः ॥

गुणास्तु सर्वधर्मानुपातिनः सर्वविकारानुपातिनः । यथा सर्पः प्रांशुत्वसर्पणकुण्डलत्वादिविशेषानुपाती, तथा विशेषादितत्त्वानुपातिनो गुणाः पिण्डप्रत्ययानुपातिनश्च न प्रलीयन्ते नोपजायन्ते । यथा सर्पः कुण्डलादित्वे प्रलीयमाने न प्रलीयते तदुपजने च नोपजायते तथैव गुणा अपि । यथा च घटपिठरादिषु प्रलीयमानेषु जायमानेषु च मृन्न प्रलीयते नापि जायते ॥

गुणा व्यक्तिभिरेव धर्मैरेवातीतानागतव्ययागमवतीभिर्विलक्षणाभिर्गुणान्वयिनीभिर्गुणोपादानकारणाभिरुपजनापायधर्मका इवोत्पत्तिप्रलयवन्त इव प्रत्यवभासन्ते न स्वरूपेण विनश्यन्ति जायन्ते वा ॥

एतस्यैवार्थस्य दृष्टान्तमाह—यथा देवदत्तो दरिद्राति । कस्मात् ? येनास्य म्रियन्ते गाव इति । गवामेव मरणात्तस्य दरिद्राणं न स्वरूपहानादिति समः समाधिः तुल्यश्चर्चो दृष्टान्तेन दार्ष्टान्तिकस्य देवदत्तदरिद्राणवदेव गुणानुगताभिर्व्यक्तिभिर्महदादिभिर्गुणविमर्दनवैचित्र्यकृताभिर्विवर्धमानाभिर्गुणानामाढ्यता तत्प्रलये च तेषां दरिद्राणं, न स्वरूपेणापचय उपचयो वेति तुल्यः समाधिरिति ॥

सर्वस्य प्रधानकार्यत्वे सति विशेषा अविशेषा वा कस्मादनन्तरं नोपजायन्त इति तदाह—लिङ्गस्यालिङ्गं प्रत्यासन्नं यथा मूलं वृक्षस्य प्रत्यासन्नं बीजे संसृष्टं मूलमेव प्रथमतरं विविच्यते, न वृक्षस्योत्तरावस्था । एवं तत्र

[ भाष्यम् ]

तथा षडविशेषा लिङ्गमात्रे संसृष्टा विविच्यन्ते परिणामक्रमनियमात्। तथा तेष्वविशेषेषु भूतेन्द्रियाणि संसृष्टानि विविच्यन्ते। तथा चोक्तं पुरस्तात्। न विशेषेभ्यः परं तत्त्वान्तरमस्तीति विशेषाणां नास्ति तत्त्वान्तरपरिणामः। तेषां तु धर्मलक्षणावस्थापरिणामा व्याख्यायिष्यन्ते॥ १९॥

[ भाष्यम् ]

व्याख्यातं दृश्यम्। अथ द्रष्टुः स्वरूपावधारणार्थमिदमारभ्यते—

[ सूत्रम् ]

द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः॥ २०॥

[ विवरणम् ]

प्रधाने तत् लिङ्गं संसृष्टं संलीनं प्रथमं विविच्यते आविर्भवति नोत्तरे विशेषा विप्रकृष्टत्वादेव। तदेवाह—क्रमानतिपत्तेः क्रमानतिक्रमात्। न हि लोके कस्यचिदुत्पद्यमानस्य क्रमातिलङ्घनमस्ति॥

तथा षडविशेषाः पूर्वोक्ता लिङ्गमात्रे प्रत्यासन्नत्वात् संसृष्टत्वाद्विविच्यन्ते। कस्मादित्याह—परिणामक्रमनियमात्। तथा तेष्वविशेषेषु भूतेन्द्रियाणि। तन्मात्रेषु भूतानि संसृष्टानि विविच्यन्ते। अस्मितामात्रे इन्द्रियाणि मनस्सहितानि॥

तथा चोक्तं पुरस्तात्। न विशेषेभ्यः प्रागुक्तेभ्य आकाशादिभ्यः परं तत्त्वान्तरमस्ति। न विशेषाणामन्यस्तत्त्वान्तरपरिणाम इत्यर्थः। एतदेवाह—विशेषाणां नास्ति तत्त्वान्तरमिति। तत्त्वं हि नाम साधारणं सर्वप्राणधारिणामामहाप्रलयस्थायि। नैवंलक्षणं पृथिव्यादिभ्य उत्पद्यमानमन्यदस्ति। धर्मलक्षणावस्थापरिणामास्तु भवन्त्येवेति। तेषां तु विशेषाणां धर्मलक्षणावस्थापरिणामा व्याख्यायिष्यन्ते तृतीयपादे॥ १९॥

व्याख्यातं दृश्यम् अवधृतं दृश्यम्। यदर्थं च दृश्यते तस्येदानीं द्रष्टुः स्वरूपावधारणार्थमिदमारभ्यते—द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः द्रष्टा दृश्यस्य यथाव्याख्यातरूपस्योपलब्धा पुरुषः। तस्येदं लक्षणं दृशिमात्रः

[ भाष्यम् ]

दृशिमात्र इति दृक्छक्तिरेव [1]विशेषणापरामृष्टेत्यर्थः । स पुरुषो बुद्धेः प्रतिसंवेदी । स बुद्धेर्न सरूपो नात्यन्तं विरूप इति ॥

[ विवरणम् ]

शुद्धोऽपि प्रत्ययानुपश्यश्चेति । पुरस्तादाख्यातम्—'तदा[2] द्रष्टुः स्वरूपेऽवस्थानम्' 'वृत्तिसारूप्यमितरत्र' इति च, तदेव द्वयमिह प्रतिपाद्यते ॥

यच्चोक्तं[3] प्रतिसंवेदी बुद्धेः पुरुष इत्युपपादयिष्याम इति, तच्चात्रोपपाद्यते । दृशिर्दर्शनमुपलब्धिस्तावन्मात्रो दृशिमात्रः । यत एवं तस्माच्छुद्धः । शुद्धोऽपि सन्नसौ बौद्धस्य प्रत्ययस्यानुपश्यः, दृशिमात्रत्वादेव । तस्मात्तमनुपश्यन् तत्स्वरूपो भवति । दृशिसन्निधौ वृत्तेर्दृशिस्वरूपावभासता द्रष्टुर्वृत्तिसारूप्यम् ॥

दृशिमात्रस्यैवाविक्रियात्मकस्य सतोऽस्य बौद्धप्रत्ययानुदर्शनं यस्मात्तस्माच्च स्वरूपप्रतिष्ठता च सिद्धा । प्रत्ययानुपश्य इति । एतत्तु तदस्तित्वानुमानम् । कथम्? घटादीनां दृश्यानां स्वरूपव्यतिरिक्तेनान्येन दृश्यत्वदर्शनात्, तत्प्रकाशकानां च आलोकादीनां व्यतिरिक्तदृश्यत्वात्, सर्वार्थावभासकानामपि प्रत्ययानां स्वरूपव्यतिरिक्तदृश्यत्वं दृश्यत्वादवगम्यते घटादितदालोकादिवदिति ॥

यस्माच्च बौद्धमेव प्रत्ययमनुपश्यति, तं च पश्यत्येव, न कदाचित् स्वविषयं प्रत्ययं न पश्यति, तस्माद्दृशिमात्रः । मात्रग्रहणं धर्मान्तरनिवर्तनार्थम् । एतेन द्रष्टुर्दृशिरित्येतन्निवर्तितमिच्छादिसमानाश्रयत्वं च निवर्तितं, दृशेरेव द्रष्टृत्वात् । तदेतदुच्यते—दृशिमात्र इति । दृक्छक्तिरेव दृग्दर्शनं तदेव शक्तिर्दृक्छक्तिः । नाप्यन्यो दृक्छक्तिमानस्ति । सैव शक्तिर्दृगिति । तत्र मात्रशब्दार्थं व्याचष्टे—विशेषणापरामृष्टेत्यर्थः । विशेषेण केनचिदिच्छादिना गुणैर्गुणधर्मैश्चापरामृष्टः ॥

स पुरुषो बुद्धेः प्रतिसंवेदितुं शीलमस्येति प्रतिसंवेदी । बौद्धप्रत्ययोपलब्धिस्वभाव इत्यर्थः । पुरुषो बुद्धेः प्रतिसंवेदी दृशिमात्रः शुद्धश्चेति कथं गम्यत इत्याह—स बुद्धेर्न सरूपो नात्यन्तं विरूप इति । न समानलक्षणो नाप्यत्यन्तविधर्मेत्येतत् । असरूपतया दृशिमात्रत्वं शुद्धत्वं चाह । नात्यन्तविरूप इति वृत्तिसारूप्यतामाह ॥

---

1. 'विशेषणापरामृष्टा' इति विवरणाभिमतो भाष्यपाठः ।
2. यो. सू. पा. 1. सू. 3-4.
3. यो. सू. पा. 1. सू. 7.

[ भाष्यम् ]

न तावत् सरूपः। कस्मात्? ज्ञाताज्ञातविषयत्वात् परिणामिनी हि बुद्धिः। तस्याश्च विषयो गवादिर्घटादिर्वा ज्ञातश्चाज्ञातश्चेति परिणामित्वं दर्शयति ॥

[ विवरणम् ]

कथं पुनः न सरूपतेति? उच्यते—न तावत् सरूपः। कस्मात्? को हेतुः?। बुद्धेस्तावत् स्वरूपं वैधर्म्यदर्शनार्थमाह—ज्ञाताज्ञातविषयत्वात् परिणामिनी बुद्धिरिति। कः पुनरसौ बुद्धेर्विषयो यो ज्ञातश्चाज्ञातश्चेत्याह—तस्यास्तु विषयो गवादिर्घटादिश्च ज्ञातश्चाज्ञातश्च। येन बाह्याकारेण परिणता बुद्धिः स ज्ञातः। येनाकारेण न परिणता सोऽज्ञातः ॥

यदि न परिणमेतापरिणममाना चेद्विषयं विख्यापयेत् सदैव विषयित्वं बुद्धेः स्यात्। तस्मात् ज्ञाताज्ञातविषयता परिणामित्वं ख्यापयति। परिणामिनी बुद्धिः, ज्ञाताज्ञातविषयत्वात्। दीपचक्षुरादि(विषय)वत् ॥

तद्विलक्षणः पुरुषः सदा ज्ञातविषयः। सर्वदा हि ज्ञात एव पुरुषस्य स्वो विषयः। तस्मात् सदा ज्ञातविषयत्वं पुरुषस्यापरिणामित्वं परिदीपयति। सदा ज्ञातविषयत्वमसिद्धं पुरुषस्येत्याशङ्क्याह—कस्मात्? को हेतुः? न हीति हिशब्दः प्रसिद्धावद्योतनार्थः। बुद्धिश्च नाम बुद्धिरिति बौद्धप्रत्ययः, पुरुषस्य विषयः स्यादगृहीता गृहीता चेति। सर्वदा च गृहीत एव बौद्धः प्रत्ययः। तदव्यभिचारेणैव पुरुषस्य व्यतिरिक्तत्वसिद्धिः। तस्मात् पुरुषस्य सदा ज्ञातविषयत्वम्। ततश्चापरिणामित्वं सिद्धम्। अपरिणामी पुरुष इति प्रतिज्ञा। सदा ज्ञातविषयत्वादिति हेतुः। वैधर्म्यदृष्टान्तो बुद्ध्यादिः ॥

ननु च बुद्ध्या व्यवसितमर्थं पुरुषश्चेतयति, बुद्धेश्च सर्वो विषयो ज्ञातश्चाज्ञातश्च पुरुषस्यापि समानः। ज्ञाताज्ञातविषयत्वं बुद्ध्या व्यवसितार्थोपलम्भित्वात्। तस्मात् पुरुषस्यापि परिणामित्वं ज्ञाताज्ञातविषयत्वाद्बुद्धिवदेव ॥

नैष दोषः। बुद्धेरेव पुरुषविषयत्वात्। बुद्धिरेव हि बाह्यार्थाकारा पुरुषस्य विषयो नार्थः केवलः स्वरूपेण। तस्मान्न ज्ञाताज्ञातविषयः पुरुषः। बुद्धिस्तु सदैव ज्ञातैवेति न परिणामित्वं पुरुषस्य ॥

ननु च बुद्ध्या व्यवसितमर्थं पुरुषश्चेतयतीति कश्चिदाह। तत् कथम्? उच्यते—न—तैरप्यपरिणामित्वस्याभ्युपगमात् पुरुषस्य; बुद्ध्या व्यवसितमर्थमित्येत-

[ भाष्यम् ]

सदा ज्ञातविषयत्वं तु पुरुषस्यापरिणामित्वं परिदीपयति । कस्मात्? । न हि बुद्धिश्च नाम पुरुषविषयश्च स्यादगृहीता गृहीता चेति सिद्धं पुरुषस्य सदा ज्ञातविषयत्वं, ततश्चापरिणामित्वमिति ।

किञ्च—परार्था बुद्धिः संहत्यकारित्वात्, स्वार्थः पुरुष इति ।

[ विवरणम् ]

दुक्तं भवति—बुद्ध्याकारं चेतयति बुद्धिव्यवसायाकारापन्नमर्थं चेतयतीति । अन्यथा हि तेषां परिणामित्वपरार्थत्वसंहत्यकारित्वादयो बुद्धिधर्माः सर्व एव प्रसजेयुः ॥

अथापरिणामित्वे दर्शनानुपपत्तिरिति चेत्—न—दर्शनस्यैव पुरुषस्वरूपत्वात् । यो हि पुरुषपरिणामित्वमभिमन्यते, स इदं प्रष्टव्यः—किं परिणामेन क्रियत इति ॥

स चेदभिदधीत—दर्शनमिति । स प्रत्यभिधानीयः—पुरुषस्य दर्शनमेव रूपं, अतः परिणामानर्थक्यमिति ॥

स चेत् प्रतिब्रूयात्—न पुरुषस्योपलब्धिर्भोगः, कस्तर्हि ? विक्रियैव भोग इति । स पुनर्वक्तव्यः—तथापि विक्रियावत्त्वादनित्यत्वमुपनतं शरीरादिवदेव ॥

अथापि प्रतिभाषेत—स्वात्मनि विक्रिया नानित्यत्वकारणं स्यात्, किं त्ववस्थान्तरभाविविक्रिया हि कारणमनित्यत्वस्येति । स पुनः प्रतिभाषितव्यः—विक्रियावस्थाया एवावस्थान्तरत्वात् । पूर्वमविकृतस्य वस्तुनः पुनर्विक्रिया अवस्थान्तरम् ॥

किं च—विषयाभ्युपगमे च विक्रियैव, तावता नियमः पार्यते न कर्तुम् । न चापि स्वात्मनि विक्रियमाणानां वज्रवैदूर्यादीनामनित्यत्वं नास्ति । न च विक्रियाजनितस्यैव दर्शनस्य दृश्यविषयत्वं न नित्यस्य दर्शनस्येति नियमहेतुरस्ति । विक्रियैवोपलब्धिर्न विक्रियाजनितेति चेत्—न—शरीरादीनां विक्रियावतामुपलब्धिप्रसङ्गात् ॥

तस्माद्दृशिमात्र एवापरिणामी च, सदा ज्ञातविषयत्वात् पुरुष इति सिद्धम् । तस्य च नित्योपलब्धिस्वरूपत्वेऽपि दृश्यबौद्धप्रत्ययभावाभावकृतोऽयं व्यपदेशः पश्यति दर्शयिष्यति ददर्शेति च । सवित्रादिप्रकाशनव्यपदेशवत् ।

[ भाष्यम् ]

तथा सर्वार्थाध्यवसायकत्वात् त्रिगुणा बुद्धिः, त्रिगुणत्वादचेतनेति। गुणानां तूपद्रष्टा पुरुष इत्यतो न सरूपः ॥

अस्तु तर्हि विरूप इति। नात्यन्तं विरूपः। कस्मात्?। शुद्धोऽप्यसौ प्रत्ययानुपश्यो यतः। प्रत्ययं बौद्धमनुपश्यति, तमनुपश्यन्नतदात्माऽपि तदात्मक इव प्रत्यवभासते ॥ तथा चोक्तम्[1]—"अपरिणामिनी हि भोक्तृशक्तिरप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसङ्क्रान्तेव तद्वृत्तिमनु पतति। तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते ॥ २० ॥

[ विवरणम् ]

यथा प्रकाशयति सविता प्रकाशयिष्यति प्राचीकशदिति च प्रकाश्यभावाभावकृतो व्यपदेशः। शुद्धत्वादयो हेतवो वैधर्म्येण बुद्ध्यादयो दृष्टान्ताः ॥

इतश्चासरूपः। सर्वार्थाध्यवसायित्वाद्घोरशान्तादिसमस्तार्थावसायित्वात् त्रिगुणा बुद्धिः श्रोत्रादिवत्। गुणानां तूपद्रष्टेत्युपद्रष्टृत्वं हेतुः। अत्रिगुणः पुरुष इति प्रतिज्ञा। वैधर्म्येण बुद्ध्यादिरेव दृष्टान्तोऽत्रिगुणत्वाच्चासरूपः ॥

अस्तु तर्हि विरूप एव। ततश्चात्यन्तविरूपत्वाद्भोगानुपपत्तिरिति। अत्रोच्यते—नात्यन्तं विरूपः। कस्मात्? कोऽत्र हेतुः? न हि शुद्धस्य बुद्धिस्वरूपविरूपस्याशुद्धबौद्धप्रत्ययादत्यन्तवैरूप्यसिद्धये हेतुरित्यभिप्रायः ॥

न—बुद्धिप्रत्ययसाक्षित्वस्य सिद्धत्वात्। यतः शुद्धोऽप्यसौ बौद्धं प्रत्ययमनुपश्यति तच्च बौद्धप्रत्ययानुदर्शनं साधितम्। अनुपश्यतीति विषयाकारपरिणामे सति बौद्धं प्रत्ययं पश्यतीत्यर्थः। तमनुपश्यन्नपि न तदात्मा न त्रिगुणः। तदात्मक इव शान्तघोरमूढव्यवसायरूप इव प्रत्यवभासते। तस्मान्नात्यन्तविरूपः प्रवृत्तिसारूप्यात्। तत्र यदुक्तं बुद्धेः प्रतिसंवेदी पुरुष इत्युपपादयिष्यामः इति, तदुपपादितम्। तथा[2] च तत्सारूप्यमादर्शितम्। तथोक्तं तन्त्रे—

---

1. पञ्चशिखेन.

2. अत्र आदर्शकोशे 'तथा' इत्येतदुपरि 'स्वविषयवृत्तिसद्भावैः' इत्यादिः ग्रन्थः उपलभ्यते। तस्यानन्वयात् आदर्शकोशे (68) पुटेभ्यः प्राक् लिखितः 'च तत्सारूप्यमादर्शितं' इत्यादिः ग्रन्थः योजितः ॥

[ सूत्रम् ]

## तदर्थ एव दृश्यस्यात्मा ॥ २१ ॥

[ भाष्यम् ]

दृशिरूपस्य पुरुषस्य कर्मविषयतामापन्नं दृश्यमिति तदर्थ एव दृश्यस्यात्मा भवति । स्वरूपं भवतीत्यर्थः । [ततश्च] स्वरूपं तु पररूपेण

[ विवरणम् ]

"अपरिणामिनी भोक्तृशक्तिः—दृक्छक्तिर्यथाव्याख्यातरूपा अप्रतिसङ्क्रमा च परिणामिन्यर्थे बौद्धे प्रत्यये प्रतिसङ्क्रान्तेव प्रत्ययविषयत्वात् तद्वृत्तिमनुपतन्तीव अस्या बुद्धेर्वृत्तिमनुपतन्तीव द्रष्टृत्वादुपलभमाना । बौद्धः प्रत्ययो जायमान एव दृक्छक्तेः कर्मतामापद्यते । तमनुपतन्त्युपलभमाना भोक्तृशक्तिः तस्याश्च प्राप्तचैतन्योपग्रहरूपायाः प्राप्तं चैतन्योपग्रहरूपं पुरुषोपग्रहरूपं यया बुद्धिवृत्त्या आसादितं पावकोपग्रहरूपतप्तलोहपिण्डवद्दृशिकर्मत्वादेव अनुकारमात्रतया बुद्धिवृत्तिसारूप्यमात्रतया बुद्धिवृत्त्यविशिष्टा ज्ञवृत्तिरिति ज्ञ एवोपलब्धिरेव वृत्तिरित्याख्यायते ॥ २० ॥

तदर्थ एव दृश्यस्यात्मा तच्छब्देन द्रष्टा दृशिमात्रः शुद्धो यथाधिगतात्मा प्रत्याम्नायते । तदर्थः तस्मै तदर्थस्तत्प्रयोजनः दृशिकर्मत्वार्थ इत्यर्थः । भोगरूपेणापवर्गरूपेण च । कोऽसावित्याह—दृश्यस्यात्मा प्रधानस्यात्मा स्वरूपं स्वरूपलाभ इति ॥

ननु चतुर्व्यूहत्वं व्याचिख्यासितं किमर्थमेतदप्रकृतमुच्यते । नैष दोषः । आत्यन्तिकदुःखनिवृत्तिप्रयोजनस्य प्रकृतत्वात् । कथं दृश्यतादर्थ्यलाभावधारणेनात्यन्तिकी दुःखविरतिरुक्ता भवेदिति । उच्यते—यदि दृश्यस्वरूपप्रतिलम्भस्तदर्थ एव, तदा अशेषतदर्थविरतौ पुनः कृतार्थत्वात् कार्याभावादात्यन्तिकदृश्यविरतिः स्यात् । तस्य पुनः प्रवृत्तौ प्रयोजनाभावात् । न हि कृतमेव पुनः करणीयकमुपाश्नुते । अथ तु स्वार्थोऽपि दृश्यस्यात्मलाभोऽभविष्यदतः स्वार्थस्य भावात् पुनः पुनः प्रावर्तिष्यत । ततश्च नात्यन्तिकी निवृत्तिः । तस्मात्तादर्थ्यमेवावधार्यते ॥

दृश्यात्मलाभस्य स्वार्थाभावश्च दृश्यस्य भोग्यत्वात् ओदनादिवत् सिद्धः, अचेतनत्वात् संहत्यकारित्वाच्च । तदाह-दृशिरूपस्य पुरुषस्य कर्मविषयतामापन्नं दृश्यमिति । इतिशब्दो हेत्वर्थे । तदर्थ एव दृश्यस्यात्मा भवति स्वरूपं भवतीत्यर्थः । पुरुषार्थ एव प्रधानस्यात्मलाभो दृशिकर्मतापत्तेरोदनादिवत् ॥

[ भाष्यम् ]

प्रतिलब्धात्मकं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यत इति ॥ २१ ॥

स्वरूपहानादस्य नाशः प्राप्तः । न तु विनश्यति । कस्मात् ?

[ सूत्रम् ]

**कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥**

[ भाष्यम् ]

कृतार्थमेकं पुरुषं प्रति दृश्यं नष्टमपि, नाशं प्राप्तमपि, अनष्टं, तदन्यपुरुषसाधारणत्वात् । कुशलं पुरुषं प्रति नाशं प्राप्तमप्यकुशलान् पुरुषान् प्रति न कृतार्थमिति, तेषां दृशेः कर्म, विषयतामापन्नं लभत एव पररूपेणात्मरूपमिति ।

[ विवरणम् ]

सूत्रप्रयोजनमाचष्ट इदानीम्—ततश्च तादर्थ्यस्य नियतत्वात् कारणात् **पुरुषरूपेण प्रतिलब्धात्मकं** प्राप्तचैतन्योपग्रहरूपं स**द्भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यते** । भोगापवर्गव्यतिरेकेण कर्तव्याभावात् ॥ २१ ॥

सूत्रसम्बन्धं करोति—यं पुरुषं प्रति चरितार्थं दृश्यं, तं प्रति दृशिकर्मतां नापत्स्यत इति स्वरूपहानम्, अतश्च **स्वरूपहानादस्य विनाशः प्राप्तः । न तु विनश्यति** सर्वात्मना । **कस्मात्?** को हेतुः ? प्रधानानां प्रतिपुरुषं बहुत्वात् कृतार्थं प्रति नष्टमेवेति मन्यते ॥

**कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात्** । **कृतार्थं** यं **पुरुषं** प्रति भोगापवर्गनिर्वर्तनेन कृतप्रयोजनं **तमेकं पुरुषं प्रति** पुनः कार्यकरणरूपेणाप्रवर्तनाद्भावाभावयोरविशेषा**न्नष्टमपि** । अस्य व्याख्यानं **नाशप्राप्तमपीति** । **अनष्टं तदन्यपुरुषसाधारणत्वात्** । यान् प्रत्यकृतार्थं तान् प्रत्यनष्टम् ॥

कथमनष्टमित्याह—**कुशलपुरुषान् प्रति नाशप्राप्तं** भोगापवर्गप्रदानेन कुशलपुरुषान् प्रति कृतप्रयोजनम् । **अकुशलपुरुषान् प्रति अकृतार्थं** भोगापवर्गयोः कर्तव्ययोरकृतत्वात्तेषामकुशलानां **दृशेः** त एव दृशिस्तस्याः **कर्म**तां दृश्यता**मापन्नं लभत एव पुरुषरूपेण** पुरुषनिर्भासतया **आत्मरूपमिति** । अतश्च साधारणत्वादेकमेव प्रधानं पृथिव्यादिवत् । कार्यकरणानां च भिन्नत्वात् पुरुषाणां नानात्वं सिद्धम् । सुखदुःखनानात्वाच्च पुरुषभेदसिद्धिः ॥

[ भाष्यम् ]

अतश्च दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगो व्याख्यात इति। तथा चोक्तम्[1]—"धर्मिणामनादिसंयोगाद्धर्ममात्राणामप्यनादिः संयोगः" इति ॥ २२ ॥

संयोगस्वरूपाभिधित्सयेदं सूत्रं प्रववृते—

[ सूत्रम् ]

**स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः ॥ २३ ॥**

[ भाष्यम् ]

पुरुषः स्वामी दृश्येन स्वेन दर्शनार्थं संयुक्तः। तस्मात् संयोगात् दृश्यस्योपलब्धिर्या स भोगः। या तु द्रष्टुः स्वरूपोपलब्धिः सोऽपवर्गः।

[ विवरणम् ]

अतश्च दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगो व्याख्यातः। तथा चोक्तं तन्त्रे—धर्मिणामनादिसंयोगात् गुणानां पुरुषाणां चानादिसंयोगाद्धर्ममात्राणां महदादिकार्यकरणान्तानामपि पुरुषैरनादिः संयोगो धर्मिभिर्धर्माणामभिन्नत्वात् ॥ २२ ॥

दृश्यमवधृतम। द्रष्टा चावधृतः। द्रष्टृदृश्ययोः संयोगो हेयहेतुरिति चोक्तम्। स च संयोगोऽवधारयितव्यः कीदृश इति। ततश्च संयोगस्वरूपावधारणार्थमिदं सूत्रं प्रववृते—स्वस्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोगः। स्वस्वामिशक्त्योः बुद्धिपुरुषयोः स्वरूपोपलब्धेर्हेतुः कारणम्। यस्मिन् सति तयोः स्वरूपमुपलभ्यते वदनदर्पणयोरिव, स तयोः स्वरूपोपलब्धिहेतुः। संयोगः द्रष्टृदृश्यस्वरूपकार्यानुमेय इत्यर्थः ॥

प्रमाणं चात्र स्वसंयोगपूर्विका बुद्धिपुरुषयोः स्वरूपोपलब्धिः, विषयविषयिस्वरूपोपलब्धित्वात्, ईक्षणदर्पणस्वरूपोपलब्धिवत्। या काचित् सुखदुःखोपलब्धिर्विवादगोचरापन्ना सा सुखदुःखहेतुसंयोगपूर्विका, सुखदुःखोपलब्धित्वात्, चन्दनकण्टकसुखदुःखोपलब्धिवत् ॥

तदाह—पुरुषः स्वामी दृश्येन स्वेन स्वया बुद्ध्या दर्शनार्थं भोगापवर्गदर्शनार्थं संयुक्तः। दर्शनप्रयुक्त एव संयोग इत्यर्थः ॥

तस्मात् संयोगाद्दर्शनप्रयुक्ता दृश्यस्योपलब्धिः अविशिष्टा या स भोगः। या तु द्रष्टुः स्वरूपोपलब्धिर्विविक्ता सोऽपवर्गः। यस्माद्दर्शनकार्यद्वयप्रयुक्तः

1. आगमिभिः।

[ भाष्यम् ]

**दर्शनकार्यावसानः संयोग इति दर्शनं वियोगस्य कारणमुक्तम् । दर्शनमदर्शनस्य प्रतिद्वन्द्वीत्यदर्शनं संयोगनिमित्तमुक्तम् । नात्र दर्शनं मोक्षकारणम्, अदर्शनाभावादेव बन्धाभावः स मोक्ष इति । दर्शनस्य भावे बन्धकारणस्यादर्शनस्य नाश इत्यतो दर्शनं ज्ञानं कैवल्यकारणमुक्तम् ।**

**किं चेदमदर्शनं नाम ?**

[ विवरणम् ]

संयोगस्तस्माद्दर्शनकार्यावसानः संयोगः तेन पुरुषसंयोगवद्दर्शनं **वियोगस्य कारणमित्युक्तम्** । गुणपुरुषान्तरदर्शनं प्रधानपुरुषवियोगस्य कारणमित्युक्तं, कार्यस्य दर्शनेन पर्यवसितत्वात् ॥

संसारिसंसारहेतुयाथात्म्यदर्शनं दुःखदुःखिसंयोगहेतुनिवर्तकं, दुःखिदुःखहेतुयाथात्म्यविषयत्वात्, रोगिरोगहेतुयाथात्म्यदर्शनवत् ॥

अविद्या द्रष्टृदृश्ययोः संयोगकारणं, दुःखनिमित्तसंयोगहेतुत्वात्, रोगहेतुसंयोगनिमित्तमिथ्याज्ञानवत् । द्रष्टृदृश्यसंयोगो मिथ्याज्ञानपूर्वकः, दुःखहेतुत्वात्, रोगिरोगहेतुसंयोगवत् । यस्माद्दुःखिदुःखहेतुयाथात्म्यविषयं **दर्शनं**, तस्मात्तदन्यथाविषयस्यादर्शनस्य **प्रतिद्वन्द्वमित्यदर्शनं संयोगनिमित्तमित्युक्तं** तस्य हेतुरविद्येति । दुःखनिमित्तत्वाच्च संयोगस्य ॥

यस्माददर्शनमेव निवर्तयति दर्शनं नान्यत्कार्यं करोति, तस्मान्**नात्र दर्शनं मोक्षकारणम्, अदर्शनाभावादेव**ार्थाददर्शनकार्यस्य दुःखहेतोर्**बन्धस्याभावः, स मोक्षः** । न पुनर्बन्धाभावव्यतिरेकेण भावयितव्यो मोक्षः । ततश्च मोक्षस्य नित्यत्वसिद्धिः ॥

**दर्शनस्य भावे** द्रष्टृदृश्यविषयस्य दर्शनस्य भावे तद्विषयस्यादर्शनस्य **नाशः** । दर्शनादर्शनयोरेकत्र विरोधात् तिमिररविकिरणजालयोरिव । **अतो दर्शनं कैवल्यकारणमुक्तम्**—'विवेकख्यातिरविप्लवा[1] हानोपायः' इति ॥

**किंचेदमदर्शनं नाम ?** ननु चोक्तमविद्यैव । सा चामित्रागोष्पदवदिति विद्याविपर्ययेण[2] व्याख्याता । सत्यमेवं, किन्तु शास्त्रगता विकल्पा दर्शयिष्यन्ते

1. यो. सू. पा. 2. सू. 26.
2. यो. सू. पा. 2. सू. 5.

[ भाष्यम् ]

किं गुणानामधिकारः ?

आहोस्वित् दृशिरूपस्य स्वामिनो दर्शितविषयस्य प्रधानचित्तस्यानुत्पादः, स्वस्मिन् दृश्ये विद्यमाने यो दर्शनाभावः ?

किमर्थवत्ता गुणानाम् ?

[ विवरणम् ]

स्वाभिमतपक्षनिश्चिचीषया । परपरिकल्पितवस्तुखण्डमानमापादयता हि निजाभिमतनिरूपितवस्तु दृढिमानमतितरामानीयते ॥

किंचेदमिति सर्वैरेव विकल्पैर्वक्ष्यमाणैरभिसंबन्धनीयम् । किं गुणानामधिकार इति, सामान्येन परिपृष्टस्य विशेषपर्यनुयोगः । अधिकृतिरधिकारः, गुणानां प्रवृत्तिः ॥

ननु गुणानामधिकारस्य कथमदर्शनाशङ्का ? उच्यते—अर्थद्वारेण भवत्येवादर्शनमधिकारः । यावद्धि गुणानां प्रवृत्तिस्तावद्बन्धः । बन्धकारणमविवेकेति स्थितिस्थैर्यमानीयते । शब्दद्वारेणापि—दर्शनादन्यददर्शनं यदा, भवत्येव तदानीमाशङ्का । गुणाधिकारो हि दर्शनादन्य एवेति ॥

आहोस्विद् दृशिस्वरूपस्य स्वामिनो दर्शितविषयस्य चित्तस्यानुत्पादः। इह तु पूर्वपदार्थप्रधानत्वमदर्शनस्य गृहीत्वा शङ्क्यते । चित्तस्यानुत्पादः प्रागुत्पत्तेर्दर्शनस्याभावः । किमुक्तं भवत्यनुत्पाद इत्यत आह—स्वस्मिन् दृश्ये चित्ते विद्यमाने यो दर्शनाभावः गुणपुरुषान्तरदर्शनानुत्पत्तिरदर्शनमिति ॥

किमर्थवत्ता गुणानां भोगापवर्गाभ्यां या गुणानामर्थवत्ता तददर्शनमिति । अत्र त्वर्थद्वारेणैवाशङ्का । प्रयोजनवतो हि प्रयोजनमवश्यकृत्यमिति ॥

कः पुनरेषु पक्षेषु दोषः ? उच्यते—यद्यधिकारो गुणानामदर्शनं विद्यानर्थक्यं प्राप्तम् । न ह्यस्मिन् पक्षे विद्या प्रत्यनीकभूता स्याददर्शनस्य । यस्माद्विद्याधिकारयोरविरोधः, अतश्चानिर्मोक्षः प्रसक्तः । पुनः पुनः प्रयोजनवत्तया प्रवृत्तिसंभवात् ॥

गुणार्थवत्ता अदर्शनमिति पक्षेऽप्येष एव दोषः । तथा चित्तस्यानुत्पादपक्षेऽप्येष एव । अनुत्पादो हि दर्शनाभावः, तस्य चावस्तुत्वाद्विद्यया निवृत्तिरनुपपन्नेति । अभावे हि सति प्रत्यनीकविधानमनर्थकमेव ॥

[ भाष्यम् ]

अथाविद्या स्वचित्तेन सह निरुद्धा स्वचित्तस्योत्पत्तिबीजम् ?

किं स्थितिसंस्कारक्षये गतिसंस्काराभिव्यक्तिः ? यत्रेदमुक्तम्–प्रधानं स्थित्यैव वर्तमानं विकाराकरणादप्रधानं स्यात् । तथा गत्यैव वर्तमानं विकारनित्यत्वादप्रधानं स्यात् । [1]उभयथा चास्य वृत्तिः प्रधानव्यवहारं लभते, नान्यथा । कारणान्तरेष्वपि कल्पितेष्वेष समानश्चर्चः ॥

[ विवरणम् ]

अथाविद्या स्वचित्तेन सह निरुद्धेति । अत्र ह्यविद्याया अदर्शनस्य च केनचिदंशेन भेदं मन्यमानो विकल्पयति । कथम्? अनिरुद्धा ह्यविद्या दृश्यमानत्वाद्दर्शनमेव । या तु निरुद्धा चित्तेन सह प्रलीना स्वकारणे । स्वचित्तस्योत्पत्तिबीजमुत्पत्तिकारणं सा न दृश्यत इत्यदर्शनमित्यभिमानः । ततश्चानिरोधावस्थाया दर्शनत्वप्रसङ्ग इति दुष्ट एवायं पक्षः स्यात् । अथ तु निरोधानिरोधावस्थयोरप्यदर्शनमेव, तथा सत्यभिमतसिद्धिरित्यदोष एव । किं स्थितिसंस्कारक्षये गतिसंस्काराभिव्यक्तिः । किमेतददर्शनमिति न संबध्यते । कथं तर्हि संबन्धः? उच्यते–तत्राविद्या स्वचित्तसहनिरुद्धा चित्तस्योत्पत्तिबीजमित्युक्तं, तत इदमर्थात् सिद्धम्–चित्तं स्वकारणे निरुध्यते पुनश्चोत्पद्यत इति । ततश्चेदमपि सिद्धमर्थाच्चित्तस्य कारणमपि स्थित्या गत्या च वर्तत इति । ततश्चैतद्विस्पष्टीकरणार्थं पृच्छति ॥

स्थित्यर्थो गुणानां साम्यावस्थाहेतुः संस्कारः स्थितिसंस्कारः । तस्य क्षये स्थितिसंस्कारक्षये गतिर्महदाद्याकारेण प्रवृत्तिस्तदर्थः संस्कारो गतिसंस्कारः तस्याभिव्यक्तिरिति ॥

यदि स्थित्या गत्या च वर्तते, ततः को दोषः स्यात्तदुदाहरणेन दर्शयति— यत्रेदमुक्तं प्रधानं स्थित्यैव वर्तमानं विकाराकरणात् महदाद्याकारेणापरिणामादप्रधानं स्यात् । यतः प्रधत्ते विकारानिति प्रधानम् । तेन विकाराणां अप्रधातृत्वादप्रधानं स्यात् ।

तथा गत्यैव वर्तमानं नित्यं विकाररूपेणैव वर्तमानं विकारनित्यत्वान्न विकारान् प्रधत्त इति कारणत्वहानेरप्रधानं स्यात् । उभयथा वृत्तिः गत्या स्थित्या च वर्तनं वृत्तिर्यस्य प्रधानस्य तदुभयथावृत्ति व्यवहारं प्रधानत्वव्यवहारं कारणत्वव्यवहारं लभते । नान्यथा प्रधानत्वं प्रधानस्य । कारणान्तरेष्वपि पुरुषेश्वरपरमाण्वादिषु परकल्पितेषु समानश्चर्चः तुल्यविषयः

1. 'उभयथावृत्ति व्यवहारं' इति विवरणानुसारी पाठः ।

[ भाष्यम् ]

दर्शनशक्तिरेवादर्शनमित्येके । "प्रधानस्यात्मख्यापनार्था प्रवृत्तिः" इति श्रुतेः । सर्वबोध्यबोधसमर्थः प्राक् प्रवृत्तेः पुरुषो न पश्यति, सर्वकार्यकरणसमर्थं दृश्यं तदा न दृश्यत इति ।

उभयस्याप्यदर्शनं धर्म इत्येके । तत्रेदं दृश्यस्य स्वात्मभूतमपि पुरुषप्रत्ययापेक्षं दर्शनं दृश्यधर्मत्वेन भवति । तथा पुरुषस्यानात्मभूतमपि दृश्यप्रत्ययापेक्षं पुरुषधर्मत्वेनैवादर्शनमवभासते ॥

दर्शनं ज्ञानमेवादर्शनमिति केचिदभिदधति ।

[ विवरणम् ]

न्यायः । प्रकृत एवाधुना निरूप्यते । दर्शनशक्तिरेवादर्शनमित्येके । दर्शनस्य शक्तिरनभिव्यक्तावस्था बीज इवानभिव्यक्ताङ्कुरावस्था तदेतददर्शनमित्येके मन्यन्ते । कुतः? प्रधानस्यात्मप्रख्यापनार्था प्रख्यापनं दर्शनमाख्यायमानरूपता तस्यै तददर्शनमिति श्रुतेः ॥

अस्मिन् पक्षे तदेवानभिव्यक्तात्मकं शक्तिरूपमदर्शनं तदेव चाभिव्यक्तं दर्शनमिति स्वात्मनि विरोधानुपपत्तेर्दर्शनाददर्शनस्य निवृत्त्यनवक्लृप्तिः ॥

तथा दर्शनान्तरं—सर्वबोधसमर्थः बोधात्मकत्वात् प्राक् प्रवृत्तेः प्रधानप्रवृत्तेः प्राङ्न पश्यति दर्शनात्मकोऽपि सन् पुरुष इति । सर्वकार्यकरणक्रियासमर्थं दृश्यं प्रधानं न तदा प्राक्प्रवृत्तेः परमार्थमपि सत् दृश्यत इत्युभयस्य प्रधानपुरुषयोरदर्शनं धर्म इत्येके मन्यन्ते ॥

अत्राप्युभयोरपि प्रागवस्थैवादर्शनमुत्तरकालावस्था च दर्शनमिति पूर्वदोषः स्थित एव । दृश्यस्यात्मभूतमव्यतिरिक्तमपि पुरुषप्रत्ययापेक्षं पुरुषाकारेण पुरुषस्य न दृश्यते । पुरुषाकारविशिष्टतया वा पुरुषस्य दृश्यत इति पुरुषप्रत्ययापेक्षमदर्शनं पुरुषस्य धर्मत्वेन भवति । तदेतत्स्पष्टयति—पुरुषस्यानात्मभूतमपि दृश्यप्रत्ययापेक्षं दृश्यप्रत्ययोऽज्ञानं तदपेक्षं, कथं पुरुषाकारेणादर्शनात् संकरेण वा दर्शनादन्तःकरणप्रत्ययापेक्षं पुरुषानात्मभूतमपि पुरुषधर्मत्वेनैवादर्शनमाभासते । तथा च सति दृश्यधर्म एवायमित्यदोषः ॥

[ भाष्यम् ]

इत्येते शास्त्रगता विकल्पाः । तत्र विकल्पबहुत्वमेतत् ॥ २३ ॥

[1]सर्वपुरुषाणां गुणसंयोगाविशेषः । असाधारणविषयस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोगः—

[ सूत्रम् ]

तस्य हेतुरविद्या ॥ २४ ॥

[ भाष्यम् ]

विपर्ययज्ञानवासनेत्यर्थः ।

[ विवरणम् ]

सर्वविकल्पपक्षख्यापनार्थ उपन्यासः । दर्शनं ज्ञानं, तदेव ज्ञानमदर्शनमिति केचिन्मन्यन्ते । समासस्योत्तरपदार्थप्राधान्यमूरीकृत्यायं विकल्पः । एतस्य दोषोऽविद्यासूत्र एव व्याख्यातः ।

एते शास्त्रगता विकल्पाः दर्शनान्तरगता विकल्पाः । तत्र विकल्पबहुत्वमात्रमेतत् न बहुत्वमात्रेणार्थसिद्धिरित्यभिप्रायः । यस्य तु बुद्धिपुरुषसंयोगहेतुत्वं तस्यादर्शनं[नत्वं]युक्तं दर्शनविरोधात् । तथा च व्याख्यातमिति नात्र पुनः प्रयत्यते ॥ २३ ॥

सर्वपुरुषाणां गुणसंयोगाविशेषः । गुणैः संयोगः सर्वेषामविशिष्टः साधारणः, तथाप्यसाधारणविषयस्तु प्रत्यात्मं विशिष्टस्तु प्रत्यक्चेतनस्य बौद्धप्रत्ययानुदर्शिनः स्वबुद्धिसंयोगः । स चासाधारणः स्वबुद्धिसंयोगो येन भवति तदेवादर्शनम् । तस्य हेतुरविद्या । तस्य स्वस्वामिशक्तिस्वरूपोपलब्धिहेतोः संयोगस्य हेतुः कारणं अविद्या विपर्ययज्ञानवासनेत्यर्थः ॥

ननु च 'विपर्ययो [2]मिथ्याज्ञानमतद्रूपप्रतिष्ठम्' इत्युक्तम् । तथा[3] 'अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या' इत्युक्तम् । अत्र कथं विपर्ययज्ञानवासनेत्युच्यते । नैष दोषः—अविद्याकार्यत्वाद्वासनायाः

---

1. इदानीन्तनमुद्रितग्रन्थपाठस्तु—'तत्र विकल्पबहुत्वमेतत् सर्वपुरुषाणां गुणानां संयोगे साधारणविषयम् ॥ २३ ॥

यस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोगः—(सू) 'तस्य हेतुरविद्या' इति ॥

2. यो. सू. पा. 1. सू. 8.

3. यो. सू. पा. 2. सू. 5.

[ भाष्यम् ]

विपर्ययज्ञानवासनावासिता च न कार्यनिष्ठां पुरुषख्यातिं बुद्धिः प्राप्नोति । साधिकारा पुनरावर्तते । सा तु पुरुषख्यातिपर्यवसानां कार्यनिष्ठां प्राप्नोति । चरिताधिकारा निवृत्तादर्शना बन्धकारणाभावान्न पुनरावर्तते ॥

अत्र कश्चित् षण्डकोपाख्यानेनोद्घाटयति – मुग्धया भार्यया अभिधीयते—'षण्डक ! आर्यपुत्र ! अपत्यवती मे भगिनी, किमर्थं नाम नाहम्' इति । स तामाह—'मृतस्तेऽहमपत्यमुत्पादयिष्यामि' इति । तथेदं विद्यमानं ज्ञानं चित्तनिवृत्तिं न करोति, विनष्टं करिष्यतीति का प्रत्याशा ॥

[ विवरणम् ]

सैवाविद्येत्युच्यते । प्रलीनेष्वपि कारणेषु साम्यावस्थायामपि सत्यामविद्यावासना पुनः पुनः प्रवृत्तौ प्रधानस्य हेतुर्भवति । न पुनर्विपर्ययः प्राक् बुद्ध्युत्पत्तेरभावात्प्रवृत्तिकारणमिति, तद्वासनैव प्रधानपुरुषसंयोगस्य कारणमित्याख्यायते ॥

तदेवाह—विपर्ययज्ञानवासनावासिता न कार्यनिष्ठां कार्यसमाप्तिम् । कार्यनिष्ठामाह–पुरुषख्यातिमिति । तां बुद्धिर्न प्राप्नोति । पुरुषख्यातिपर्यवसाना हि बुद्धेः करणीयवत्ता । साधिकारा करणीयवती पुनः पुनरावर्तते विपर्ययज्ञानवासनावशात् ॥

सा तु बुद्धिः पुरुषख्यातिपर्यवसाना कार्यनिष्ठां प्राप्नोति । पुनरपि तदेव स्पष्टयति—चरिताधिकारा निवृत्तादर्शनबन्धना कर्मविपाकयोरदर्शनमूलत्वाददर्शनमेव बन्धनम् । अदर्शननिवृत्तौ च बन्धनिवृत्तेर्बन्धकारणाभावाद्बन्धकारणस्यादर्शनस्याभावान्न पुनरावर्तते ॥

अत्र कश्चित्षण्डकोपाख्यानेनोद्घट्टयति । षण्डकः षण्डः । स किल मुग्धया भार्यया अभिधीयते । कथम् ? आर्यपुत्र, मे भगिन्यपत्यवती, किमर्थं नाहं अपत्यवत्यस्मीति । तामाह मृतस्तेऽहमपत्यमुत्पादयिष्यामीति । तथेदं विद्यमानं ज्ञानं चित्तनिवृत्तिं न करोति, नष्टं करिष्यतीति का प्रत्याशा ॥

अयमुद्घट्टयितुरभिप्रायः–अविद्या चेद्बुद्धिपुरुषसंयोगस्य कारणं, तस्याश्च विद्या निवृत्तिहेतुः, ततश्च विद्यमानायां विद्यायां तद्विरोधिन्यविद्या निवर्तते ।

[ भाष्यम् ]

तत्राचार्यदेशीयो वक्ति—ननु बुद्धिनिवृत्तिरेव मोक्षः। अदर्शनकारणाभावात् बुद्धिनिवृत्तिः। तच्चादर्शनं बन्धकारणं दर्शनान्निवर्तते।

तत्र चित्तनिवृत्तिरेव मोक्षः। किमर्थमस्थान एवास्य मतिविभ्रमः॥ २४॥

[ विवरणम् ]

न तु विद्योत्पत्त्यनन्तरमपि चित्तनिवृत्तिः। तत्र यथैव सत्यां विद्यायां न चित्तनिवृत्तिः, तथा नष्टायामपि विद्यायां न निवर्त्स्यति तरामिदानीं षण्डादिव मृतादपत्योपपत्तिः। अत एव कारणादविद्याऽपि न संयोगकारणम्॥

अत्राचार्यदेशीयः परिहारं वक्ति। आचार्यदेशीयग्रहणं पूर्वपक्षस्यासारत्वप्रख्यापनार्थम। उद्घट्टनेनैव प्रत्युत्तरं वदामि इति॥

ननु बुद्धिनिवृत्तिरेव मोक्षः। कथम्? अदर्शनकारणाभावाद्बुद्धिनिवृत्तिः। तच्चादर्शनं बन्धकारणं दर्शनान्निवर्तते, तन्निवृत्तिरेव मोक्षः। किमर्थमस्थाने विभ्रमः। प्रधानपुरुषसंयोगस्य दुःखहेतोरविद्या कारणमिति विस्तरेण प्रतिपादितम्। ततश्च दर्शनाददर्शननिवृत्त्युपपत्तेः पूर्वपक्षमसारं मन्यते॥

ननु चोक्तं विद्यानन्तरमेव बुद्धिर्न निवर्तत इति। उच्यते। विद्यया तावदविद्या निवर्तत एव। नात्र विभ्रमः कार्यः। तस्यां तु निवृत्तायां बुद्धिनिवृत्तिश्च भवत्येव। पुनर्बुद्धिसंयोगस्याविद्याव्यतिरेकेण कारणान्तराभावात्। ततश्च बुद्धिनिवृत्तिरेव मोक्षः॥

यत्तु विद्यानन्तरमेव बुद्धिर्न निवर्तत इति, तदकारणम्। कस्मात्? निमित्तनैमित्तिकयोरनेकप्रकारदर्शनात्। यथा तक्षादिनिमित्ताः प्रासादादयस्तक्षादिषूपरतेष्वपि न निमित्तविरत्या विरमन्ति। भग्नस्य च द्रुमस्य भङ्गानन्तरमेव विशेषादर्शनात्। तथा चित्तस्यापि विमुक्तसायकवदारब्धसंस्कारापरिक्षयात्, तत्संस्कारापेक्षया कंचित्कालं दर्शनेनैवावस्थानं इति। तथा च श्रुतिः—"तस्य[1] तावदेव चिरम्" इति॥ २४॥

---

1. छान्दोग्य. उ. 6. 14-2.

[ भाष्यम् ]

हेयं दुःखं हेयकारणञ्च संयोगाख्यं सनिमित्तमुक्तम् । अतः परं हानं वक्तव्यम्—

[ सूत्रम् ]

**तदभावात् संयोगाभावो हानं तत् दृशेः कैवल्यम् ॥२५॥**

[ भाष्यम् ]

तस्यादर्शनस्याभावात् बुद्धिपुरुषसंयोगाभावः । आत्यन्तिको बन्धनोपरम इत्यर्थः । एतत् हानम् । तत् दृशेः कैवल्यम् । पुरुषस्यामिश्रीभावः, पुनरसंयोगो गुणैरित्यर्थः । दुःखकारणनिवृत्तौ दुःखोपरमो हानम् । तदा स्वरूपप्रतिष्ठः पुरुष इत्युक्तम् ॥ २५ ॥

[ विवरणम् ]

चत्वारो व्यूहाः प्रकृताः । तत्र हेयं दुःखं 'हेयं दुःखमनागतम्' इत्युक्तम् । रोगस्थानीय एको व्यूहो व्याख्यात इत्यर्थः । हेयकारणं च सनिमित्तं संयोगाख्यमुक्तम् । द्वितीयो व्यूहो रोगहेतुस्थानीयो हेयहेतुस्त्वविद्यानिमित्तसहितः प्रधानपुरुषसंयोग उपवर्णितः । उक्तपरिकीर्तनं च सोपपत्तिकोक्तेस्तद्विषयाकाङ्क्षानिवृत्त्यर्थम् ॥

अतः परं हानम् आरोग्यस्थानीयं मोक्षशास्त्रप्रयोजनं वक्तव्यम् । वक्ष्यमाणसंकीर्तनं च श्रोतृबुद्धिसमाधानार्थम् । तदभावात् संयोगाभावो हानं तत् दृशेः कैवल्यम् ॥

तदिति पूर्वप्रकृताया अविद्यायाः प्रत्यवमर्शः । तस्यादर्शनस्य अविद्याया अभावात् बुद्धिपुरुषसंयोगस्य दुःखहेतोः अभावः आत्यन्तिको बन्धनोपरम इत्यर्थः । एतत् हानम् आरोग्यस्थानीयम् । तत् दृशेः कैवल्यं तदेव हानं आत्यन्तिको बन्धनोपरमः दृशेः पुरुषस्य कैवल्यम् । अस्य व्याख्यानं पुरुषस्यामिश्रीभावः पुनरसंयोगो गुणैरित्यर्थः ॥

पदार्थं व्याख्याय वाक्यार्थमिदानीं दर्शयति—दुःखकारणनिवृत्तौ दुःखोपरमो हानम् । तदा स्वरूपप्रतिष्ठः पुरुष इत्युक्तम्—[1]"स्वरूपप्रतिष्ठा वा चितिशक्तिः" इति ॥

---

1. यो. सू. पा. 4. सू. 34.

[ भाष्यम् ]

अथ हानस्य कः प्राप्त्युपाय इति—

[ सूत्रम् ]

**विवेकख्यातिरविप्लवा हानोपायः ॥ २६ ॥**

[ भाष्यम् ]

सत्त्वपुरुषान्यताप्रत्ययो विवेकख्यातिः । सा तु अनिवृत्तमिथ्याज्ञाना प्लवते । यदा मिथ्याज्ञानं दग्धबीजभावं वन्ध्यप्रसवं सम्पद्यते, तदा विधूतक्लेशरजसः सत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्तमानस्य विवेकप्रत्ययप्रवाहो निर्मलो भवति ।

[ विवरणम् ]

ननु च अनियतविपाकस्य कर्मणः सद्भावे कथं हानं स्यात्? पुनरनियतविपाककर्मणा शरीरस्यारम्भ इति । न—अभिहितप्रतिविधानत्वात् । सम्यग्दर्शनेन क्लेशबीजस्य दाहात् कर्मणामनारम्भकत्वमुक्तं दग्धबीजभावापनीततुषशालितण्डुलनिदर्शनेन । तस्मात् न विदुषः कारणाभावाच्छरीरारम्भः ॥ २५ ॥

उक्तस्तृतीयो व्यूहः—आरोग्यस्थानीयो हानं नाम । अधुना चतुर्थं व्यूहं भैषज्यस्थानीयमुपाचिख्यासन्नाह—हानस्य कः प्राप्त्युपायः? इति ॥

ननु च कथं हानस्य प्राप्त्युपाय इति? यावता नैव हानमवस्तुत्वात् प्राप्यम् । बन्धनोपरम एव हि हानम् । नैष दोषः । यत्नसाध्यत्वादविद्यानिवृत्तेः यथा निगलभेदः । सम्यक्ख्यातौ सत्यामविद्यानिवृत्तिरिति हानमवस्त्वपि प्राप्यमित्युपचर्यते ॥

विवेकख्यातिरविप्लवा हानोपायः । का पुनर्विवेकख्यातिरित्याह—सत्त्वपुरुषान्यताप्रत्ययः सत्त्वपुरुषयोः साधर्म्यवैधर्म्ययाथात्म्यावबोध इत्यर्थः । सा तु विवेकख्यातिः अनिवृत्तमिथ्याज्ञाना विप्लवते न स्थिरीभवति, न कार्यक्षमेति ॥

तथा चोक्तम्—"यथा हेमाविपक्कं न विराजते ।
तथाऽपक्वकषायस्य विज्ञानं न प्रकाशते ॥"
तथा "कामग्राहगृहीतस्य ज्ञानमप्यस्य न प्लवः" । इति ॥

यदा तु मिथ्याज्ञानं दग्धबीजभावं दग्धबीजत्वादेव वन्ध्यप्रसवं कार्यारम्भाक्षमं सम्पद्यते, तदा विधूतक्लेशरजसः क्लेशा एव रजः विधूतं यस्य तद्विधूतक्लेशरजः तस्य सत्त्वस्य रागादिमलाकलङ्कितस्य परस्यां वशीकारसंज्ञायां वर्तमानस्य ज्ञानप्रसादमात्रे वर्तमानस्य । तदेवानुवदति—विवेकप्रत्ययप्रवाहः विवेकज्ञाननिरन्तरभावैः निर्मलो भवति ॥

[ भाष्यम् ]

सा विवेकख्यातिरविप्लवा हानोपायः । ततो मिथ्याज्ञानस्य दग्धबीजभावोपगमः पुनश्चाप्रसव इत्येष मोक्षस्य मार्गो हानस्योपाय इति ॥ २६ ॥

[ सूत्रम् ]

**तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥**

[ भाष्यम् ]

तस्येति प्रत्युदितख्यातेः प्रत्याम्नायः । सप्तधेति, अशुद्ध्यावरणमलापगमात् चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्तप्रकारैव प्रज्ञा विवेकिनो भवति ॥

तद्यथा—परिज्ञातं हेयं नास्य पुनः परिज्ञेयमस्ति । क्षीणा हेयहेतवो न पुनरेतेषां क्षेतव्यमस्ति ।

[ विवरणम् ]

सा विवेकख्यातिः इत्थंभूता सती अविप्लवा भवति । यदैवमविप्लवा विवेकख्यातिः ततो मिथ्याज्ञानस्य दग्धबीजभावोपगमो विरुद्धत्वात् । पुनश्चाप्रसवः मिथ्याज्ञानस्य दग्धबीजभावोपगमादेव । तथा चोक्तम्—

"बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः ।
ज्ञानदग्धैस्तथा क्लेशैर्नात्मा सम्पद्यते पुनः ॥" इति ।

सा च तादृशी विवेकख्यातिर्मोक्षस्य मार्गो हानस्योपाय इत्यर्थः ॥ २६ ॥

उत्पन्नसम्यग्दर्शनस्य सम्यग्दर्शनोत्पत्तौ स्वानुभवप्रत्ययलिङ्गप्रकटीकरणार्थमाह—तस्य सप्तधा प्रान्तभूमिः प्रज्ञा । तस्येति प्रत्युदितख्यातेः प्रत्युत्पन्नसम्यग्दर्शनस्य प्रत्याम्नायः प्रत्यवमर्शः । सप्तधेति अशुद्ध्यावरणमलापगमात् । अशुद्धिरेवावरणं क्लेशाः कर्माणि च, तदेव मलं तस्यापगमात् चित्तस्य प्रत्ययान्तरानुत्पादे ममाहमिति च विरुद्धप्रत्ययान्तराणामनुत्पत्तौ । सप्तधेत्यस्य विवरणं सप्तप्रकारैव प्रज्ञा बुद्धिः विवेकिनो भवति ॥

तान् सप्त प्रकारान् क्रमेणाचष्टे—यथा परिज्ञातं हेयं सर्वं दुःखं हेयं ज्ञातमुपपत्तिभिः । नास्य परिज्ञातव्यो दुःखप्रकारः ॥

क्षीणा हेयहेतव इति बहुवचनप्रयोगात् क्लेशाः कर्माणि च अभिधीयन्ते । न पुनरेषां क्लेशकर्मणामल्पमपि सम्यग्दर्शनपावकाद्दग्धबीजा-

[ भाष्यम् ]

साक्षात्कृतं निरोधसमाधिना हानम्। भावितो विवेकख्यातिरूपो हानोपाय इति। एषा चतुष्टयी कार्यविमुक्तिः प्रज्ञायाः ॥

चित्तविमुक्तिस्तु त्रयी चरिताधिकारा बुद्धिगुणा गिरिशिखरकूटच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति। न चैषां प्रतिप्रलीनानां पुनरस्त्युत्पादः प्रयोजनाभावात् इति। एतस्यामवस्थायां गुणसम्बन्धातीतः स्वरूपमात्रज्योतिः पुरुषः केवली शुद्ध इति ॥

[ विवरणम् ]

भावात् क्षे(दुत्प्रेक्षि)तव्यमस्ति। एतेनापि प्रान्तभूमित्वमेवोक्तम्। इत्थं च प्रत्युपस्थितसमीचीनप्रत्ययस्य क्षीणक्लेशत्वात् न क्षेतव्यमस्ति। कृतकरणीयोऽहमिति च सम्यग्दर्शनपरिपाकलिङ्गप्रत्यय उपावर्तते। यथा रोगातुरस्य रोगहेतुक्षये नीरोगोऽहं न पुनर्भैषज्यमस्तीति प्रत्ययः। एवमेव[ष] द्वितीयः प्रज्ञाप्रकार उक्तः ॥

साक्षात्कृतं निरोधसमापत्तिर्हानम्। हानप्रत्यासन्नत्वात् हानतुल्यरूपत्वाच्च निरोधसमाधिरेव हानमित्याख्यायते। तच्च साक्षात्कृतम् अनुभवविषयतामानीतम्। तदिदं कैवल्यं पर्यवसितम् कैवल्यं कर्तव्यमिति च प्रज्ञायते। एषोऽपि प्रान्तभूमिप्रज्ञाप्रकारः तृतीय आख्यातः ॥

भावितः सम्यगभ्यस्ततरः विवेकख्यातिरूपो हानोपायः। सम्यग्दर्शनं यथावदुपस्थितमिति निश्चिता चेत्प्रज्ञा विवेकिनो जायते स एष चतुर्थः प्रज्ञाप्रकारः। इत्येषा चतुष्टयी कार्यविमुक्तिः कार्यात् कर्तव्यात् विमुक्तिर्यस्याः प्रज्ञायाः सा कार्यविमुक्तिः चतूरूपा प्रज्ञा पुरुषार्थकर्तव्यतेत्यर्थः ॥

अथ वा–कार्यस्य विमुक्तिः निवृत्तिः कार्यविमुक्तिः। सा च चतुष्टयी कार्यविमुक्तिरिति समाप्तं वाक्यम्। प्रज्ञा इति परेण संबध्यते। कथम्? प्रज्ञा(प्र)युक्तम्, विवेकख्यातियुक्तं चित्तं प्रज्ञाचित्तं तस्य विमुक्तिः प्रलयः प्रज्ञाचित्तविमुक्तिः। सा त्रयी। तथा च वक्ष्यति–पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः[1] कैवल्यम्' इति ॥

तत्र कार्यविमुक्तिश्चतुष्टयी। पुरूषार्थशून्यत्वं पूर्वमुक्तम्। इदानीं बुद्धिगुणानिवृत्तिः। पुरुषार्थकर्तव्यानां पुरुषार्थशून्यानां प्रतिप्रसवः प्रज्ञाचित्तविमुक्तिस्त्रयी

1. यो. सू. पा. 4. सू. 34.

[ भाष्यम् ]

एतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशल इत्याख्यायते । प्रतिप्रसवेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति, गुणातीतत्वात् इति ॥ २७ ॥

सिद्धा भवति विवेकख्यातिर्हानोपाय इति । न च सिद्धिरन्तरेण साधनं इत्यत इदमारभ्यते—

[ सूत्रम् ]

**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा विवेकख्यातेः ॥ २८ ॥**

[ विवरणम् ]

व्याख्यायते । यथा—चरिताधिकाराः निवृत्तकर्तव्याः बुद्धिगुणाः सत्त्वादयो बुद्ध्याकारावस्थिताः प्रळयाभिमुखाः । किमिव? गिरिशिखरकूटच्युता इव ग्रावाणो निरवस्थानाः कर्तव्याभावात् स्वकारणे अहंकारे प्रलयाभिमुखाः सह तेन बुद्धिसंस्थानेन कार्येण, अथवा, स्वकारणेनाहङ्कारेण कुशलं पुरुषं प्रति स्वकारणमप्यव्यक्तभात्रं प्रतिपद्यत इति सह तेनास्तं गच्छन्ति इत्युच्यते । एषा प्रथमा प्रज्ञाचित्तविमुक्तिः ॥

न चैषां प्रतिप्रलीनानां पुरुषं प्रति पुनरस्त्युत्पादः प्रयोजनाभावात् । विमुक्तं हि चतुर्विधं कार्यम । एषा द्वितीया प्रज्ञाचित्तविमुक्तिः ॥

एतस्यामवस्थायां चरितार्थगुणप्रलयावस्थायां गुणसम्बन्धातीतः गुणसंबन्धो द्रष्टृदृश्यलक्षणः तमतीतः । स्वरूपमात्रज्योतिः दृशिस्वरूपमात्रमेव ज्योतिः । पुरुषः केवली शुद्ध इति तृतीया प्रज्ञाचित्तविमुक्तिरिति ॥

एतां सप्तविधां प्रान्तभूमिं प्रान्ताः प्रगतावसानाः भूमयः अवस्थाः यस्यास्तां प्रान्तभूमिं प्रज्ञामनुपश्यन् सम्यग्दर्शनलिङ्गपरिपाकभूतामीक्षमाणः पुरुषः कुशल इत्याख्यायते । कुशल इति सङ्केतः । प्रतिप्रसवेऽपि प्रलयेऽपि चित्तस्य मुक्तः कुशल इत्येव भूतपूर्वगत्या कुशल इत्येव भवति । कुतः कौशलं तस्येत्याह–गुणातीतत्वात् इति । गुणानतीतो हि कुशलः ॥ २७ ॥

सिद्धा विवेकख्यातिः समधिगता विवेकख्यातिः सप्तविधप्रान्तभूमिप्रज्ञाफलावसाना हानस्योपाय इति । न च सिद्धिः अन्तरेण साधनम्, इत्यत इदं विवेकख्यातिसिद्धिसाधनार्थमारभ्यते—योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिराविवेकख्यातेः ॥

[ भाष्यम् ]

योगाङ्गान्यष्टावभिधायिष्यमाणानि । तेषामनुष्ठानात् पञ्चपर्वणो विपर्ययस्याशुद्धिरूपस्य क्षयो नाशः । तत्क्षये सम्यग्ज्ञानस्याभिव्यक्तिः । यथा यथा च साधनान्यनुष्ठीयन्ते तथा तथा तनुत्वमशुद्धिरापद्यते । यथा यथा च क्षीयते तथा तथा क्षयक्रमानुरोधिनी ज्ञानस्यापि दीप्तिर्विवर्धते । सा खल्वेषा विवृद्धिः प्रकर्षमनुभवति आ विवेकख्यातेः, आ गुणपुरुषस्वरूपविज्ञानादित्यर्थः ।

[ विवरणम् ]

योगाङ्गानुष्ठानादेव विवेकख्यातिरिति नावदिधारयिषितम्, गुरूपासनधर्मप्रभृतिकेभ्योऽपि विवेकख्यातेः सिद्धिरिष्यत एव । किं तर्हि? साधनमात्रमन्तरेण न भवत्येवेत्यवधारयिष्यते । न पुनर्योगाङ्गानुष्ठानमेव साधनं, योगाङ्गानुष्ठानात्तु भवत्येव विवेकख्यातिसिद्धिरिति । तथा चाचार्यैरुक्तम्—'योगस्तत्त्वज्ञानार्थः' इति ॥

योगाङ्गान्यभिधायिष्यमाणानि तेषामनुष्ठानं योगाङ्गानुष्ठानम् तस्मात् अशुद्धेः क्लेशाख्यायाः क्षयः, तत्क्षये दीप्तिः प्रकर्षः । कियदवसानेत्याह—आ विवेकख्यातेः भवतीत्युपस्कारः ॥

स्वयमेव भाष्यकारः स्पष्टतरं विवृणोति—योगाङ्गान्यष्टावभिधायिष्यमाणानि । तेषामनुष्ठानात् पञ्चपर्वणो विपर्ययस्य अशुद्धिरूपस्य क्षयः नाशः, तत्क्षये सम्यग्दर्शनस्याभिव्यक्तिः दीप्तिः । कथमेतद्भवतीत्याह—यथा यथा च साधनान्यनुष्ठीयन्ते तथा तथा तनुत्वमशुद्धिरापद्यते । तथा च मनुरभाषिष्ट—

"प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषान् ।
प्रत्याहारेण संसर्गान् ध्यानेनानैश्वरान् गुणान् ॥" इति ।

यथा यथा चाशुद्धिः क्षीयते तथा तथा तत्क्षयक्रमानुरोधिनी दिवसकरस्येव शिशिरावसाने ज्ञानस्य दीप्तिर्विवर्धते । सा खल्वियं विवृद्धिः प्रकर्षमनुभवति । किमवसानम्? तदाह—आ विवेकख्यातेः । तस्य व्याख्यानम्—आ गुणपुरुषस्वरूपविवेकज्ञानादित्यर्थः । सत्त्वपुरुषान्यताख्यातिपर्यवसानैव शुद्धिः ॥

[ भाष्यम् ]

योगाङ्गानुष्ठानमशुद्धेः वियोगकारणम् । यथा परशुः छेद्यस्य । विवेकख्यातेस्तु प्राप्तिकारणं, यथा धर्मः सुखस्य । नान्यथा कारणम् । कति चैतानि कारणानि शास्त्रे भवन्ति ? । नवैवेत्याह । तद्यथा—

उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः ।
वियोगान्यत्वधृतयः कारणं नवधा स्मृतम् ॥ इति ।

तत्रोत्पत्तिकारणं, मनो भवति विज्ञानस्य । स्थितिकारणं, मनसः पुरुषार्थता, शरीरस्येवाऽऽहार इति । अभिव्यक्तिकारणं य(था)दा रूपस्यालोकः तदा रूपज्ञानम् । विकारकारणं मनसो विषयान्तरम्, यथाऽग्निः पाक्यस्य । प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य ।

[ विवरणम् ]

योगाङ्गानुष्ठानमशुद्धेः क्षयकारणं विवेकख्यातेश्च प्राप्तिकारणमिति, द्विधैव कारणम्, धर्मपरशुद्वयस्थानीयमेकमुभयकारणं, नान्यथा भवतीति । तत्र कारणप्रसङ्गेन शास्त्रप्रसिद्धानि कारणानि व्याचष्टे—कति चैतानि कारणानि शास्त्रे भवन्ति ? नवैवेत्याह । तद्यथा—तानि श्लोकेनैव कथयति—

उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः ।
वियोगान्यत्वधृतयः कारणं नवधा स्मृतम् ॥ इति ।

तत्प्रविवेकार्थमुदाहरणानि प्रस्ताविष्यन्ते । तत्रोत्पत्तिकारणं मनो भवति [विज्ञानस्य], मनसो हि वृत्तिः ज्ञानं, यथा जलमूर्मीणाम् ॥

स्थितिकारणं स्थितेः कारणम् मनसः पुरुषार्थता । भोगापवर्गार्थत्वेन हि मनसः स्थितिः । शरीरस्य यथा स्थितिकारणमाहारः ॥

अभिव्यक्तेः कारणं रूपस्यालोकः । तदा रूपज्ञानम् । न ह्यालोकेनानभिव्यक्ते रूपेऽवबोधः ॥

विकारस्य कारणं मनसो विषयान्तरम् । विषयान्तरसन्निधानेन हि मनो विक्रियामासीदति । यथा अग्निः पाकस्य । यः पाकाख्यो विकारस्तस्य पाकस्य विकाररूपस्याग्निः कारणं यथा ॥

प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य । प्रत्ययस्य फलवतः प्रमाणस्य कारणमित्यर्थः । पूर्वत्र तु 'भवति विज्ञानस्य' इति ज्ञानस्योपादानकारणं विवक्षितम् ॥

[ भाष्यम् ]

प्राप्तिकारणं योगाङ्गानुष्ठानं विवेकख्यातेः । वियोगकारणं तदेवाशुद्धेः । अन्यत्वकारणं यथा सुवर्णस्य सुवर्णकारः । एवमेकस्य स्त्रीप्रत्ययस्याविद्या मूढत्वे, द्वेषो दुःखत्वे, रागः सुखत्वे, तत्वज्ञानं माध्यस्थ्ये । धृतिकारणं शरीरमिन्द्रियाणाम् । तानि च तस्य । महाभूतानि शरीराणाम् । तानि च परस्परम् । सर्वेषां तैर्यग्यौनमानुषदैवतानि च, परस्परार्थत्वादित्येवं नव कारणानि ।

[ विवरणम् ]

प्राप्तिकारणं योगाङ्गानुष्ठानं विवेकख्यातेः धर्म इव सुखस्य । तदेवाशुद्धेर्वियोगकारणं परशुरिव छेद्यस्य ॥

अन्यत्वकारणं यथा सुवर्णकारः सुवर्णस्य । सुवर्णं हि भित्त्वा वर्धमानकमन्यं करोति । तथा वर्धमानकं भित्त्वा अन्यदाभरणान्तरं करोति । तथाऽन्यदिति ॥

एवमेकस्य 'स्त्री' इति प्रत्ययस्यापि अविद्या कारणं मूढत्वे । द्वेषस्तस्यैव स्त्रीप्रत्ययस्य दुःखत्वे कारणम् । तथा रागः सुखत्वे । तथा तस्यैव माध्यस्थ्ये हेयोपादेयशून्यतायां विवेकयुक्तं ज्ञानं कारणम् । एवमेकः स्त्रीप्रत्ययः सुवर्णवदनेकधा मूढत्वदुःखत्वसुखत्वमाध्यस्थ्यादिभेदैर्भिद्यते ॥

धृतेः कारणम् । धारणं धृतिः, तस्याः कारणं शरीरमिन्द्रियाणाम् । न हि शरीरमप्राप्येन्द्रियाणि धृतिं लभन्ते । तानि चेन्द्रियाणि तस्य शरीरस्य धृतिकारणं भवन्ति । इन्द्रियवृत्तिद्वारेण हि शरीरं ध्रियते ॥

तथा महाभूतान्याकाशादीनि शरीराणां धृतिकारणम् । महाभूतारब्धानि हि शरीराणि ब्रह्मादिस्तम्बावसानानि । [तानि च] परस्परम् उपकार्योपकारकत्वद्वारेण धृतिकारणम् ॥

तथा सर्वेषां पदार्थानां तैर्यग्यौनमानुषदैवतानि धृतिकारणम् । कुतः? परस्परार्थत्वात् । तैर्यग्यौनं मानुषदैवतयोर्वाहनदोहनहविरादिभिरुपकुर्वत् धृतिकारणम् ॥

तथा मानुषं इज्यारक्षणादिभिर्दैवतैर्यग्यौनयोः धृतिकारणम् । तथा दैवमितरयोः शीतोष्णप्रवर्षणादिना धृतिकारणम् ॥

[ भाष्यम् ]

तानि च यथाऽर्थसम्भवं पदार्थान्तरेष्वपि योज्यानि । योगाङ्गानुष्ठानं तु द्विधैव कारणत्वं लभत इति ॥ २८ ॥

तत्र योगाङ्गान्यवधार्यन्ते—

[ सूत्रम् ]

**यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि ॥ २९ ॥**

[ विवरणम् ]

एवं वर्णाश्रमाणामप्यन्योन्योपकारेण धृतिकारणत्वम् । परस्परोपाश्रयेण हि जगदखिलमपि ध्रियते । एवं नवैव कारणानि इति कारणान्तरं प्रतिषेधति । **तानि च यथाऽर्थसंभवं** यो योऽर्थसंभवः **पदार्थान्तरेष्वप्यनुदाहृतेषु** तथा **योज्यानि । योगाङ्गानुष्ठानं तु द्विधैव कारणत्वं लभते** । तथा च व्याख्यातम् ॥ २८ ॥

कानि पुनस्तानि योगाङ्गानि? येषामनुष्ठानं द्विधा कारणत्वं लभत इति । **तत्र योगाङ्गान्यवधार्यन्ते—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टावङ्गानि** ॥

ननु च योगशास्त्रान्तरेष्वासनादीन्येव षडङ्गानि । तद्यथा—**'षडङ्गो योग उच्यते'** इत्यादि । किञ्च—साक्षादासनादीन्येव समाधेरुपकुर्वन्ति, न यमनियमौ ॥

नैष दोषः । यमनियमवतोर्योगाधिकारोपपत्तेः । न हि यथाकामचारिणां योगाधिकारः । **'नाविरतो दुश्चरितान्नाशान्तः'**[1] इति श्रुतेः । तथा—[2]**"येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम्"** इत्यादि चाथर्वणे । तथा गीतायाम् [3]**'ब्रह्मचारिव्रते स्थितः'** इति । तस्माद्यमनियमयोरप्यङ्गत्वम् ॥

यमनियमयोश्च यमस्य प्रथमोपादानं प्राधान्यख्यापनार्थम् । यमस्य हि प्राधान्यं सर्वत्र सिद्धम् । यमनियमयुक्तस्याधिकृतस्य योगिन आसनाद्यङ्गानां पूर्वपूर्वे स्थिरपदप्राप्तस्योत्तरोत्तरानुष्ठानं प्राप्तम् । न हि प्रथमं सोपानमनारुह्योत्तरमारोढुं शक्यम् ॥

---

1. कठोपनिषत् 2. 24.
2. प्रश्नोपनिषत् 1. 15.
3. भगवद्गीता 6. 14.

[ भाष्यम् ]

यथाक्रममेषामनुष्ठानं स्वरूपं च वक्ष्यामः ॥ २९ ॥

तत्र—

[ सूत्रम् ]

**अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः ३० ॥**

[ भाष्यम् ]

तत्राहिंसा सर्वथा सर्वदा सर्वभूतानामनभिद्रोहः । उत्तरे च यमनियमास्तन्मूलाः तत्सिद्धिपरतयैव तत्प्रतिपादनाय प्रतिपाद्यन्ते । तदवदातरूपकरणायैवोपादीयन्ते । तथा चोक्तम्—स खल्वयं ब्राह्मणो यथा यथा व्रतानि बहूनि समादित्सते, तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यो निवर्तमानः तामेवावदातरूपामहिंसां करोति ॥

[ विवरणम् ]

यदन्यत्रोच्यते—

"स्थानासनविधानानि योगस्य विषयोऽपि वा ।
व्याक्षेपजनकाः सर्वे न ते योगस्य हेतवः ॥
सर्वदोषपरित्यागः समाधिश्चेति तद्द्वयम् ॥
निर्णय[यात् ]योगहेतुः स्याद्भवति वान्यन्न वा [भवत्वन्यन्न वा भवेत् ] ॥" इति ।

तत्समाधिसर्वदोषपरित्यागयोः प्राधान्यात् तत्स्तुत्यर्थम्, नासनाद्यङ्गप्रतिषेधार्थम् । **यथाक्रममेषां** यमादीनाम**नुष्ठानं स्वरूपं च वक्ष्यामः**—स्वरूपे हि अनवगते नानुष्ठातुं शक्यमिति ॥ २९ ॥

तत्र तेषु यमादिषु प्रथमं यमा व्याख्यायन्ते—**अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः** । **तत्राहिंसा सर्वथा** सर्वात्मना सर्वप्रकारेण, **सर्वभूतानामनभिद्रोहः** सर्वभूतानां स्थावरजङ्गमानां अनभिद्रोहोऽपीडनम् ॥

यमनियमानामहिंसा प्रधानभूता कायवाङ्मनसैः सर्वात्मना करणीयेति दर्शयति—**उत्तरे च यमाः** सत्यादयः **तन्मूलाः** अहिंसाप्रयोजनाः अहिंसार्थाः **तत्सिद्धिपरतयैव** अहिंसासिद्धितत्परत्वेन **प्रतिपाद्यन्ते** । किमुक्तं भवतीत्याह—**तदवदात[रूप]करणायोपादीयन्ते** अहिंसाशुद्धिप्रतिपादानायोपादीयन्ते ॥

**तथा** ह्युक्तम्—**स खल्वयं ब्राह्मणो यथा यथा बहूनि व्रतानि समादित्सते तथा तथा प्रमादकृतेभ्यो हिंसानिदानेभ्यः** हिंसामूलेभ्यः हिंसाकारणेभ्यः **निवर्तमानस्तामेवावदातरूपामहिंसां करोति** इति ॥

[ भाष्यम ]

सत्यं यथार्थे वाङ्मनसे । यथा दृष्टं यथाऽनुमितं तथा वाक् मनश्चेति । परत्र स्वबोधसंक्रान्तये वागुक्ता, सा यदि न वञ्चिता भ्रान्ता वा प्रतिपत्तिवन्ध्या वा भवेदिति । एषा सर्वभूतोपकारार्थं प्रवृत्ता न भूतोपघाताय । यदि चैवमप्यभिधीयमाना भूतोपघातपरैव स्यान्न सत्यं भवेत्, पापमेव भवेत् । तेन पुण्याभासेन पुण्यप्रतिरूपकेण कष्टं तमः प्राप्नुयात् ॥

[ विवरणम् ]

सत्याद्यनेकव्रतोपादानात् अन्येषामविरुद्धव्रतानां चोपादानात् हिंसाकारणान्निवृ(त्ति)त्तस्य हिंसाकारणादुपरतपरिस्फुरणस्य अहिंसैवावदाततरा कारणाभावादुपजायते । यथा भिक्षादिव्रतानुष्ठाने कृष्यादिहिंसानिदाननिवृत्तिः ॥

सत्यं यथा दृष्टं यथा अनुमितं यथा श्रुतं तथा वाङ्मनश्चेति । तत्सत्यम् । एतदुक्तं भवति—अभ्रान्तैः प्रमाणैः यथार्थावगमः सञ्जातः, तमवगमं तथैव परत्र संक्रमयितुं वाङ्मनसाभ्यां तथैव प्रवर्तनं सत्यमिति ॥

तदेवाह—परत्र स्वबोधसंक्रान्तये वागुक्ता । सा यथाऽवगतार्थाऽपि यदि न वञ्चिता । यथा सत्यमेव परविप्रलम्भनार्थं प्रयुक्तं देशकालाद्यपेक्षया क्वचिदनृतायते, यथा युधिष्ठिरस्य अश्वत्थामा हतः स कुञ्जर इति ॥

भ्रान्ता वा यथा सत्यमिति मन्यमानोऽनृतमेव वदति । प्रतिपत्तिवन्ध्या वा—श्रोतुः प्रतिपादनायापर्याप्ता—यथा सन्दिग्धं वाक्यमगृह्यमाणप्रकरणादिविशेषम् । कष्टशब्दो वा अजावय इत्यादिः ॥

तस्मादेवमादिदोषरहिता एषा वाक् ऋजुमनस्सहचारिणी सर्वभूतोपकारार्थं प्रवृत्ता सत्यतामास्कन्दति । न भूतोपघाताय प्रवृत्ता यथार्थबलाधानाऽपि सत्यतामापद्यते ॥

यदि चैवमपि उक्तेन प्रकारेण निर्दोषापि अभिधीयमाना भूतोपघातपरैव स्यात्, न सत्यं भवेत्, न हि प्राणिघातालम्बिनी वञ्चनादिदोषत्रयविप्रोषिताऽपि सत्यत्वं प्रतिपद्यते । पापमेव भवेत् ॥

तदेवाह—तेन पुण्याभासेन पुण्यप्रतिबिम्बकेन सत्यकौशिकवचनदेशीयेन कष्टं तमः प्राप्नुयात् । तस्मात् परीक्ष्य सर्वहितं सत्यं ब्रूयात् ॥

[ भाष्यम् ]

स्तेयम् अशास्त्रपूर्वकं द्रव्याणां परतः स्वीकरणं, तत्प्रतिषेधः पुनः अस्पृहारूपमस्तेयमिति । ब्रह्मचर्यं गुप्तेन्द्रियस्योपस्थस्य संयमः । विषयाणामर्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणं अपरिग्रह इत्येते यमाः ॥ ३० ॥

ते तु—

[ सूत्रम् ]

**जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् ॥३१॥**

[ भाष्यम् ]

तत्राहिंसा जात्यवच्छिन्ना—मत्स्यबन्धकस्य मत्स्येष्वेव नान्यत्र हिंसा ।

[ विवरणम् ]

उक्तं च—

"सत्यं ब्रूयात् प्रियं ब्रूयान्न ब्रूयात् सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥" इति ।

स्तेयं अशास्त्रपूर्वं द्रव्याणां परतः स्वीकरणं स्पृहानिमित्तम् । यत् स्तेयं तत्प्रतिषेधस्तु न स्पृहालूनां सम्भवतीति तस्यैव स्तेयस्य प्रतिषेधस्तु । सः अस्पृहारूपमस्तेयमुच्यते ॥

ब्रह्मचर्यं गुप्तेन्द्रियस्य गुप्तान्येन्द्रियस्य पुरुषस्य अब्रह्मचर्यार्थवाङ्मनसादि-वृत्तिशून्यस्य उपस्थेन्द्रियसंयम इति ॥

विषयाणामार्जनरक्षणक्षयसङ्गहिंसादोषदर्शनादस्वीकरणम् अनुपा-दानं अपरिग्रहः । न पुनरसामर्थ्येनास्वीकरणम् । इत्येते यमाः ॥ ३० ॥

अन्यधर्माणां जातिदेशकालाद्यवच्छेदेनानुष्ठानादिहापि तथा प्रसङ्ग इति तत्प्रतिषेधायाह—एते त्विति । एते त्वहिंसादयो महाव्रतसंज्ञाः संन्यासवतामनुष्ठा-नीयाः । कीदृशास्ते महाव्रतनामान इति—जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् । महच्च तत् व्रतं च महाव्रतम् । महत्त्वं च सार्वभौमत्वम् ॥

कथं पुनर्जात्याद्यनवच्छिन्नत्वमेषामिति अनवच्छेदप्रतिपादनाय व्यतिरेकेण अहिंसामुदाहरति—तत्र अहिंसा जात्यवच्छिन्ना मत्स्यबन्धकस्य मत्स्येष्वेव नान्यत्र मत्स्यजातेर्हिंसा । सा च मत्स्यजात्यवच्छिन्ना मत्स्यभूमिमनश्नुवाना वर्तत इति असार्वभौम्येव ॥

[ भाष्यम् ]

सैव देशावच्छिन्ना–न तीर्थे हनिष्यामीति। सैव कालावच्छिन्ना–न चतुर्दश्यां न पुण्येऽहनि हनिष्यामीति। सैव त्रिभिरुपरतस्य समयावच्छिन्ना–देवब्राह्मणार्थे नान्यथा हनिष्यामीति। यथा च क्षत्रियाणां युद्ध एव हिंसा नान्यत्रेति। एभिर्जातिदेशकालसमयैरनवच्छिन्ना अहिंसादयः सर्वथैव परिपालनीयाः। सर्वभूमिषु सर्वविषयेषु सर्वथैवाविदितव्यभिचाराः सार्वभौमा महाव्रतमित्युच्यन्ते॥ ३१॥

[ सूत्रम् ]

**शौचसंतोषतपस्स्वाध्यायेश्वरप्रणिधानानि नियमाः॥ ३२॥**

[ भाष्यम् ]

तत्र शौचं मृज्जलादिजनितं मेध्याभ्यवहरणादि च बाह्यम्। आभ्यन्तरं चित्तमलानां आक्षालनम्। संतोषः संनिहितसाधनाधिकादनुपादित्सा...

[ विवरणम् ]

सैवाहिंसा देशावच्छिन्ना कथम्? न तीर्थे प्रयागादौ हनिष्यामीति। तीर्थेष्वहिंसा च तीर्थादन्यं देशं न व्यश्नुत इति असार्वभौमी॥

सैव च कालावच्छिन्ना यथा—न चतुर्दश्यां न पुण्येऽहनीति। चतुर्दश्यादि-कालादन्यं कालं न व्यश्नुत इति साप्यसार्वभौमी॥

त्रिभिः अपि जातिदेशकालैः उपरतस्य तस्यैव मत्स्यबन्धकस्य समयावच्छिन्ना समयः कर्तव्यतानियमः, कथम्? देवब्राह्मणार्थं हनिष्यामि नान्यथेति, श्राद्धादिसमयभूमिमनश्नुवाना वर्तत इति साऽपि न सार्वभौमी। यथा च क्षत्रियस्य युद्ध एव हिंसा नान्यत्रेति समयावच्छिन्नस्यैवोदाहरणम्॥

ये पुनरेते यमाः जातिदेशकालसमयैरनवच्छिन्ना अहिंसादयः, ते सर्वथैव परिपालनीयाः सर्वभूमिषु जात्यादिषु सर्वविषयेषु सर्वप्राणिषु सर्वथैवाविदितव्यभिचाराः विना व्यभिचारेण, ते चेत्थं विशिष्टाः सार्वभौमा महाव्रतमित्युच्यन्ते॥ ३१॥

शौचसन्तोषतपस्स्वाध्यायेश्वरप्राणिधानानि नियमाः। तत्र शौचं मृदादिजनितम् आदिशब्दादुदकं च। मेध्याभ्यवहरणानि च घृतपय-आदीनि भक्षणानि। चशब्दात् मेध्यदर्शनश्रवणादीनि च। बाह्यमेतच्छौचम्॥

आभ्यन्तरमधुनोच्यते—चित्तमलानां कामक्रोधादीनां तत्प्रातिपक्षभावनासलिलैः आक्षालनम्॥

[ भाष्यम् ]

कस्यानुपादित्सा । तपो द्वन्द्वसहनम् । द्वन्द्वाश्च जिघत्सापिपासे, शीतोष्णे, स्थानासने, काष्ठमौनाकारमौने च, व्रतानि चैषां यथायोगं कृच्छ्रचान्द्रायण-सान्तपनादीनि । स्वाध्यायो मोक्षशास्त्राणामध्ययनं प्रणवजपो वा । ईश्वरप्रणिधानं तस्मिन् परमगुरौ सर्वकर्मार्पणम् ॥

शय्यासनस्थोऽथ पथि व्रजन् वा स्वस्थः परिक्षीणवितर्कजालः ।
संसारबीजक्षयमीक्षमाणः स्यान्नित्ययुक्तोऽमृतभोगभागी ॥

यत्रेदमुक्तम्—'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इति ॥ ३२ ॥

[ विवरणम् ]

सन्तोषः सन्निहितसाधनाश्वासात् सन्निहितादाश्वासनिमित्ताद् अधिक-साधनानुपादित्सा सन्निहितमात्रादतृप्तौ सत्यामप्यलंप्रत्ययः ॥

तपो द्वन्द्वसहनम् । द्वन्द्वश्च जिघत्सापिपासे । जिघत्सा अत्तुमिच्छा । पातुमिच्छा पिपासा । जिघत्सापिपासासहनं तपः । स्वरूपेणैव [वा] ते जिघत्सापिपासे] अल्पीयःपानाशननिमित्ते तपः । शीतोष्णे अप्रतिक्रियमाणे अल्पप्रतिक्रिये वा तपः । स्थानासने [1]'तिष्ठेदहनि रात्रावासीत' इति स्मृतिप्रस्थानम् । काष्ठमौनाकाष्ठमौने । काष्ठमौनं हस्तप्रयोगादिरहितम् । अकाष्ठमौनं हस्तादिप्रयोगयुक्तं सम्भाषणादिरहितम् ॥

व्रतानि चैषां योगिनां यथायोगं यथासम्भवम् । होमादिविरुद्धधर्मविरुद्ध-प्रतिषेधार्थं यथायोगमित्याह । कानि तानि? कृच्छ्रादीनि । कृच्छ्रं प्राजापत्यादि । त्र्यहं प्रातः त्र्यहं सायं त्र्यहमद्यादयाचितम् । उपोषणं त्र्यहम्' इति । चान्द्रायणं यवमध्यपिपीलिकामध्यादि । 'एकैकं वर्धयेत् ग्रासम्' इत्यादिस्मृतिः । सान्तपनम्—

'गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
एकरात्रोपवासश्च कृच्छ्रः सान्तपनः स्मृतः ॥ '

एतान्येव द्रव्याणि त्रिरभ्यस्तानि महासान्तपनम् । आदिग्रहणं पराकादि-प्रत्युपादानार्थम् । स्वाध्यायो मोक्षशास्त्राध्ययनम् उपनिषदाद्यध्ययनं प्रणवजपो वा । [2]प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्चेति ॥ ३२ ॥

1. गौतमधर्मसूत्रं प्र 3. अ. 8. सू. 6.
2. अत्र मध्ये किञ्चित् त्रुटितं कोशे ।

[ भाष्यम् ]

एतेषां यमनियमानाम्—

[ सूत्रम् ]

**वितर्कबाधने प्रतिपक्षभावनम् ॥ ३३ ॥**

[ भाष्यम् ]

यदाऽस्य ब्राह्मणस्य हिंसादयो वितर्का जायेरन्, हनिष्याम्यहमपकारिणम्, अनृतमपि वक्ष्यामि, द्रव्यमप्यस्य स्वीकरिष्यामि, दारेषु चास्य व्यवायी भविष्यामि, परिग्रहेषु चास्य स्वामी भविष्यामीति, एवमुन्मार्गप्रवणवितर्कज्वरेणातिदीप्तेन बाध्यमानः तत्प्रतिपक्षान् भावयेत्। घोरेषु संसाराङ्गारेषु पच्यमानेन मया शरणमुपागतः सर्वभूताभयप्रदानेन योगधर्मः। स खल्वहं त्यक्त्वा वितर्कान् पुनः पुनस्तानाददानस्तुल्यः श्ववृत्तेनेति भावयेत्।

[ विवरणम् ]

तत्र यमनियमानां विरुद्धास्तर्काः वितर्काः, तैः बाधने सति प्रतिपक्षान् भावयेत् अभिधास्यमानेन प्रकारेण। अप्रतिभाव्यमाना हि वितर्का योगिनं हिंसादिषु प्रणिधापयेयुः ॥

यदा अस्य ब्राह्मणस्य वितर्का हिंसादयो जायेरन्। तत्राहिंसादिवितर्का ये वा हिंसादयस्ते वितर्काः कीदृशा इति? तत्राहिंसाया वितर्कः हिंसा हनिष्याम्यपकारिणमिति। तथा सत्यस्य अनृतं वदिष्यामीति विरुद्धः प्रत्ययो वितर्कः। तथैवास्तेयस्य वितर्कः द्रव्यमस्य स्वीकरिष्यामीति। तथा ब्रह्मचर्यस्य वितर्कः दारेषु चास्य गमिष्यामीति। तथैवापरिग्रहस्य वितर्कः परिग्रहेषु चास्य स्वामी भविष्यामीति ॥

अस्येत्येतत् सर्वत्र हिंसादिषु अनुगमप्रतिपादनार्थम्। द्रव्यमस्य स्वीकरिष्यामीति परद्रव्यस्यात्मसंबन्धकरणम्। परिग्रहेषु चास्य स्वामीति परसंबन्धिष्वेव द्रव्येषु स्वयं स्वामीति। यथा कुमारनरपतिसचिवादीनाम् ॥

इत्थमुन्मार्गहारिणा वितर्कज्वरेण दीप्तेन बाध्यमानस्तत्प्रतिपक्षान् भावयेत् ॥

कथं भावयेदिति? घोरेषु संसाराङ्गारेषु पच्यमानेन मया शरणमभ्युपगतः सर्वभूताभयप्रदानेन योगधर्मः। स खल्वहं त्यक्त्वा वितर्कान् हिंसादीन् पुनस्तानाददानस्तुल्यः श्ववृत्तेनेति। शुन इव वृत्तं यस्य सः श्ववृत्तः। श्ववद्वा वृत्तः श्ववृत्तः। तेन तुल्य इति भावयेत्। यथा

यथा श्वा वान्तावलेही तथा त्यक्तस्य पुनराददान इति। एवमादि सूत्रान्तरेऽपि योज्यम् ॥ ३३ ॥

[ सूत्रम् ]

**वितर्का हिंसादयः कृतकारितानुमोदिता लोभक्रोधमोहपूर्वका मृदुमध्याधिमात्रा दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् ॥ ३४ ॥**

[ भाष्यम् ]

तत्र हिंसा तावत्—कृता कारिता अनुमोदितेति त्रिधा। एकैका पुनस्त्रिधा—लोभेन मांसचर्मार्थेन, क्रोधेन अपकृतमनेनेति, मोहेन धर्मो मे भविष्यतीति। लोभक्रोधमोहाः पुनस्त्रिविधाः—मृदुमध्याधिमात्रा इति।

[ विवरणम् ]

श्वा वान्तावलेही तथा त्यक्तस्य पुनरादानं कुर्वन् इत्युपस्कारः। तेन पुरुषेण तुल्योऽहमिति। तथा कथमहं भवेयं, न युक्तमेतदिति भावयेत् ॥

इत्येवमादि सूत्रान्तरेऽपि नियमसूत्रेऽपि योज्यम्। शौचादीनां प्रत्येकं वितर्का द्रष्टव्याः शौचं न करिष्यामीत्यादयः। भाष्ये तु यमानामेव प्रदर्शनम्, तेषामवश्यकर्तव्यत्वात्, अकरणे च दोषगौरवात्, अत्यादरार्थम् ॥ ३३ ॥

वितर्काणां स्वरूपं भेदः प्रभवहेतुः फलं च सूत्रेणैव प्रदर्श्यते—वितर्का हिंसादय इति स्वरूपम्। कृतकारितानुमोदिता इति भेदः। लोभक्रोधमोहपूर्वका इति प्रभवहेतुः। मृदुमध्याधिमात्रा इति मन्दमध्योत्तमदोषत्वम्। दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम्। फलं वा तेनैव व्याख्यायते ॥

तत्र हिंसैव एका उदाह्रियते सर्वेषां प्रदर्शनाय। सा कृता कारिता अनुमोदितेति त्रिविधा। कृता स्वव्यापारेण। कारिता प्रयोज्यव्यापारेण। अनुमोदिता परेषां व्यापारेण मनसा अनुज्ञाता ॥

एकैका पुनस्त्रिधा। कथम्? लोभेन, मांसचर्मा(स्थि)र्थी मृगं हिनस्ति। क्रोधेन, अपकृतमनेनेति। मोहेन, धर्मो मे भविष्यतीति। एवमेते नव भेदाः। एकैक(त्वेन)स्य पुनस्त्रिधा भेदः। कथम्? लोभक्रोधमोहाः पुनस्त्रिधा

[ भाष्यम् ]

एवं सप्तविंशतिर्भेदाः भवन्ति हिंसायाः । मृदुमध्याधिमात्राः पुनस्त्रिधा— मृदुमृदुः, मध्यमृदुः, तीव्रमृदुः इति । तथा मृदुमध्यो मध्यमध्यः तीव्रमध्य इति । तथा मृदुतीव्रो मध्यतीव्रोऽधिमात्रतीव्र इति । एवमेकाशीतिभेदा हिंसा भवति । सा पुनर्नियमविकल्पसमुच्चयभेदादसङ्ख्येया, प्राणभृद्भेदस्यापरिसङ्ख्येयत्वादिति । एवमनृतादिष्वपि योज्यम् ॥

ते खल्वमी वितर्का दुःखाज्ञानानन्तफला इति प्रतिपक्षभावनम् । दुःखमज्ञानं च अनन्तफलं येषामिति प्रतिपक्षभावनम् । तथा च हिंसकस्तावत् प्रथमं वध्यस्य वीर्यमाक्षिपति । ततश्च शस्त्रादिनिपातनेन दुःखयति । ततो जीवितादपि मोचयति । ततो वीर्याक्षेपादस्य चेतनाचेतन-

[ विवरणम् ]

मृदुमध्याधिमात्रा इति । [एकैकं पुनः] त्रिधा भवति—मृदुमृदुर्मध्यमृदुस्तीव्रमृदुरिति । तथा मृदुमध्यो मध्यमध्यस्तीव्रमध्य इति । तथा मृदुतीव्रो मध्यतीव्रस्तीव्रतीव्र इति । एवं एकाशीतिभेदा हिंसा भवति ॥

सा च पुनः एकाशीतिभेदाऽपि सती नियोगविकल्पसमुच्चयभेदात् असङ्ख्येया । यथा नियोगभेदः—कश्चिन्नियुक्तः सन्नन्यं नियुङ्क्ते; यथा राज्ञः । स चापि नियुक्तः परम्, स चापि परमिति । ते च सर्वे नियुक्ताः समुच्चयेन विकल्पेन वा हिंसन्ति । तथा मूलनियोक्तापि नियोज्यैः संहत्य विकल्प्य च हिंसामनुतिष्ठतीति । वध्यघातकादिप्राणिभेदस्यासङ्ख्येयत्वादिति । एवमनृतादिष्वपि योज्यम् । कृतकारितानुमोदितादि योज्यम् ॥

ते खल्वमी वितर्का दुःखाज्ञानानन्तफलाः । दुःखं चाज्ञानं च दुःखाज्ञाने, ते एवानन्तं [1]फलं येषां ते दुःखाज्ञानानन्तफलाः । दुःखमेषामनन्तं फलम् । अज्ञानं चैषामनन्तं फलम् । तस्मादेतान् वितर्कान् मनसाऽपि नोपेक्षयेदिति प्रतिपक्षं भावयेत् ॥

तत्र हिंस्यस्य त्रिप्रकारा पीडा प्रतिपाद्यते तद्भेदद्वारेण फलभेदप्रदर्शनार्थम् । तथा च हिंसको वध्यस्य वीर्यमाक्षिपति । घातकरूपावलोकनभर्त्सनादिना त्रस्तस्य वीर्यमाक्षिप्य शस्त्रादिनिपातनेन दुःखयति । ततो जीवितादपि मोचयति । प्राणेभ्यो वियोजयति ॥

---

1. अत्र आदर्शकोशे 'अनन्तं' इत्येतदुपरि 'वैरत्यागः' इत्यादि अत्र (.21) पुटे मुद्रितं वाक्यं दृश्यते । तस्यानन्वयात् आदर्शकोशे पुटद्वयव्यवहितं 'फलं' इत्यादिवाक्यं योजितम् ।

[ भाष्यम् ]

मुपकरणं क्षीणवीर्यं भवति । दुःखोत्पादान्नरकतिर्यक्प्रेतादिषु दुःखमनुभवति, जीवितव्यपरोपणात् प्रतिक्षणं च जीवितात्यये वर्तमानो मरणमिच्छन्नपि दुःखविपाकस्य नियतविपाकवेदनीयत्वात् कथंचिदेवोच्छ्वसिति । यदि च कथंचित् पुण्यावापगता हिंसा भवेत्, तत्र सुखप्राप्तौ भवेदल्पायुरिति । एवमनृतादिष्वपि योज्यं यथासंभवम् । एवं वितर्काणां च अमुमेवानुगतं विपाकमनिष्टं भावयन् न वितर्केषु मनः प्रणिदधीत ॥ ३४ ॥

प्रतिपक्षभावनाद्धेतोर्हेया वितर्का यदा च स्युरप्रसवधर्माणः, तदा तत्कृतमैश्वर्यं योगिनः सिद्धिसूचकं भवति । तद्यथा—

[ विवरणम् ]

तस्य वीर्याक्षेपादस्य हिंसितुः चेतनाचेतनं पशुक्षेत्रादिकं उपकरणं क्षीणवीर्यं भवति ॥

शस्त्रादिनिपातनदुःखोत्पादात् हिंसाविशेषात् नरकतिर्यक्प्रेतादिषु दुःखमनुभवति ॥

तथा जीवितव्यपरोपणात् प्रतिक्षणं च जीवितात्यये वर्तमानो जन्ममरणान्तरे वर्त्मनि प्रतिक्षणं मरणमिच्छन्नपि दुःखविपाकस्य नियतवेदनीयत्वात् अवश्यानुभवितव्यत्वात् कथंचिदेवोच्छ्वसिति ॥

यदि च कथंचित्पुण्यावगमात् प्रभूतपुण्यावापगता अल्पीयसी हिंसा भवेत्, तत्र पुण्यभूम्ना सुखप्राप्तः सन्नपि भवेदल्पायुः आवापगतहिंसादोषेण ॥

इत्थमनृतादिष्वपि यथासंभवं हिंसायामुक्तं योज्यम् । एवं वितर्काणां हिंसादीनां छायामिवानुगतं विपाकमनिष्टं भावयेत्, न वितर्केषु मनः प्रणिदधीत ॥ ३४ ॥

प्रतिपक्षभावनाहेया वितर्काः यदा च स्युरप्रसवधर्मिणः अप्रसवाश्च ते धर्मिणश्चेत्यप्रसवधर्मिणः । यदा योगिनो मनसि नोत्पद्यन्ते निकृत्तमूलाः सन्तः, तदा तत्कृतं यमनियमस्थैर्यकृतम् ऐश्वर्यं योगिनः सिद्धिसूचकम् अहिंसादिफलसिद्धिज्ञापकं जायत इति योगसिद्धिफलमवस्थितमेव । अन्यदपि योगाङ्गस्तुतये ऐश्वर्यमनुषङ्गजातमुच्यते । कथम्? एकैकस्याप्यहिंसादीनां स्थिरत्वलिङ्गमीदृशं यज्ञादिधर्मफलैरप्यसमानं प्रत्यक्षत उपलभ्यते, किमङ्ग संहतानां योगसिद्धिकरत्व-

[ सूत्रम् ]

**अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्यागः ॥ ३५ ॥**

[ भाष्यम् ]

सर्वप्राणिनां भवति ॥ ३५ ॥

[ सूत्रम् ]

**सत्यप्रतिष्ठायां क्रियाफलाश्रयत्वम् ॥ ३६ ॥**

[ भाष्यम् ]

धार्मिको भूया इति भवति धार्मिकः । स्वर्गं प्राप्नुहीति स्वर्गं प्राप्नोति । अमोघाऽस्य वाक् भवति ॥ ३६ ॥

[ सूत्रम् ]

**अस्तेयप्रतिष्ठायां सर्वरत्नोपस्थानम् ॥ ३७ ।**

[ भाष्यम् ]

सर्वदिक्स्थानि अस्योपतिष्ठन्ते रत्नानि ॥ ३७ ॥

[ विवरणम् ]

मिति । तदेतत्प्रतिदर्शयति—तद्यथा—अहिंसाप्रतिष्ठायाम् अहिंसास्थिरत्वे अवितर्कप्रादुर्भावे । तत्सन्निधौ वैरत्यागः । शाश्वतिकविद्वेषिणामपि सर्पनकुलादीनां तस्य अहिंसकस्य सन्निधौ [1]वैरत्यागो भवति ॥ ३५ ॥

सत्यप्रतिष्ठायां सत्यस्थैर्ये क्रियाफलाश्रयत्वं यज्ञादिक्रियाफलानामागमनं प्राप्तिर्भवति । सत्यवादिवाक्यादिति शेषः । कथम् ? अधार्मिकोऽपि धार्मिको भूया इत्युक्ते तद्वचनाद्धार्मिको भवति । यथा धर्मेऽस्य रमतां मन इति देवैरुक्तः [2]कुण्डधाराराधी ब्राह्मणो धार्मिको बभूव । तथा स्वर्गं प्राप्नुहीत्युक्तः स्वर्गं प्राप्नोति । यथा विश्वामित्रेणोक्तः स्वर्गं प्राप्नुहीति त्रिशङ्कुः स्वर्गं प्राप । किं बहुना । अमोघाऽस्य वाक् भवति ॥ ३६ ॥

अस्तेयप्रतिष्ठायां अस्पृहायाम् । ततः किमस्य भवति ? रत्नोपस्थानं भवति सर्वदिक्स्थान्यस्योपतिष्ठन्ते रत्नानि आत्मानं दर्शयन्ति ॥ ३७ ॥

---

1. अत्र आदर्शकोशे 'वैर' इत्येतदुपरि 'मपश्यन्' इत्यादि अत्र (223) पुटे मुद्रितं वाक्यं दृश्यते । तस्यानन्वयात्, आदर्शकोशे पुटत्रयात् पूर्वलिखितं 'त्यागो भवति' इत्यादिवाक्यं योजितम् ।

2. कुण्डधारोपाख्यानं भारते शान्तिपर्वान्तर्गतमोक्षधर्मपर्वणि 271— अध्याये दृश्यते ।

[ सूत्रम् ]

**ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः ३८ ॥**

[ भाष्यम् ]

यस्य लाभादप्रतिघान् गुणानुत्कर्षयति । सिद्धश्च विनेयेषु ज्ञानमाधातुं समर्थो भवतीति ॥ ३८ ॥

[ सूत्रम् ]

**अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः ॥ ३९ ॥**

[ भाष्यम् ]

अस्य भवति । कोऽहमासं, कथमहमासं, किंस्विदिदं, कथंस्विदिदं, के वा भविष्यामः, कथं वा भविष्याम इत्येवमस्य पूर्वान्तपरान्तमध्येष्वात्मभावजिज्ञासा स्वरूपेणोपावर्तते । एता यमस्थैर्ये सिद्धयः ॥३९॥

नियमेषु वक्ष्यामः—

[ सूत्रम् ]

**शौचात् स्वाङ्गजुगुप्सा परैरसंसर्गः ४० ॥**

[ विवरणम् ]

ब्रह्मचर्यप्रतिष्ठायां वीर्यलाभः । ब्रह्मचर्यलाभादप्रतिघान् गुणानुत्कर्षयति । अप्रतिबन्धानात्मन उपपादयति । सर्वशुभार्थप्रवृत्तिष्वप्रतिबद्धवीर्यो भवति । न केनचित् प्रतिघातेन विवध्यत इत्यर्थः ॥

किञ्च—विनयेषु शिष्येषु योग्येषु वा साधुषु ज्ञानमाधातुं समर्थो भवति यथा भगवान् व्यासः सं(ज्ञये)जज्ञे ॥ ३८ ॥

अपरिग्रहस्थैर्ये जन्मकथन्तासम्बोधः । जन्मनः कथंभावबोधोऽस्य भवति ।

किंस्विदिदं(सम)मम जन्मनः किं सतत्त्वम्, कथं स्विदिदं केन प्रकारेण स्वित्, किं भविष्यामः प्राणो[प्रायणो]त्तरकालं किं वा न भविष्यामः, भविष्यन्तो वा के भविष्यामः, कथं भविष्यामः, इत्येवम् अस्य पूर्वापरान्तमध्येषु भूतभविष्यद्वर्तमानेषु आत्मजिज्ञासा सम्यग्दर्शनस्य पूर्वरूपं स्वरूपेणोपावर्तते । बाह्यपरिग्रहासङ्गाभावात् स्वात्मविषयालोचनमयत्नेन प्रवर्तते । नान्येषां परिग्रहसन्तापवितानिततृषां यत्नेनापि जायते ॥ ३९ ॥

[ भाष्यम् ]

स्वाङ्गे जुगुप्सायां शौचमारभमाणः कायावद्यदर्शी कायानभिष्वङ्गी यतिर्भवति । किञ्च, परैरसंसर्गः । कायस्वभावावलोकी स्वमपि कायं जिहासुर्मृज्जलादिभिराक्षालयन्नपि कायशुद्धिमपश्यन् कथं परका(की)यै-रत्यन्तमेवाप्रयतैः संसृज्येत ॥ ४० ॥

किञ्च—

[ सूत्रम् ]

**सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शनयोग्यत्वानि च ॥ ४१ ॥**

[ भाष्यम् ]

भवन्तीति वाक्यशेषः । शुचेः सत्त्वशुद्धिः, ततः सौमनस्यं, तत ऐकाग्र्यं, तत इन्द्रियजयः, ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवतीत्येतच्छौचस्थैर्यादधिगम्यत इति ॥ ४१ ॥

[ सूत्रम् ]

**सन्तोषादनुत्तमः सुखलाभः ॥ ४२ ॥**

[ विवरणम् ]

यमेषु सिद्धय उक्ताः । इदानीं नियमेषु वक्ष्यामः—शौचात् स्वाङ्ग-जुगुप्सा परैरसंसर्गः । स्वाङ्गजुगुप्सया शौचमारभमाणः कायावद्यदर्शी शरीरगर्ह्यत्वदर्शी कायानभिष्वङ्गी यतिर्भवति । किञ्च—परैरसंसर्गो भवति । कायस्वभावावलोकी स्वमपि कायं जिहासुर्मृज्जलादिभिराक्षालयन्नपि कायशुद्धि[1]मपश्यन् कथं परकायैरत्यन्तमेवाप्रयतैः संसृज्यत इति ॥ ४० ॥

किं चान्यद्भवति । सत्त्वशुद्धिसौमनस्यैकाग्र्येन्द्रियजयात्मदर्शन-योग्यत्वानि चास्य भवन्ति । पूर्वस्य पूर्वस्य स्थैर्यादुत्तरस्याविर्भावः । कथम्? शुचेः सत्त्वशुद्धिः । ततः सौमनस्यम्, तत ऐकाग्र्यम्, ततश्चेन्द्रियजयः, ततश्चात्मदर्शनयोग्यत्वं बुद्धिसत्त्वस्य भवतीत्यतः शौचस्थैर्यादधिगम्यत एतत् सर्वम् । ततश्चेयं शौचसिद्धिरेव ॥ ४१ ॥

सन्तोषादनुत्तमः सुखलाभः । सन्तोषवितर्कानुत्पत्तौ अनुत्तमः न विद्यतेऽस्मादन्य उत्तमः ।

---

1. अत्र आदर्शकोशे 'शुद्धि' इत्येतदुपरि 'फलं' इत्यादि अत्र (219) पुटे मुद्रितं वाक्यं दृश्यते । तस्यानन्वयात्, आदर्शकोशे पुटद्वयव्यवहितं 'मपश्यन्' इत्यादि वाक्यं योजितम् ।

[ भाष्यम् ]

तथा चोक्तम्—

"यच्च कामसुखं लोके यच्च दिव्यं महत् सुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥" इति ॥ ४२ ॥

[ सूत्रम् ]

**कायेन्द्रियसिद्धिरशुद्धिक्षयात् तपसः ॥ ४३ ॥**

[ भाष्यम् ]

निर्वर्त्यमानमेव तपो हिनस्त्यशुद्ध्यावरणमलम् । तदावरणमलापगमात् कायसिद्धिरणिमाद्या । तथेन्द्रियसिद्धिर्दूराच्छ्रवणदर्शनाद्येति ॥ ४३ ॥

[ सूत्रम् ]

**स्वाध्यायादिष्टदेवतासम्प्रयोगः ॥ ४४ ॥**

[ भाष्यम् ]

देवा ऋषयः सिद्धाश्च स्वाध्यायशीलस्य दर्शनं गच्छन्ति, कार्ये चास्य वर्तन्त इति ॥ ४४ ॥

[ सूत्रम् ]

**समाधिसिद्धिरीश्वरप्रणिधानात् ॥ ४५ ॥**

[ विवरणम् ]

तथा चोक्तम्—"यच्च कामसुखं लोके, यच्चैहिकम् । यच्च दिव्यं महत्सुखम् । देवादिसम्बन्धि । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्" ॥ ४२ ॥

कायेन्द्रियसिद्धिरशुद्धिक्षयात्तपसः । निर्वर्त्यमानमेव तपो हिनस्त्यशुद्ध्यावरणम् किमङ्ग निर्वर्तितमित्यभि(मानः)प्रायः ॥

तदावरणमलापगमात् कायसिद्धिरणिमाद्या । मातापित्रादिसंबन्धजं कायमलं बैजं गार्भं चाहारादिजं च सर्वं तपसा निघातयिष्यते । ततश्चाणिमादिकायसिद्धिः ॥

तथा विषयादिसम्पर्कजमिन्द्रियाणामधर्माद्यावरणं मलं तपस्स्रोतस्विनीस्रोतसा क्षाल्यते । तथा इन्द्रियसिद्धिर्दूराच्छ्रवणाद्या ॥ ४३ ॥

स्वाध्यायादिष्टदेवतासम्प्रयोगः । देवाः ऋषयः सिद्धाश्च य इष्टास्ते स्वाध्यायशीलस्य दर्शनं गच्छन्ति कार्येषु चास्य उपदेशादिषु वर्तन्ते ॥४४॥

[ भाष्यम् ]

ईश्वरार्पितसर्वभावस्य समाधिसिद्धिः, यया सर्वमीप्सितमवितथं जानाति देशान्तरे देहान्तरे कालान्तरे च । ततोऽस्य प्रज्ञा यथाभूतं जानातीति ॥ ४५ ॥

उक्ताः सह सिद्धिभिर्यमनियमाः । आसनादीनि वक्ष्यामः । तत्र—

[ सूत्रम् ]

**स्थिरसुखमासनम् ॥ ४६ ॥**

[ भाष्यम् ]

तद्यथा—पद्मासनं, भद्रासनं,

[ विवरणम् ]

समाधिसिद्धिरीश्वरप्रणिधानात् । ईश्वरार्पितसर्वभावस्य समाधिः सिध्यति । यया समाधिसिद्ध्या सर्वमीप्सितमवितथं जानाति । तथा देशान्तरे कालान्तरे चास्य प्रज्ञा यथाभूतं जानाति ॥ ४५ ॥

उक्ताः सह सिद्धिभिर्यमनियमाः । इदानीं आसनादीनि वक्ष्यामः— तत्र स्थिरसुखमासनम् । स्थिरं सुखं चासनम् । यस्मिन्नासने स्थितस्य मनोगात्राणामुपजायते स्थिरत्वम्, दुःखं च येन न भवति तदभ्यस्येत् । तद्यथा—शास्त्रान्तरप्रसिद्धानि नामानि पद्मासनादीनि प्रदर्श्यन्ते ॥

तत्र शुचौ देवनिलयगिरिगुहानदीपुलिनादौ ज्वलनसलिलासमीपे जन्तुविवर्जिते निर(ङ्ग)श्मके शुचिः सम्यगाचम्य, परमेश्वरमखिलभुवनैकनाथं अभिवन्द्यांश्च योगेश्वरानात्मगुरूंश्च प्रणिपत्य, चैलाजिनकुशोत्तरमदुःखकरं प्राङ्मुख उदङ्मुखो वा विष्टरमधिष्ठाय, अन्यतमदेषामासनं निर्बध्नीयात् ॥

तत्र पद्मासनं नाम—सव्यं पादमुपसंहृत्य दक्षिणोपरि निदधीत । तथैव दक्षिणं सव्यस्योपरिष्टात् । कटग्रुरोर्ग्रीवं च विष्टभ्य, मृ(ग)तसुस्तव-न्नासिकाग्रनिहितदृष्टिः, समुद्गकवदपिहितोष्ठसम्पुटः, दन्तैर्दन्ताग्रमपरामृशन्, मुष्टिमात्रान्तरविप्रकृष्टाचिबुकोरस्स्थलः, राजदन्तान्तरनिहितरसनाग्रः, हस्तौ पार्ष्ण्योरुपरि कच्छपकं ब्रह्माञ्जलिं वा कृत्वा, सकृदास्थापितेत्थंसंस्थानः, पुनः पुनः शरीरावयवशरीरविन्यासविशेषपरित्यक्तप्रयत्नः सन् येनासीत, तत् पद्मासनम् ॥

एतच्च सर्वमन्येषामासनानामपि तुल्यम् । कश्चिदेव विशेषः ॥

तथा दक्षिणं पादं सव्यस्योपरि कृत्वा, हस्तं च दक्षिणं सव्यहस्त-स्योपरि निधाय, येनास्ते, तत् भद्रासनम् । अन्यत् समानम् ॥

[ भाष्यम् ]

वीरासनं, स्वस्तिकं, दण्डासनं, सोपाश्रयं, पर्यङ्कं, क्रौञ्चनिषदनं, हस्तिनिषदनं, उष्ट्रनिषदनं, समसंस्थानं, स्थिरसुखं, यथासुखं च इत्येवमादीनि ॥ ४६ ॥

[ सूत्रम् ]

**प्रयत्नशैथिल्यानन्त्यसमापत्तिभ्याम् ॥ ४७ ॥**

[ भाष्यम् ]

भवतीति वाक्यशेषः । प्रयत्नोपरमात् सिध्यत्यासनं, येन नाङ्गमेजयो भवति । अनन्ते वा समापन्नं चित्तमासनं निर्वर्तयतीति ॥ ४७ ॥

[ विवरणम् ]

तथा कुञ्चितान्यतरपादमवनिविन्यस्तापरजानुकं **वीरासनम्** । उच्यमान एव विशेषः सर्वत्र ॥

दक्षिणं पादाङ्गुष्ठं सव्येनोरुजङ्घेन परिगृह्यादृश्यं कृत्वा, तथा सव्यं पादाङ्गुष्ठं दक्षिणेनोरुजङ्घेनादृश्यं परिगृह्य, यथा च पार्ष्णिभ्यां वृषणयोरपीडनं तथा येनास्ते, तत् **स्वस्तिकमासनम्** ॥

समगुल्फौ समाङ्गुष्ठौ प्रसारयन् समजानू पादौ दण्डवद्येनोपविशेत्, तत् **दण्डासनम्** ॥

(न)योगपट्टसं[स्थं]स्तम्भाद्याश्रयं वा **सोपाश्रयम्** ॥

आजानुप्रसारितबाहुशयनं **पर्यङ्कासनम्** ॥

**क्रौञ्चनिषदनं हस्तिनिषदनं उष्ट्रनिषदनं** च कौञ्चादिनिषदनसंस्थानसादृश्यादेव द्रष्टव्यम् ॥

भूमौ न्यस्तोरुजङ्घं **समसंस्थितम्** ॥

**स्थितप्रस्रब्धिः** । अन्येनापि प्रकारेण स्वयमुत्प्रेक्ष्य **स्थितप्रस्रब्धिः** । अनायासो येन भवति तदप्यासनं स्थितप्रस्रब्धिर्नाम ॥

यथासुखं च—येन रूपेणासीनस्य सुखं भवति तत् **यथासुखम्** । आदिशब्दादन्यदपि यथाचार्योपदिष्टमासनं द्रष्टव्यम् ॥ ४६ ॥

तदासनजयाभ्युपाय इदानीमुपपाद्यते—**प्रयत्नशैथिल्यानन्त्यसमापत्तिभ्याम्** । **भवतीति वाक्यशेषः** । आसनं दृढनिष्पन्नं भवतीत्युपस्कारः । **प्रयत्नोपरमा**दासनबन्धोत्तरकालं प्रयत्नाकरणाद्वा सिध्यति । **येन नाङ्गमेजयो भवति** । येन प्रयत्नोपरमेण । प्रयत्नेन ह्यङ्गं कम्पयति । येन अचलितासनो

[ सूत्रम् ]

ततो द्वन्द्वानभिघातः ॥ ४८ ॥

[ भाष्यम् ]

शीतोष्णादिभिर्द्वन्द्वैरासनजयान्नाभिभूयते ॥ ४८ ॥

[ सूत्रम् ]

तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः ॥ ४९ ॥

[ भाष्यम् ]

सत्यासनजये बाह्यस्य वायोराचमनं श्वासः । कौष्ठ्यस्य वायोर्निस्सारणं प्रश्वासः । तयोर्गतिविच्छेदः उभयाभावः प्राणायामः । ४९॥

स तु--

[ सूत्रम् ]

बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः ॥ ५० ॥

[ विवरणम् ]

भवतीत्यर्थः । आनन्त्ये वा समापन्नम् । अनन्तं विश्वम्, अनन्तभाव आनन्त्यम्, तस्मिन् समापन्नं, व्याप्य विश्वभावं स्थितं चित्तमासनं निर्वर्तयति दृढयति ॥ ४७ ॥

ततो द्वन्द्वानभिघातः । ततः आसनस्थिरीभावात् । इदं दृष्टमानुषाङ्गिकम् । यत् शीतोष्णादिभिर्द्वन्द्वैर्नाभिभूयते ॥ ४८ ॥

किञ्च—प्राणायामादियोग्यता च भवति । कथम्? तस्मिन् सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः । सत्यासने दृढे बाह्यस्य वायोराचमनं श्वासः । यथा सन्ततत्वादुदकं नालेनाकृष्यते, तथा सन्ततत्वात् नासिकापुटनालाभ्यामपानवायुसंबन्धो बहिर्वायुराकृष्यते, तदाकर्षणं श्वासः । तथा कौष्ठ्यवायोर्निश्चारणम् । प्राणवृत्तिसम्बन्धो हि कौष्ठ्यो वायुः । तस्य बहिर्निस्सारणं प्रश्वासः । तयोर्गतिविच्छेदः । किमुक्तं भवत्यत आह— उभयाभावः प्राणायाम इति ॥ ४९ ॥

स तु त्रिविधः बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः । स बाह्यवृत्तिरभ्यन्तरवृत्तिः स्तम्भवृत्तिश्च । यत्र श्वासपूर्वको गत्यभावः स बाह्यवृत्तिः । बाह्यस्य वायोरन्तः प्रवेशनं प्रति वृत्तिः यस्य स बाह्यवृत्तिः । तस्मात् स बाह्यः । बाह्यमन्ये पूरक इत्याचक्षते ॥

[ भाष्यम् ]

यत्र प्रश्वासपूर्वको गत्यभावः स बाह्यः । यत्र श्वासपूर्वको गत्यभावः स आभ्यन्तरः । तृतीयः स्तम्भवृत्तिः, यत्रोभयाभावः सकृत्प्रयत्नाद्भवति । यथा तप्ते न्यस्तमुपले जलं सर्वतः सङ्कोचमापद्यते, तथा द्वयोर्युगपद्गत्यभाव इति । त्रयोऽप्येते देशेन परिदृष्टाः, इयानस्य विषयो देश इति । कालेन परिदृष्टाः, क्षणानामियत्तावधारणेनावच्छिन्ना इत्यर्थः । सङ्ख्याभिः परिदृष्टाः, एतावद्भिः श्वासप्रश्वासैः प्रथम उद्घातः, तद्वन्निगृहीतस्यैतावद्भिर्द्वितीयः उद्घातः, एवं तृतीयः । एवं मृदुः, एवं मध्यः, एवं तीव्र इति सङ्ख्यापरिदृष्टः । स खल्वयमेवमभ्यस्तो दीर्घसूक्ष्मः ॥ ५० ॥

[ विवरणम् ]

यत्र प्रश्वासपूर्वको गत्यभावः स आभ्यन्तरवृत्तिः । आभ्यन्तरस्य वायोर्बहिर्निस्सारणं प्रति वृत्तिर्यस्य स आभ्यन्तरवृत्तिः । तस्मात् स आभ्यन्तरः । तं रेचक इत्याचक्षते ॥

तृतीयस्तु स्तम्भवृत्तिः । तत्रोभयाभावः आचमननिश्वारणयोरभावः । स तु सकृत्प्रयत्नात् प्रभवति । यथा तप्ते न्यस्तं उपले जलं सर्वतः संकोचमापद्यते, तथा सकृत्प्रयत्नात् प्राणादिवृत्तयः संकोचमुपयान्तीत्याह— द्वयोर्युगपत् गत्यभाव इति ॥

त्रयोऽप्येते देशेन परिदृष्टाः इयानस्य देश इति । यथा बहिर्वृत्तेरन्तराचम्यमानस्य नासिकाग्रप्रभृत्यापादाङ्गुष्ठं देशव्याप्तिः । एवमन्तर्वृत्तेर्बहिर्निश्वार्यमाणस्य वायोः पादाङ्गुष्ठप्रभृत्यानासिकाग्रं देशव्याप्तिः । स्तम्भवृत्तेरामस्तकापादतलव्याप्तिः । अथ वा बहिरपि वितस्त्यादिक्रमेण देशव्याप्तिरस्त्येव ॥

कालेन परिदृष्टाः, क्षणानामियत्तावधारणेन इयन्तः क्षणाः प्राणायामेनातिवाहिता इति ॥

तथा सङ्ख्याभिः परिदृष्टाः, एतावद्भिः श्वासप्रश्वासैः अतीतैः परिदृष्टः प्रथम उद्घातः । यथा निरोधक्षुभितानां वायूनां सकृत् मूर्धानमुद्गत्य निवृत्तिः प्रथम उद्घातः । स एव मृदुः ॥

पुनश्च सकृदुद्गतनिगृहीतस्य वायोः तावद्भिः प्रश्वासैरतीतैः परिदृष्टो द्वितीय उद्घातः प्राणायामो मध्यम इत्युच्यते ॥

[ सूत्रम् ]

बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः ॥ ५१ ॥

[ भाष्यम् ]

देशकालसङ्ख्याभिर्बाह्यविषयपरिदृष्ट आक्षिप्तः । तथा आभ्यन्तरविषयपरिदृष्ट आक्षिप्तः । उभयथा दीर्घसूक्ष्मः । तत्पूर्वको भूमिजयात् क्रमेणोभयोर्गत्यभावश्चतुर्थः प्राणायामः । तृतीयस्तु विषयानालोचितो गत्यभावः सकृदारब्ध एव देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः । चतुर्थस्तु श्वासप्रश्वासयोर्विषयावधारणात् क्रमेण भूमिजयादुभयाक्षेपपूर्वको गत्यभावश्चतुर्थः प्राणायाम इत्ययं विशेष इति ॥ ५१ ॥

[ विवरणम् ]

तथा तृतीयः, एतावद्भिः श्वासप्रश्वासैः परिदृष्टः तृतीय उद्घातः । स एव च त्रिरुद्घातः तीव्र इति ॥

स खल्वयमेवं देशकालसङ्ख्यापरिदृष्टोऽभ्यस्तो दीर्घकालव्यापी भवति भूमिजयात् । तथा चर्षीणामनेकवर्षव्यापी श्रूयते । ततश्च दीर्घः ॥

तथा वायूनां दीर्घत्वमन्दत्वापत्तेः सूक्ष्मं च भवति ॥ ५० ॥

बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः—बाह्यस्य विषयाः पादाङ्गुष्ठादयः । बाह्यो हि वायुराचम्यमानोऽन्तर्देशान् व्याप्नोति, आक्षिपति । आभ्यन्तरस्य विषया भूम्यादयः । स च बहिर्निश्चार्यमाणो भूम्यादीन् देशकालसङ्ख्यापरिदृष्टान् व्याप्नोति, आक्षिपति । स बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः प्राणायामः ॥

देशकालसङ्ख्याभिर्बाह्यवस्तुविषयः परिदृष्ट आक्षिप्तो व्याप्तः । तथा आभ्यन्तरविषयः परिदृष्टो देशकालसङ्ख्याभिः आक्षिप्तो व्याप्तः । उभयथा दीर्घसूक्ष्मः । बाह्याभ्यन्तरविषयाक्षेपेणोभयथा दीर्घसूक्ष्मत्वापन्नः ॥

किमुक्तं भवतीत्याह—तत्पूर्वकः उभयविषयाक्षेपपूर्वकः । भूमिजयात् उभयवृत्तिवायुभूमिजयक्रमेणोभयोः प्राणापानवृत्त्योर्बाह्याभ्यन्तरयोः गत्यभावश्चतुर्थः ॥

तृतीयचतुर्थयोरुभयवृत्तिसामान्यादविशेषत्वमाशङ्क्याह-तृतीयस्तद्विषयानालोचितः सकृदारब्ध एव गत्यभावो देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः । चतुर्थस्तु श्वासप्रश्वासयोः आतमितोः विषयावधारणात् क्रमेण वा यद्वृत्तिभूमिजयक्रमेणोभयाक्षेपपूर्वको गत्यभावश्चतुर्थः प्राणायाम इत्ययं विशेषः तृतीयचतुर्थयोः ॥ ५१ ॥

[ सूत्रम् ]

**ततः क्षीयते प्रकाशावरणम् ॥ ५२ ॥**

[ भाष्यम् ]

प्राणायामानभ्यस्यतोऽस्य योगिनः क्षीयते विवेकज्ञानावरणीयं कर्म । यत्तदाचक्षते—'महामोहमयेनेन्द्रजालेन प्रकाशशीलं सत्त्वमावृत्य तदेवाकार्ये विनियुङ्क्ते' इति । तदस्य प्रकाशावरणं कर्म संसारनिबन्धनं प्राणायामाभ्यासबलात् दुर्बलं भवति, प्रतिक्षणं च क्षीयते । तथा चोक्तम्-'तपो न परं प्राणायामात् ततो विशुद्धिर्मलानां दीप्तिश्च ज्ञानस्य' इति ॥ ५२ ॥

किञ्च—

[ सूत्रम् ]

**धारणासु च योग्यता मनसः ॥ ५३ ॥**

[ भाष्यम् ]

प्राणायामाभ्यासादेव । 'प्रच्छर्दनविधारणाभ्यां वा प्राणस्य' इति वचनात् ॥ ५३ ॥

[ विवरणम् ]

ततः क्षीयते प्रकाशावरणम् । प्रकाश आव्रियते येन तत् प्रकाशावरणं कर्म। प्राणायामानभ्यस्यतो योगिनो विवेकज्ञानमाव्रियते येन तत् विवेकज्ञानावरणीयं कर्म । यत्तु आचक्षते शास्त्रान्तरे "महामोहमयेनेन्द्रजालेन प्रकाशशीलं सत्त्वमावृत्य तदेवाकार्ये विनियुङ्क्ते" इति ॥

यदाव्रियते विपर्ययज्ञानमहेन्द्रजालेन तदेव सत्त्वमावरणकर्मणा सत्त्वाकार्ये विनियुज्यते । तत् प्राणायामाभ्यासादस्य प्रकाशावरणं कर्म संसारनिबन्धनं दुर्बलं भवति । न केवलं दुर्बलभाव एव, प्रतिक्षणं च क्षीयते ॥

तथा चोक्तम्—'न परं प्राणायामात्तपः' इति । तस्मात् ततः प्राणायामात् रजस्तमःकार्याणां विशुद्धिर्मलानां, दीप्तिश्च ज्ञानस्येति ॥५२॥

किं च—भवत्यन्यदपि प्राणायामाभ्यासात् । धारणासु वक्ष्यमाणासु योग्यता मनसः प्राणायामादेव । [1]'प्रच्छर्दनविधारणाभ्यां वा प्राणस्य' इति वचनात् ताभ्यां हि मनसः स्थितिसम्पत्तिरुक्ता ॥ ५३ ॥

---

1. यो. सू. पा. 1. सू. 34.

[ भाष्यम् ]

अथ कः प्रत्याहारः—

[ सूत्रम् ]

**स्वविषयासम्प्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः ॥ ५४ ॥**

[ भाष्यम् ]

स्वविषयसम्प्रयोगाभावे चित्तस्वरूपानुकार इवेति । चित्तनिरोधे चित्तवन्निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवदुपायान्तरमपेक्षन्ते । यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति, निविशमानमनु निविशन्ते, तथेन्द्रियाणि चित्तनिरोधे निरुद्धानीत्येष प्रत्याहारः ॥ ५४ ॥

**ततः परमा वश्यतेन्द्रियाणाम् ॥ ५५ ॥**

## इति श्रीमहर्षिपतञ्जलिविरचिते योगसूत्रे द्वितीयः साधनपादः ॥

[ विवरणम् ]

अथ कः प्रत्याहारः—? प्रत्याहारविशेषमभिधित्समानः प्रश्नेनोपक्रमते । स्वविषयादिन्द्रियाणां प्रत्याहरणमात्रं परेषां प्रत्याहारः । अत्र पुनर्विशेषवानुच्यते **स्वविषयासम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहार इति ॥**

**स्वैः** स्वैश्शब्दादिभिर्विषयैः इन्द्रियाणां श्रोत्रादीनां संयोगाभावे विषयदोषदर्शनात् ध्यायिनां स्वविषयात् निवर्तितानां चित्तस्वरूपानुकारतेव । योगिनश्चित्तं यदाकारतां भजते तत् चित्तस्वरूपानुकारतेवेति ॥

एतदुक्तं भवति—चित्तनिरोधे चित्तवन्निरुद्धानि नोपायान्तरमपेक्षन्ते जयार्थम् । चित्तनिरोधादेव तानि निरुध्यन्ते । यथा मधुकरराजानम् श्रुत्यक्षरमेतत् । मधुकरराजमित्यर्थः । मक्षिका उत्पतन्तमनूत्पतन्ति, निविशमानमनु निविशन्ते । तथैवेन्द्रियाणि चित्तनिरोधे निरुद्धानीत्येष प्रत्याहारः ॥ ५४ ॥

ततः प्रत्याहारस्थैर्यात् परमा वश्यतेन्द्रियाणां भवति । इतिशब्दः समाप्त्यर्थः । यासां च वश्यतानां मध्ये प्रत्याहारस्थैर्यात् परमा वश्यता जायते ता उच्यन्ते—

[ भाष्यम् ]

शब्दादिष्वव्यसनमिन्द्रियजय इति केचित् । सक्तिर्व्यसनं, व्यस्यत्येनं श्रेयस इति । अविरुद्धा प्रतिपत्तिर्वा न्याय्यः शब्दादिसम्प्रयोगः स्वेच्छयेत्यन्ये । रागद्वेषाभावे सुखदुःखशून्यं शब्दादिज्ञानमिन्द्रियजय इति केचित् । चित्तैकाग्र्यादप्रतिपत्तिरेवेति जैगीषव्यः । ततश्च परमा त्वियं वश्यता, यच्चित्तनिरोधे निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवत् प्रयत्नकृतमुपायान्तरमपेक्षन्ते योगिन इति ॥ ५५ ॥

इति श्रीपातञ्जलयोगसूत्रभाष्ये श्रीमद्वेदव्यासकृते
द्वितीयः साधनपादः ॥

[ विवरणम् ]

शब्दादिष्विन्द्रियजयः अव्यसनं पुनः पुनरप्रवृत्तिरनासक्तिर्वेति केचिदाहुः । व्यसनमिति निर्ब्रवीति—सक्तिर्व्यसनम् । कथम् ? व्यस्यति क्षिपति एनं प्रतिपत्तारं श्रेयसः सकाशादिति व्यसनम् ॥

अविरुद्धा प्रतिपत्तिर्वा । विरुद्धानां वा शब्दादीनामप्रतिपत्तिर्वश्यतेति । तस्यैव व्याख्यानं—न्याय्यः शास्त्रानुज्ञातः शब्दादिषु संयोगः स्वेच्छया । तेष्वविरुद्धेषु यदीच्छति प्रवर्तते न वा इत्येवमन्ये मन्वते ॥

रागद्वेषाभावे सुखदुःखशून्यं हेयोपादेयत्ववर्जितं शब्दादिज्ञानं वश्यतेत्येके । मध्यमायां तु रागद्वेषसद्भावमात्रमपि न वार्यत इति विशेषः ॥ स्वाभिप्रेता आख्यायते—ऐकाग्र्यात् चित्तैकाग्रत्वानुविधानादिन्द्रियाणां अप्रतिपत्तिरेव शब्दादीनामिति जैगीषव्यो मन्यते ॥

परमा त्वियं सर्वासामुक्तानामियं परमा वश्यतेन्द्रियाणां, यत् यस्मिन् चित्तनिरुद्धानीन्द्रियाणि न इतरेन्द्रियजयवत् पूर्वोक्तास्विन्द्रियवश्यतासु उपायान्तरमपेक्षन्ते जयार्थं, अस्यां पुनर्न प्रयत्नकृतमुपायान्तरमपेक्षन्ते योगिनः ॥ ५५ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य
श्रीशङ्करभगवतः कृतौ
श्रीपातञ्जलयोग(शास्त्र)सूत्रभाष्यविवरणे
॥ द्वितीयः साधनपादः ॥

श्रीः

# ॥ पातञ्जलयोगसूत्रभाष्यविवरणम् ॥

## ॥ तृतीयः विभूतिपादः ॥

[ व्यासभाष्यम् ]

उक्तानि पञ्च [1]बहिरङ्गसाधनानि । धारणा वक्तव्या—

[ पातञ्जलयोगसूत्रम् ]

**देशबन्धश्चित्तस्य धारणा ॥ १ ॥**

[ भाष्यम् ]

नाभिचक्रे, हृदयपुण्डरीके, [2]मूर्धज्योतिषि, नासिकाग्रे, जिह्वाग्र इत्येवमादिषु देशेषु, [3]बाह्येषु च विषयेषु, चित्तस्य वृत्तिमात्रेण बन्ध इति धारणा ॥ १ ॥

[ विवरणम् ]

उक्तानि पञ्च बहिरङ्गानि साधनानि सम्प्रज्ञातस्य योगस्य । अधुना अन्तरङ्गं धारणाध्यानसमाधिसमाख्यं साधनत्रयं तस्यैवाभिधीयते । बहिरङ्गान्तरङ्गत्वभेदादेव हि बहिरङ्गसाधनव्याख्यानेनैव पादः परिसमापितः । संहत्यकारित्वाच्च साधनत्रयस्य पृथग्वचनम् । बहिरङ्गसाधनाभिधानानन्तरपर्युपस्थापितान्तरङ्गसाधनप्रतिपादनेन पादसम्बन्धो व्याख्यातः । अस्मिंश्च पादे विभूतयः प्राधान्येन प्रदर्श्यन्त इति च पृथक्(क्त्वादा)पादारम्भः । एतदेव हि समाख्यालाभे कारणमवादिष्म ॥

धारणा वक्तव्या । प्रत्याहारानन्तरं क्रमोपनीतसान्निधाना धारणा अभिधानीया । देशबन्धश्चित्तस्य धारणा । देशबन्धनं देशबन्धः । कस्य? चित्तस्य ॥

स्वयमेव च सर्वं व्याचष्टे—नाभिचक्रे नाभिप्रदेशश्चक्रमिव । सर्वे (वायव)अवयवास्तत्र चक्रीभूता इति नाभिचक्रम् । हृदयं पुण्डरीकाकारम् । मूर्धज्योतिषि । मूर्धनाडीद्वारं प्रभास्वरत्वाज्ज्योतिरित्याख्यायते । नासिकाग्रे जिह्वाग्रे इत्येवमादिषु देशेषु बाह्येषु च विषयेषु चन्द्रादित्यादिषु चित्तं बध्यते ॥

---

1. बहिरङ्गाणि सा. 2. मूर्ध्नि ज्यो. 3. बाह्ये वा विषये

[ सूत्रम् ]

**तत्र प्रत्ययैकतानता ध्यानम् ॥ २ ॥**

[ भाष्यम् ]

तस्मिन् देशे ध्येयालम्बनस्य प्रत्ययस्य एकतानता [1]सदृशप्रवाहः प्रत्ययान्तरेणापरामृष्टो ध्यानम् ॥ २ ॥

[ सूत्रम् ]

**तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः॥ ३ ॥**

[ भाष्यम् ]

[2]तदेव ध्यानं ध्येयाकारनिर्भासं प्रत्ययात्मकेन स्वरूपेण शून्यमिव यदा भवति ध्येयस्वभावावेशात्, तदा समाधिरित्युच्यते ॥ ३ ॥

[ विवरणम् ]

तस्य चित्तस्य इत्येवमादिष्वप्रचलितरूपेण या वृत्तिः सा धारणेत्युच्यते । वृत्तिमात्रेणेति । तद्देशप्रत्ययमात्रेण विक्षेपशून्यतया वर्तत इति ॥ १ ॥

तत्र प्रत्ययैकतानता ध्यानम् । तस्मिन् देशे धारणावृत्तिविषये नाभिचक्रादौ । ध्येयालम्बनस्य ध्येयो देशादिः, तदालम्बनस्य । प्रत्ययस्य [एकतानता] सदृशप्रवाहः, तुल्यप्रत्ययानां प्रवाह एकाकारः प्रत्ययसन्तानः प्रत्ययान्तरेण विजातीयेन अपरामृष्टः अनाकीर्णः । तत् ध्यानम् ॥

धारणा तु तस्मिन्नेव ध्येये तदवस्थस्यैव चित्तस्य तद्विषयविकल्पितैः प्रत्ययान्तरैः परामृष्टाऽपि । यथा सूर्ये धार्यमाणस्य तद्गतपरिमण्डलतीव्रतरदीधितित्वादिप्रत्ययेष्वपि धारणैव । वृत्तिमात्रेण तत्रैव वर्तमानत्वाच्चित्तस्य । ध्यानं पुनः न तु तथा । भिन्नजातीयप्रत्ययान्तरापरामृष्टैकप्रत्ययप्रवाह एव हि ध्यानम् ॥ २ ॥

तदेवार्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः । तदेव ध्यानं तुल्यप्रत्ययप्रवाहरूपं स्वामेकप्रत्ययसन्तानतामिव हित्वा ध्येयाकारनिर्भासं ध्येयाकारवदवभासते । प्रत्ययात्मकेन स्वेन ग्रहणात्मना स्वरूपेण शून्यमिव । यथा स्फटिकद्रव्यमुपधानावभासं स्वरूपशून्यमिव । यदा भवति ध्येयस्वभावावेशात् कारणात् चित्तस्य, तदा तदेव ध्यानं समाधिरित्युच्यते ॥

ननु च योगः समाधिरित्यङ्गी पूर्वमुक्तः । इहाङ्गो योगस्य समाधिरित्याख्यायते । कः पुनरत्राङ्गाङ्गिनोर्भेद इति? उच्यते—योगः समाधिरिति चित्तस्थितिविशेषो विवक्षितः । इह तु प्रत्ययसन्तानस्यैव ध्येयस्वभावावेशात् ध्येयाकारत्वमङ्गमिति विशेषः ॥ ३ ॥

---

1. सदृशः प्र. 2. ध्यानमेव ध्ये.

[ सूत्रम् ]

**त्रयमेकत्र संयमः ॥ ४ ॥**

[ भाष्यम् ]

तदेतत् धारणाध्यानसमाधित्रयं एकत्र, संयमः । एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते । तदस्य त्रयस्य तान्त्रिकी परिभाषा 'संयमः' इति ॥ ४ ॥

[ सूत्रम् ]

**तज्जयात् प्रज्ञाऽऽलोकः ॥ ५ ॥**

[ भाष्यम् ]

तस्य संयमस्य जयात् समाधिप्रज्ञाया भवत्यालोकः । यथा यथा संयमः स्थिरपदो भवति, तथा तथा समाधिप्रज्ञा [1]स्थिरपदी भवति ॥ ५ ॥

[ सूत्रम् ]

**तस्य भूमिषु विनियोगः ॥ ६ ॥**

[ विवरणम् ]

तदेतद्धारणाध्यानसमाधित्रयं यद्व्याख्यातं तत् एकत्र एकस्मिन् देशे परिनिष्पन्नं सत् संयम इत्युच्यते । तदाह—एकविषयाणि त्रीणि साधनानि संयम इत्युच्यते । तदस्य त्रयस्य इत्थंक्रमेणाभिनिष्पन्नस्य तान्त्रिकी तन्त्रप्रयोजना परिभाषा । जिज्ञासितार्थसाक्षादापादनाय यत्र यत्र संयमः श्रूयते जेतव्यजयाय वा, तत्र तत्र त्रयमेतत् प्रवेदितव्यमित्येवमर्थमेतस्य त्रयस्यास्मिन् शास्त्रे परिभाषेयं संयम इति ॥

वक्ष्यति च—[2]"परिणामत्रयसंयमादतीतानागतज्ञानम्" [3]'स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः' इति च ॥ ४ ॥

तज्जयात् प्रज्ञाऽऽलोकः । तस्य संयमस्य जयात् स्थिरत्वापादनात् अभीप्सितार्थाभिव्यञ्जनसमर्थः प्रदीपालोकदेशीयः समाधिप्रज्ञाया भवत्यालोकः ।

यथा यथा संयमः स्थिरपदो भवति, तथा तथा समाधिप्रज्ञा स्थिरपदी भवति । येन समाधिप्रज्ञाऽऽलोकेन व्यवहितविप्रकृष्टादिवस्तुनिर्भासनसमर्थेन योगिनः करतलकलितमिवाभिमतमर्थमवलोकयन्ति ॥ ५ ॥

तस्य भूमिषु विनियोगः । तस्य संयमस्य भूमिषु बाह्याध्यात्मिकेषु ध्यानालम्बनभूतासु वक्ष्यमाणासु परिणामत्रयादिषु विनियोगः प्रयोगः कर्तव्यः ॥

---

1. विशारदी भवति 2. यो. सू. 3. 16. 3. यो. सू. 3. 44.

[ भाष्यम् ]

तस्य संयमस्य, जितभूमेः या अनन्तरा भूमिः तत्र, विनियोगः । न ह्यजिताधरभूमिः अनन्तरभूमिं विलङ्घ्य प्रान्तभूमिषु संयमं लभते । तदभावाच्च [1]कुतस्तत्र प्रज्ञाऽऽलोकः ? [2]जितोत्तरभूमिकस्य[3] नाधरभूमिषु परचित्तज्ञानादिषु संयमो युक्तः । कस्मात् ? तदर्थस्य

[ विवरणम् ]

तद्भूमिजयसाक्षात्प्रयोजनार्थिना तस्य संयमस्य, जितभूमेः जिताया भूमेः, यत्र भूमौ योगिनः संयतायां संयमो लब्धः, तस्या जिताया भूमेः अनन्तरा या भूमिस्तत्र संयमस्य पूर्वभूमिजयानन्तरं विनियोगः करणीयः ॥

तद्यथा—पृथिव्यादीनां स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वभूमिषु क्रमेण जेतव्यासु, स्थूलायां भूमौ संयमं कृत्वा, तज्जयानन्तरं स्वरूप एवानन्तरे संयमो विनियोजनीयः । नानन्तरं स्वरूपं व्यतिलङ्घ्य सूक्ष्मादिभूमिषु संविदधीत ॥

कस्मादेवम् ? न ह्यजिताधरभूमिरनन्तरां भूमिं विलङ्घ्य प्रान्तभूमिषु उपरितनीषु भूमिषु संयमं लभते ॥

यदि चानन्तरां भूमिमजित्वा प्रान्तभूमिषु संयमं विनियुञ्जीत, तमेव संयमं न लभते । ततश्च तदलाभ एव दोषः । तदलाभाच्च संयमाभावाच्च कुतस्तत्र संयमविषये प्रान्तभूमावित्यर्थः । प्रज्ञाऽऽलोकः । निमित्ताभावात् । न ह्यसति तैलवर्तिज्वलनाभिसन्निपाते प्रदीपालोकः ॥

जितोत्तरभूमिकस्य जितोत्तरात्मादिभूमिकस्य योगिनः नाधरभूमिषु परचित्तज्ञानादिषु संयमो युक्तः । कस्मात् ? तदर्थस्य आत्मादेः उत्तरभूमेरपकृष्टपरचित्तज्ञानादिभूमिवैपरीत्येन अन्यथैवाधिगतत्वात् । परचित्तज्ञानादिभिः संकीर्णं असमाधिगतविवेकात्मकत्वात् । तत्र हि जितोत्तरभूमिसंयमस्य परकीयचित्तालम्बनत्वे संकीर्णचित्ताकारता योगिचित्तस्यापि स्यादिति न युक्तः । तत्रात्मादेरर्थस्यान्यथैव विविक्ततयाऽधिगतत्वात् ॥

---

1. कुतस्तस्य
2. ईश्वरप्रसादात् जितो
3. स्य च

[ भाष्यम् ]

[1]अन्यथैवाधिगतत्वात् । भूमेरस्या इयमनन्तरा भूमिः इत्यत्र योग एव उपाध्यायः । कथम्? । एवं ह्युक्तम्—

" योगेन योगो ज्ञातव्यो योगो योगात् प्रवर्तते ।
[2]अप्रमत्तस्तु योगेन योगेषु रमते चिरम् ॥" इति ॥ ६ ॥

[ सूत्रम् ]

**त्रयमन्तरङ्गं पूर्वेभ्यः ॥ ७ ॥**

[ भाष्यम् ]

तदेतत् धारणाध्यानसमाधित्रयम् अन्तरङ्गं सम्प्रज्ञातस्य समाधेः पूर्वेभ्यो यमादिभ्यः पञ्चभ्यः साधनेभ्य इति ॥ ७ ॥

[ विवरणम् ]

अन्येषां व्याख्यानम्—अर्थस्य परचित्तज्ञानादेः । अन्यथैवाधिगतत्वात् आत्माद्युत्तरभूमिसमधिगमनेनैव अधरपरचित्तज्ञानादिभूमेरर्थस्य अधिगतत्वात् इति ॥

अस्मिन् पक्षे 'अधरभूमिषु संयमोऽनर्थकः' इति वदितव्यमभविष्यत्, न 'न युक्तः' इति । 'न युक्त' इत्येतदसमीचीनमिव दृश्यते ॥

भूमेरस्या इयमनन्तरा भूमिः इयमनन्तरं जयनीयेति कथमवभोत्स्यत इत्याह—तत्र योग एवोपाध्यायः । योगः पूर्वभूमौ संयमलाभः । तेनैवानन्तर्यमवगम्यते ॥

कथम्? एवं ह्युक्तम्—योगेन योगो ज्ञातव्यः । पूर्वसंयमलाभेन योगेन अनन्तरो योगविषयः प्रज्ञानीयः । स च योगः संयमः, योगात् एव पूर्वसंयमलाभादेव प्रवर्तते विविच्यते ॥

यथैव जनुषा अन्धकस्य सोपानपङ्क्तिमारुरुक्षतः प्रथमसोपानप्रतिलब्धपदस्पर्शप्रत्ययेनानन्तरसोपानज्ञानमुपपत्स्यते तथा योगो योगात् प्रवर्तते ॥

यत एवं तस्मात् स इत्थं जानन् अप्रमत्तस्तु योगी योगेन युक्तः सन् योगेषु योगैश्वर्यफलेषु रमते, चिरम् इति ॥ ६ ॥

त्रयमन्तरङ्गं पूर्वेभ्यः । धारणाध्यानसमाधित्रयम् अन्तरङ्गं पूर्वेभ्यः पञ्चभ्यः साधनेभ्यः यमादिभ्यः सम्प्रज्ञातस्य योगस्य । तत्रान्तरङ्गग्रहणं पूर्वसाधनासम्पत्तावप्यत्र त्रये आदरः करणीय इत्येवमर्थम् ॥

---

1. अन्यत एवाधि-
2. योऽप्रमत्तस्तु योगेन स योगे रमते चिरम् ।

[ सूत्रम् ]

तदपि बहिरङ्गं निर्बीजस्य ॥ ८ ॥

[ भाष्यम् ]

तदपि अन्तरङ्गं साधनत्रयं, निर्बीजस्य योगस्य बहिरङ्गं भवति। कस्मात्?। तदभावे भावात् इति ॥ ८ ॥

अथ निरोधचित्तक्षणेषु, चलं गुणवृत्तम् इति कीदृशस्तदा [1]निरोधपरिणामः?—

[ विवरणम् ]

विनापि हि यमादिसाधनपञ्चतयसम्पादनेन जन्मान्तरविहितसंस्कारावेशवशादेव विदेहप्रकृतिलयानामिव धारणादित्रयसम्पत्त्या योग उपकल्प्यते। धारणादित्रयेण विना न योगः संभवति कस्यचित्। तद्व्यापारनैरन्तर्यसंवादात्मकत्वाद्धारणादित्रयस्य। योगस्य चित्तसम्पत्तिरूपत्वात् ॥

यदा तु ज्ञानवैराग्यसम्पत्तिः, तदा न किंचिदन्यद्धारणाद्यप्यपेक्ष्यते। तथा च मङ्किपिङ्गलाप्रभृतीनामनुश्रूयते वैराग्यादेव समस्तसिद्धिः। तथा चोक्तम—'स्थानासनविधानानि' इति पूर्वत्र श्लोकद्वयम् ॥ ७ ॥

तदपि बहिरङ्गं निर्बीजस्य। तदपि एतत् अन्तरङ्गमपि सबीजस्य योगस्य, बहिरङ्गं भवति निर्बीजस्य योगस्य। कस्मात्? तदभावे भावात्। तस्य सबीजान्तरङ्गसाधनत्रयस्याभावेऽपि पुरुषसत्त्वविशेषापेक्षया निर्बीजयोगस्य भावात् बहिरङ्गत्वम् ॥

केचिदतिसमीचीनदर्शना जन्मनैव संस्कारादपरक्ताः। तेषां परवैराग्यविरामप्रत्ययसंशीलनादिसमीक्षया निर्बीजः समाधिरुपजनिष्यत एव। न हि तेषां धारणादिसमीक्षणम्। तथा चोक्तम्—[2]'उक्तः समाहितचित्तस्य योगः। व्युत्थितचित्तोऽपि कथं योगयुक्तः स्यादित्यत इदमारभ्यते' इति। तथा [3]'भवप्रत्ययो विदेहप्रकृतिलयानाम्' इति ॥ ८ ॥

अथ निरोधचित्तक्षणेषु निरोधयुक्तं निरुध्यमानं चित्तं येषु क्षणेषु निरुध्यते ते निरोधचित्तक्षणाः तेषु निरोधकाले इत्यर्थः। क्षणेष्विति बहुवचनं अतीतानागतवर्तमानवृत्तित्वप्रदर्शनार्थम् ॥

---

1. चित्तपरिणामः
2. यो. सू. पा. 2. सू. 1.
3. यो. सू. पा. 1. सू. 19.

[ सूत्रम् ]

**व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ॥ ९ ॥**

[ भाष्यम् ]

[1]व्युत्थानसंस्कारः चित्तधर्मो न स प्रत्ययात्मक इति प्रत्ययनिरोधे न निरुद्धः। निरोधसंस्कारोऽपि चित्तधर्मः। तयोरभिभवप्रादुर्भावौ। व्युत्थानसंस्कारा हीयन्ते निरोधसंस्कारा आधीयन्ते। निरोधक्षणं चित्तमन्वेति। तदेकस्य चित्तस्य प्रतिक्षणमिदं संस्कारान्यथात्वं निरोधपरिणामः।

[ विवरणम् ]

... निरोधस्य (त्रिक्षणं)क्षणे हि निरोधधर्ममन्वीयमानं चित्तं निरुध्यते। चलं गुणवृत्तं गौणं चित्तं गुणवृत्तं चलम् इति अवश्यंभावी तस्य बाह्यवृत्तिभ्यो निरुध्यमानचित्तस्य परिणामः। न ह्यपरिणममानस्य चित्तस्य पुरुषवत् कौटस्थ्ये निरोध उपकल्पते। ततश्चाह—कीदृशस्तदा निरोधपरिणाम इति ॥

व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः। व्युत्थानं विविधमुत्थानं चलनं प्रत्ययाकारेण चित्तस्य। तदुपजनितः संस्कारश्चित्तस्य धर्मिणो धर्मः। न स प्रत्ययात्मकः ॥

तथा निरोधजन्मा संस्कारः अप्रत्ययात्मकः चित्तस्यैव धर्मः। स च व्युत्थानसंस्कारोऽप्रत्ययात्मक इति स प्रत्ययनिरोधे न निरुध्यते। व्युत्थानप्रत्ययनिरोधे नाभिभूतः ॥

प्रत्ययनिरोधाच्च निरोधजः संस्कारः सञ्जायते। तयोः व्युत्थाननिरोधसंस्कारयोः धर्मिणि चित्ते वर्तमानयोः अभिभवप्रादुर्भावौ भवतः ॥

किं तावाविर्भावतिरोभावौ अनियमेन भवतः? न। कथं तर्हि। व्युत्थानसंस्कारा हीयन्ते स्वकार्याक्षमत्वमुपाश्नुवते। निरोधसंस्कारा आधीयन्ते। तौ चाभिभवप्रादुर्भावौ निरोधक्षणं चित्तं धर्मित्वेन अन्वेति? स तयोरभिभवप्रादुर्भावयोश्चित्तेनानुगमो निरोधपरिणामश्चित्तस्य ॥

तत् एतदभिहितं भवति—एकस्य चित्तस्य प्रतिक्षणमिदं संस्कारान्यथात्वं व्युत्थानसंस्काराभिभवेन निरोधसंस्कारप्रादुर्भावेन संस्कारान्यथात्वम्। व्युत्थानसंस्काराणामपि हीयमानतया सत्यपि सम्बन्धे प्रादुर्भवता निरोधेनैव बलवत्त्वात् निरोधपरिणाम इति समाख्यातम् ॥

---

1. व्युत्थानसंस्काराः चित्तधर्माः न ते प्रत्ययात्मकाः इति प्रत्ययनिरोधे न निरुद्धाः। निरोधसंस्कारा अपि चित्तधर्माः।

[ भाष्यम् ]

तदा संस्कारशेषं चित्तम् इति निरोधसमाधौ व्याख्यातम् ॥ ९ ॥

[ सूत्रम् ]

## तस्य प्रशान्तवाहिता संस्कारात् ॥ १० ॥

[ भाष्यम् ]

[1]निरोधसंस्कारपाटवापेक्षा प्रशान्तवाहिता चित्तस्य भवति । [2] तं संस्कारमारभ्य यावत् व्युत्थानधर्मिणा संस्कारेण निरोधधर्मसंस्कारो[3] नाभिभूयत इति ॥ १० ॥

[ सूत्रम् ]

## सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः ॥ ११ ॥

[ विवरणम् ]

[तदा] निरोध्यमानं बाह्येभ्यः प्रत्ययेभ्यः संस्कारशेषं चित्तमिति व्याख्यातम् "विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः" [4]इति ॥

किमेतेन, आह--निरोधावसानत्वात् प्रत्ययाभावावसानतया परिणामस्य निरोधपरिणाम इति ॥

सम्प्रज्ञातावस्थायां सन्तोऽपि प्रत्यया न विवक्षिताः । किं तु प्रतिक्षण-संस्कारान्यथात्वमेव विवक्ष्यते । यथा निरुद्धभूमिनि चेतसि विद्यमानोऽपि समाधिः न विवक्ष्यते । निरोधमात्रस्य विवक्षितत्वात् । तथा सबीजावस्थायामपि संस्कारान्यथात्वमात्रमेव विवक्षितम् । न प्रत्ययाः समाधिरेकाग्रता चेति ॥ ९ ॥

तस्य चित्तस्य निरोधपरिणाममनुगच्छतः प्रशान्तवाहिता संस्कारात् । निरोधसंस्कारपाटवापेक्षा निरोधसंस्कारस्य पाटवं द्रढिमा तदपेक्षा प्रशान्त-वाहिता प्रसन्नता चित्तस्य भवति ॥

सा प्रशान्तवाहिता कियन्तं कालमित्याह--तं संस्कारं निरोधसंस्कारं आरभ्य यावत् व्युत्थानधर्मिणा व्युत्थानं धर्मो व्युत्थानजनितत्वाद्यस्य तेन संस्कारेण निरोधधर्मसंस्कारो नाभिभूयते, तावन्तं कालमस्य प्रशान्तवाहिता । निरोधसंस्कारसमुदयादिति ॥ १० ॥

---

1. निरोधसंस्काराभ्यासपाट-
2. तत्संस्कारमान्द्ये व्युत्था-
3. रोऽभिभूयते
4. यो. सू. पा. 1. सू. 18.

[ भाष्यम् ]

सर्वार्थता चित्तधर्मः । एकाग्रताऽपि चित्तधर्मः । सर्वार्थतायाः क्षयः, तिरोभाव इत्यर्थः । एकाग्रताया उदयः, आविर्भाव इत्यर्थः । तयोः धर्मित्वेन अनुगतं चित्तम् । तदिदं चित्तं अपायोपजनयोः स्वात्मभूतयो- र्धर्मयोः [1]अनुगमात् समाधीयते । स चित्तस्य समाधिपरिणामः ॥ ११ ॥

[ सूत्रम् ]

**[2]तत्र पुनः शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता- परिणामः ॥ १२ ॥**

[ भाष्यम् ]

समाहितचित्तस्य पूर्वः प्रत्ययः शान्तः । उत्तरः तत्सदृश उदितः ।

[ विवरणम् ]

सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः । सर्वार्थता भोगापवर्गार्थयोग्यताविचित्रता चित्तधर्मः । वक्ष्यति—[3]'द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्' इति । एकाग्रताऽपि चित्तस्य धर्मः शान्तोदितप्रत्यययोः साम्यं समाधीयमानस्य चित्तस्य सर्वार्थतायाः क्षयः भवति । तिरोभावः इत्यर्थः । न हि किंचिद्विद्यमानं विनङ्क्ष्यति । एकाग्रताया उदयः भवति । आविर्भाव इत्यर्थः । नाविद्यमानमुत्पद्यते ॥

तयोः क्षयोदययोः धर्मित्वेनानुगतं चित्तम । पूर्वसूत्रादन्वयग्रहणमिहापि सन्निधीयते । सर्वार्थतायाः क्षयमेकाग्रतायाश्चोदयं नियमेनान्वीयमानं चित्तं समाधिप्राधान्येन परिणमते । योऽसौ चित्तेन सर्वार्थतैकाग्रताक्षयोदययोरनुगमः स समाधिपरिणामः । समाधेश्च प्राधान्यमेकाग्रताभूमौ व्याख्यातम् 'यस्त्वेकाग्रे चेतसि स भूतमर्थं प्रद्योतयति' इति ॥

तदेवाह—तदिदं चित्तम्, अपायोपजनौ स्वात्मभूतौ अव्यतिरिक्तौ तयोर्धर्मयोः सर्वार्थतैकाग्रतयोः अनु(भवा) गमात् समाधीयते । स चित्तस्य समाधिप्राधान्यात् समाधिपरिणामः ॥ ११ ॥

तत्र पुनः समाधिकाले शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रता- परिणामः । समाहितचित्तस्य निरुद्धबाह्यवृत्तेः पूर्वः प्रत्ययः शान्तः तिरो- भूतः । उत्तरस्तत्सदृश उदितः प्रादुर्भूतः । समाधिचित्तं समाधानविशिष्टं समाध्यवस्थम् । समाधिचित्तमुभयोः शान्तोदितयोः प्रत्यययोः अनुगतम् ॥

1. अनुगतं. 2. ततः पुनः 3. यो. सू. पा. 4. सू. 23.

31

[ भाष्यम् ]

समाधिचित्तं उभयोरनुगतम् । पुनस्तथैव आ समाधिभ्रेषात् इति । स खल्वयं धर्मिणः चित्तस्य एकाग्रतापरिणामः ॥ १२ ॥

[ सूत्रम् ]

**एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः ॥१३॥**

[ भाष्यम् ]

एतेन पूर्वोक्तेन चित्तपरिणामेन धर्मलक्षणावस्थारूपेण भूतेन्द्रियेषु धर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्च उक्तो वेदितव्यः ।

[ विवरणम् ]

**पुनस्तथैव** यथा प्रत्यय आद्यः शान्त उत्तरस्तत्सदृश उपजातः, स च शान्तः पुनरन्य उदितः, स शान्तः पुनश्चान्य उदितः, इत्येवं **आ समाधिभ्रेषात्** व्युत्थानसंस्कारेण यावत् समाधिः विभ्रंशते ॥

**स खल्वयं धर्मिणः चित्तस्य** प्रतिक्षणं सदृशशान्तोदितप्रत्यययोरनुगमः **एकाग्रतापरिणामः** ॥

तत्र यावत् बाह्यवृत्तिनिरोधादारभ्य चित्तस्य संस्कारपरिशेषता, तावत् निरोधपरिणामः ॥

तथा बाह्यप्रत्ययनिरोधात प्रभृति आ प्राक् अशेषप्रत्ययनिरोधात्, अशेषप्रत्ययनिरोधोत्तरकालं च एकाग्रतोदयाभावात्, तावत् समाधिपरिणामः ॥

तथा समाधिपरिणामकाल एव शान्तोदितयोस्तुल्ययोः संभवादेकाग्रतापरिणामः । पूर्वपरिणा(मान)मनान्तरीयकत्वमुत्तरोत्तरपरिणामस्येति क्रमेण त्रयोऽपि परिणामा व्याख्याताः ॥

किमनेन परिणामान्वाख्यानेन प्रयोजनम्? उच्यते—चलं गुणवृत्तं, गौणं च समस्तं परिणामधर्मकमनवस्थितमिति वैराग्यभावनार्थम् । तथा परिणामत्रयसंयमादतीतानागतज्ञानार्थं च एतदन्वाख्यानम् ॥ १२ ॥

**एतेन भूतेन्द्रियेषु धर्मलक्षणावस्थापरिणामा व्याख्याताः । एतेन पूर्वोक्तेन चित्तपरिणामेन** । किंविशिष्टेन? **धर्मलक्षणावस्थारूपेण** धर्मरूपेण लक्षणरूपेण अवस्थारूपेण च । **भूतेन्द्रियेषु** भूतेषु पृथिवीप्रभृतिषु स्थूलेषु, इन्द्रियेषु च श्रोत्रादिषु, येषां तत्त्वान्तरपरिणामो नास्ति । **धर्मपरिणामो लक्षणपरिणामोऽवस्थापरिणामश्चोक्तो वेदितव्यः** ॥

[ भाष्यम् ]

तत्र व्युत्थाननिरोधयोः अभिभवप्रादुर्भावौ धर्मिणि धर्मपरिणामः । लक्षणपरिणामो[1] निरोधस्त्रिलक्षणः त्रिभिरध्वभिर्युक्तः । स खलु अनागतलक्षणमध्वानं [2]हित्वा धर्मत्वमनतिक्रान्तो वर्तमानलक्षणं प्रतिपन्नः यत्रास्य स्वरूपेण अभिव्यक्तिः । एषोऽस्य द्वितीयोऽध्वा ।

[ विवरणम् ]

चित्तस्यानवस्थितत्वेन गम्यमानेन परिणामेन भूतेन्द्रियाणां परिणामस्य प्रकारत्रययोगिनः चित्तपरिणतिवत् असुविज्ञानत्वात् अतिदेशः क्रियते ॥

ननु च निरोधसमाध्येकाग्रतापरिणामाश्चित्तस्याभिहिताः । न तु धर्मलक्षणावस्थापरिणामाः । कुतस्तत्रातिदेश इति, अभिहितत्वमेषां दर्शयति—तत्र व्युत्थाननिरोधयोः धर्मयोः अभिभवप्रादुर्भावौ धर्मिणि चित्ते धर्मपरिणामः ॥

एतस्माद्धि धर्मभेदवचनात् धर्मभेदमवादिष्म । तयोश्च धर्मपरिणामयोः व्युत्थाननिरोधयोरभिभवप्रादुर्भाववचनात् लक्षणावस्थापरिणामावपि च अवादिष्मैव ॥

कथम्? वर्तमानलक्षणादतीतलक्षणमभिसम्पद्यमानो धर्मोऽभिभूयते । यश्च अनागतलक्षणात् वर्तमानलक्षणमभिसम्पद्यमानः स प्रादुरस्ति । तदभिभवप्रादुर्भाववचनाच्च प्रतिक्षणं दुर्बलरूपोऽवस्थापरिणाम उक्तो भवतीत्याह—लक्षणपरिणामो निरोधस्त्रिलक्षण इति ॥

चित्ते लक्षणपरिणामः त्रिलक्षणत्वेन त्रिभिरध्वभिः अतीतानागतवर्तमानैः युक्तः प्रतिपाद्यते परिणामिनो ह्येकैकस्य त्रयोऽप्यध्वान एतेऽवश्यंभाविनः । यस्य त्वेते न सन्ति सोऽपरिणामी कूटस्थ इत्युच्यते ॥

स खलु निरोधः अनागतलक्षणमध्वानं हित्वा धर्मत्वं निरोधधर्मत्वं अनतिक्रान्तः असत्कार्यारम्भाभावात् । असत्कार्यारम्भे हि त्रिकालत्वमेकस्य वस्तुनो नोपपद्यते (नापि) कालत्रयपरिच्छेद्यस्य त्रिलक्षणस्याभावात् । अत उच्यते—धर्मत्वमनतिक्रामन्नेव वर्तमानं लक्षणं प्रतिपन्नः यत्र यस्मिन् वर्तमाने लक्षणे अस्य स्वरूपेणाभिव्यक्तिः एषोऽस्य निरोधस्य अनागताध्वसमीक्षया द्वितीयोऽध्वा ॥

---

1. -णामश्च नि

2. -ध्वानं प्रथमं हित्वा

[ भाष्यम् ]

न चातीतानागताभ्यां लक्षणाभ्यां वियुक्तः । तथा व्युत्थानं त्रिलक्षणं त्रिभिरध्वभिर्युक्तं वर्तमानलक्षणं हित्वा धर्मत्वमनतिक्रान्तं अतीतलक्षणं प्रतिपन्नम् । एषोऽस्य [1]द्वितीयोऽध्वा । न चानागतवर्तमानाभ्यां लक्षणाभ्यां वियुक्तम् । [2]पुनः व्युथानमुपसम्पद्यमानं अनागतलक्षणं हित्वा धर्मत्वमनतिक्रान्तं वर्तमानलक्षणं प्रतिपन्नम् । यत्रास्य स्वरूपाभिव्यक्तौ सत्यां व्यापारः । एषोऽस्य द्वितीयोऽध्वा । न चातीतानागताभ्यां लक्षणाभ्यां वियुक्तं इति । एवं पुनर्निरोधः, एवं पुनर्व्युत्थानं इति ।

[ विवरणम् ]

यदा तु व्युत्थानं वर्तमानं लक्षणमारोक्ष्यति, तदा निरोधोऽतीतलक्षणमध्वानं तृतीयं प्राप्स्यतीति स तृतीयोऽध्वा भविष्यत्येव ।

स्यादेतत्—वर्तमानलक्षणप्रतिपत्तौ निरोधस्य त्र्यध्वत्वं नास्तीति, अत आह—न चातीतानागताभ्यां लक्षणाभ्यां वियुक्तः । कुतः ? येन स एवानागतो वर्तमानोऽतीतश्चेति ॥

तथा व्युत्थानं त्रिलक्षणं त्रिभिरध्वभिः अतीतानागतवर्तमानैः युक्तं वर्तमानलक्षणं हित्वा धर्मत्वमनतिक्रान्तं यथा व्याख्यातं निरोधे निरोधिनि धर्मे वर्तमानमध्वानमभिसम्पद्यमाने अतीतलक्षणं अध्वानं प्रतिपन्नम् ॥

एषोऽस्य व्युत्थानस्य वर्तमानं प्रथममध्वानमभिसमीक्ष्य द्वितीयोऽध्वा । द्वितीये तु पर्याये तृतीय एवाध्वा द्वितीयो भविष्यति । न चानागतवर्तमानाभ्यां लक्षणाभ्यां वियुक्तम् ॥

पुनर्व्युत्थानं निरोधसंस्कारेण उपसम्पद्यमानम् अनागतलक्षणं अध्वानं हित्वा धर्मत्वमनतिक्रान्तं वर्तमानलक्षणं प्रतिपन्नम् । यत्रास्य स्वरूपेणाभिव्यक्तौ सत्यां व्यापारः स्वकार्योपादनसामर्थ्यम् । एषोऽस्य अनागताभिसमीक्षया द्वितीयोऽध्वा । न चातीतानागताभ्यां लक्षणाभ्यां वियुक्तम् ॥

यथा चित्तं व्युत्थाननिरोधधर्माभ्यां न युज्यते । एवं पुनर्निरोधः एवं पुनः व्युत्थानमिति एष लक्षणपरिणामश्चित्तधर्मयोर्व्युत्थाननिरोधयोः ॥

---

1. -स्य तृ.
2. एवं पुनः

[ भाष्यम् ]

तथा अवस्थापरिणामः । [1]निरोधक्षणेषु निरोधसंस्कारा बलवन्तो भवन्ति, दुर्बला व्युत्थानसंस्काराः, इत्येवं (ष) धर्माणामवस्थापरिणामः ॥

[2]धर्मिणो धर्मैः परिणामो, धर्माणां त्र्यध्वनां लक्षणैः परिणामो लक्षणानामपि अवस्थाभिः परिणाम इत्येवं धर्मलक्षणावस्थापरिणामैः[3] अशून्यलक्षणं गुणवृत्तमवतिष्ठते । चलं[4] गुणवृत्तम् । गुणस्वाभाव्यं तु प्रवृत्तिकारणमुक्तं गुणानाम् इति ॥

एतेन भूतेन्द्रियेषु धर्मधर्मिभेदात् त्रिविधः परिणामो वेदितव्यः ।

[ विवरणम् ]

तथा अवस्थापरिणामः परिदृश्यते । कथम्? निरोधक्षणेषु निरोधे वर्तमाने निरोधसंस्कारा बलवन्तो भवन्ति । संस्कारबलवत्त्वेन निरोधबलवत्त्वमपि । दुर्बला व्युत्थानसंस्काराः, तत एव व्युत्थानदुर्बलत्वमपि । तथा व्युत्थानलक्षणे व्युत्थानसंस्कारबलीयस्त्वं निरोधसंस्कारदुर्बलत्वम्, इत्येवं प्रतिक्षणं दृढदुर्बलात्वस्थाभ्यां युज्यमानानां धर्माणां अवस्थापरिणामः ॥

तत्र केन रूपेण कस्य परिणाम इति दर्शयति—धर्मिणो धर्मैः परिणामः । यथा चित्तस्य धर्मिणो निरोधव्युत्थानादिधर्मैः । धर्माणां त्र्यध्वनां लक्षणैः परिणामः । यथा निरोधादिचित्तधर्माणां अनागतादिलक्षणैः । लक्षणानामप्यवस्थाभिः परिणामः । यथा वर्तमानादिलक्षणानां दृढदुर्बलत्वाद्यवस्थाभिः । इत्येवं धर्मलक्षणावस्थापरिणामैः अशून्यलक्षणम् अशून्यरूपं गुणवृत्तमवतिष्ठते ॥

चलं गुणवृत्तम् । एतदेव तु गुणस्वाभाव्यं प्रवृत्तिकारणं सकलव्यापारकारणं उक्तं गुणानां सत्त्वादीनाम् इति । एतेन चेतसि प्रसिद्धेन धर्मलक्षणावस्थापरिणामत्रितयेन भूतेन्द्रियेषु धर्मधर्मिभेदात् त्रिविधः परिणामो वेदितव्यः ॥

---

1. तत्र नि-
2. तत्र ध-
3. -मैः शून्यं न क्षणमपि गु-
4. -लं च गु-

[ भाष्यम् ]

परमार्थतस्तु एक एव परिणामः । धर्मिस्वरूपमात्रो हि धर्मः । धर्मिविक्रियैवैषा धर्मद्वारा प्रपञ्च्यत इति । तत्र धर्मस्य धर्मिणि वर्तमानस्यैव अध्वसु अतीतानागतवर्तमानेषु भावान्यथात्वं भवति, न[1] द्रव्यान्यथात्वम् । यथा सुवर्णभाजनस्य भित्त्वा अन्यथा क्रियमाणस्य भावान्यथात्वं भवति न सुवर्णान्यथात्वम् इति ।

अपर आह—[2]धर्माभ्यधिको धर्मी । पूर्वतत्त्वात् अनतिक्रामन् पूर्वापरावस्थाभेदं अनुपतितः कौटस्थ्येनापि परिवर्तेत यद्यन्वयी स्यात् इति ॥

[ विवरणम् ]

परमार्थतस्त्वेक एव परिणामः । कथम्? धर्मिस्वरूपमात्रो हि धर्मः । न हि धर्मिपरिहारेण धर्मो नाम पृथगस्ति । नापि धर्मपरित्यागेन लक्षणं नाम पृथक् भाव्यते । नापि लक्षणव्यतिरेकेण अवस्थानां पृथक्त्वं भवति । तेन धर्मिविक्रियैवैषा धर्मद्वारा धर्मभेदद्वारेण त्रिधा प्रपञ्च्यते ॥

कथं पुनर्धर्मिविक्रियैवैषा । न पुनरत्यन्तापूर्वोत्पत्तिविनाशाविति? तत आह—तत्र धर्मस्य घटादेः धर्मिणि मृदाख्ये वर्तमानस्य अध्वस्वतीतानागतवर्तमानेषु भावान्यथात्वमेव प्रत्ययान्यथात्वम्, अतीतो घटः, वर्तते, अनागतः, इति च धर्मिणि वर्तमानस्यैव । स एव धर्मस्याविर्भावतिरोभावान्यथात्वम् । न द्रव्यान्यथात्वं तदेव मृद्द्रव्यं धर्मि रूपान्तरं च ॥

उदाहरणं परिदर्शयति—यथा सुवर्णभाजनस्य भित्त्वा अन्यथा कुण्डलादिभावेन क्रियमाणस्य भावान्यथात्वं स्वस्तिककुण्डलादिसंस्थानान्यत्वम् । न सुवर्णद्रव्यान्यथात्वमिति ॥

अपर आह असत्कार्यसमारम्भाभिमानी—धर्माभ्यधिको धर्मव्यतिरिक्तो धर्मी, धर्मश्चाविद्यमानोऽन्यश्चान्यश्च समुदायिष्यते । न पुनरेको धर्मी धर्मेषु भूतभविष्यद्वर्तमानेषु धर्माव्यतिरिक्तोऽन्वयीति ॥

यद्यन्वयी धर्मानभ्यधिको धर्माव्यतिरिक्तः पूर्वतत्त्वात् पूर्वपूर्वद्रव्यस्वरूपात् अनतिक्रामन् पूर्वापरावस्थाभेदम् अतीताद्यवस्थाभेदम् अनुपतितः अनुगतः स्यात्, ततश्च एष दोषः प्रसजति—स धर्मी तवाभिमतः कौटस्थ्येनापि परिवर्तेत अपरिणामित्वे वर्तेत ॥

---

1. न तु द्र-
2. धर्मानभ्यधिको धर्मी पूर्वतत्त्वानतिक्रमात् । पूर्वापरावस्थाभेदमनुपतितः कौटस्थ्येनैव परिवर्तेत यद्यन्वयी स्यात् इति ।

[ भाष्यम् ]

अयमदोषः । कस्मात् ? [1]एकान्तानभ्युपगमात् । तदेतत् त्रैलोक्यं व्यक्तेरपैति । नित्यत्वप्रतिषेधात् । अपेतमप्यस्ति । विनाशप्रतिषेधात् ।

[ विवरणम् ]

अत्राह—अयमदोषः । कस्मात् ? एकान्तानभ्युपगमात् अत्यन्त-कौटस्थ्यविनाशयोः धर्मिणोऽनभ्युपगमात् । यद्यत्यन्तं कूटस्थो धर्मी स्यात् आत्मवत्, ततश्च अस्माद्धर्मिणो धर्माणामभेदात् कौटस्थ्यं प्रसज्येतेति दोषः स्यात् । न तु धर्मिणां गुणानामत्यन्तकौटस्थ्यमभ्युपगम्यते । परिणामिनित्यत्वं हि गुणानां वदिष्यति ॥

अथ वा, धर्मधर्मिणोः एकान्तभेदाभेदानभ्युपगमात् । एकान्तेन हि धर्मिभ्योऽन्वयिभ्यो धर्माणां[अ]भेदे कौटस्थ्यं प्राप्नुयात् । अत्यन्तभेदे वा धर्माणां अत्यन्तविनाशः स्यात् । न त्वत्यन्तभेदाभेदावभ्युपायिष्येते । तस्मात् न कौटस्थ्यदोष इति ॥

कथं कौटस्थ्याभाव इत्याह—तदेतत् त्रैलोक्यं व्यक्तेरपैति, न कूटस्थम् । कस्मात् ? नित्यत्वप्रतिषेधात् । कार्यत्वादेव हि नित्यत्वं प्रतिषिद्धम् । अथात्यन्तविनष्टमिति चेदाह—अपेतमप्यस्ति, विनाशप्रतिषेधात् । कारणस्य नित्यत्वात् तदभेदाच्च कार्यस्य अत्यन्तविनाशः प्रतिषिद्ध एव ॥

ततश्च यदुच्यते कैश्चित्–विरुद्धहेत्वाभासोदाहरणमेतदिति, कथं ? यथा– 'असौ विकारो व्यक्तेरपैति, नित्यत्वप्रतिषेधात्, अपेतमप्यस्ति, विनाश-प्रतिषधोत्' इत्यत्र नित्यत्वप्रतिषेधात् इत्ययं हेतुः 'अपेतोऽपि विकारोऽस्ति' इत्यनेन सिद्धान्तेन विरुध्यते ॥

कथम् ? व्यक्तिरात्मलाभः, अपायः प्रच्युतिः, यद्यात्मलाभात् प्रच्युतो विकारोऽस्ति, नित्यत्वप्रतिषेधो नोपपद्येत । यत्तु व्यक्तेरपेतस्यापि विकारस्या-स्तित्वं तत् खलु नित्यत्वमिति ॥

नित्यत्वप्रतिषेधो नाम विकारस्यात्मलाभात् प्रच्युतिः । यदात्मलाभात् प्रच्यवते तदनित्यम् । यदस्ति न तदात्मलाभात् प्रच्यवते । अस्तित्वं च आत्मलाभात् प्रच्युतिश्चेति विरुद्धावेतौ धर्मौ सह न सम्भवतः । सोऽयं हेतुः यं सिद्धान्तमाश्रित्य प्रवर्तते तमेव व्याहन्तीति विरुद्धो हेतुरिति ॥

---

1. एकान्तताऽनभ्युपगमात् ।

नायं दोषः । वस्तूनां व्यक्ताव्यक्तधर्मकत्वाभ्युपगमात् । यथा हि घटादिर्विद्यमानोऽपि सन् अगारे नोपलभ्यते । न च तावता असौ नास्तीति शक्यं प्रतिज्ञातुम् । आलोकोपायेन हि व्यज्यते । तथा इदं त्रैलोक्यं कारणे संसृष्टं विद्यमानमेव अनभिव्यक्तात्मकगुणस्वभावतया, पुरुषार्थनिमित्तेनाविष्क्रियते ॥

तथैव च गतिसंस्कारक्षये स्थितिसंस्काराभिव्यक्तौ कारणं प्रति संसृज्यमानं व्यक्तेरपैति । यथा दीपालोकतिरोधाने विद्यमानोऽपि घटादिः सन्तमसावष्टम्भात् व्यक्तेरपसरति, तथा अत्रापि महदादयो धर्माः त्र्यध्वानः संसर्गविसर्गधर्माणः, न तु सत्त्वादयो धर्मिणः ॥

ततस्त्रैलोक्यं महदादिस्तम्बपर्यवसानं सत्त्वादीनां धर्मभूतम[न]भिव्यक्तिधर्मकं सत् अत्यन्तनिरुद्धसूक्ष्मधर्मसमुदयात् व्यक्तिस्थूलधर्मरूपेण न गृह्यत इत्युच्यते—तदेतत् त्रैलोक्यं व्यक्तेरपैति इति । न पुनः धर्मिस्वरूपेणापायः । तथा च धर्मिरूपेण नित्यत्वादुच्यते—तदपेतमप्यस्ति इति ॥

तदेवं व्यक्तिरूपश्च शक्तिरूपश्चैको धर्मी, व्यक्तिरूपेण च तस्यानित्यत्वं, शक्तिरूपेण च नित्यत्वमिति कथमेष विरोधः स्यात् । न हि देवदत्तश्चलनादिव्यापारेण सर्वदा गृह्यमाणश्चलनादिविरामे विरंस्यति । चलनमेव हि तिरोधीयते । तस्मादव्यक्तावस्थायामप्यस्ति धर्मी, व्यक्तावस्थायामुपलभ्यमानत्वात्, अन्धतमसावस्थितघटादिवत् ॥

व्यक्तिरपि स्वकीयधर्मान्तरसमीक्षया धर्मिणी । सा च धर्मिरूपेण नित्या, धर्मरूपेणानित्या अभ्युपेयते । एवं विकारेषु धर्मधर्मिभेदोऽनवस्थित इत्यनवस्थाऽपि इष्यत एव ॥

तत्र व्यक्तेरपैति इत्यनेन न विरुध्यते, नित्यत्वप्रतिषेधात् इत्ययं हेतुः । नापि अपेतमप्यस्ति इत्यनेन विरोधः । उभयोर्भिन्नविषयत्वात् । नापि विनाशप्रतिषेधात् इत्ययं अपेतमप्यस्ति इत्यनेन विरुध्यते । यथा बाह्यादपेतोऽप्यस्ति देवदत्त इति ॥

अथ मन्वीथाः—अस्ति इति नित्यत्वमुच्यते, तेन नित्यत्वप्रतिषेधात् इत्ययं नित्यत्वेन विरोधमालिङ्गतीति । न—अनभ्युपगमात् । न हि व्यक्तेर्नित्यत्वमभ्युपगच्छेम, तस्या एव नित्यत्वं प्रतिषेधेम । शक्तिव्यक्तिधर्मकत्वाभ्युपगमादिति हि प्रतिपादितम ॥

तदेतदनिर्ज्ञाय पराभिप्रायं विरोधोदाहरणत्वापादानम् अन्धदर्पणीयवृत्तान्त-मुद्भावयति । यथा किल कश्चिदन्धः स्वां अदर्शनशक्तिं अनवधार्य स्वार्थमादर्शमुपार्जयति तद्वदेतदाभाति ॥

अपि च यद्यप्येकत्रैव व्यक्तौ शक्तौ वा नित्यत्वमनित्यत्वं च अध्यारोप्य त्वं पक्षसिषाधयिषया ब्रवीथाः, एवमपि विरुद्धोदाहरणत्वं न संभवति, विपरीता(त)साधनात् । कथम्? अपेतोऽप्यस्ति इति नित्यत्वप्रतिषेधात् इत्युच्यते । नित्यत्वप्रतिषेधात् इति अनित्यत्वादित्युक्तं भवति । अपेतस्याप्यस्तित्वं नित्यत्वमुच्यते । नित्यत्वस्य विपरीतमनित्यत्वम् । न च पक्षस्यानित्यत्वस्य अनित्यत्वं हेतुर्भवति, यो विपरीतं साधयन् नित्यत्वं विरुन्धीत । न ह्यनिष्टमसाधयन् विरुद्धतामियात् ॥

अथापि नित्यत्वप्रतिषेधो नाम आत्मलाभात् प्रच्युतिरिति विक(ल्पस्य)ल्प्य वावदेथाः--एवमपि शब्दभेदमात्रं(त्रात्) नार्थभेदः । आत्मलाभात् प्रच्युतिः, अनित्यत्वं, इत्येकोऽर्थः ॥

अथापि नित्यत्वोपपत्त्यभावादित्यवलम्बेथाः—एवमपि नित्यत्वप्रतिषेधात् इत्ययं शब्दः (एकस्यां शुक्तिकायां) नित्यत्वोपपत्त्यभावादित्यस्यार्थस्य (अ)वाचकः ॥

अथापि वाचक इत्यारोप्य प्रतिभाषेत--एवमपि शक्तिव्यक्तिधर्मधर्मिभे-(दरूपेण)दे न नित्यत्वमनित्यत्वं(त्वरूपं) चेत्युक्तमेव समाधानम् ॥

एतेन व्यक्तेः अपेतोऽप्यस्ति, विनाशप्रतिषेधात् इति विरोधोद्भावनं प्रत्याख्यातम् ॥

एवमवस्थिते व्यक्तेरपेतस्य प्रत्यक्षेणानुपलभ्यमानस्य कथमस्तित्वम्? यावता, नास्ति, अनुपलभ्यमानत्वात्, नभःकुसुमवत् इति ॥

अत्रोच्यते--अनुपलब्धिरसिद्धो हेतुः । अनुमानागमाभ्यामुपलब्धेः । यदेतत् व्यक्तं एतत् प्रागुत्पत्तेरप्यस्ति, यत उत्पद्यते । असच्चेन्नोत्पद्येत, शशविषाणवदेव ॥

किं च—असतः सत्त्वे सतश्चासत्त्वे सर्वत्र न आश्वस्युः । किं च--अनुपलब्धेश्चेदसत्त्वं मुक्तात्मकारणादीनां च प्रागुपलम्भादूर्ध्वं च अस्तित्वं केन लभ्यते? तथा—

[ भाष्यम् ]

[1]संसर्गादस्य सौक्ष्म्यम् । [2]अतोऽनुपलब्धिः इति ।

लक्षणपरिणामो धर्मोऽध्वसु वर्तमानोऽतीतः, अतीतलक्षणयुक्तः, अनागतवर्तमानाभ्यां लक्षणाभ्यां अवियुक्तः । तथा वर्तमानः, वर्तमानलक्षणयुक्तः, अतीतानागताभ्यां लक्षणाभ्यां अवियुक्तः । तथा अनागतः, अनागतलक्षणयुक्तः, वर्तमानातीताभ्यां लक्षणाभ्यां अवियुक्तः इति ॥

यथा पुरुषः एकस्यां स्त्रियां रक्तो न शेषासु विरक्तो भवति इति ॥

[ विवरणम् ]

[3]'नासतो विद्यते भावो नाभावो विद्यते सतः ।'

इति आगमः । प्रत्यक्षानुपलब्धिश्च नासत्त्वस्य कारणम् । अथ व्यक्तेरेव विकारो विद्यमानश्चेत्, कुतो नोपलभ्यत इति? आह—साक्षात् कारणे संसर्गादस्य सौक्ष्म्यम्, अतोऽनुपब्धिः । न असत्वात् ॥

इदानीं भूतेन्द्रियाणां लक्षणपरिणाम इदमुच्यते—लक्षणपरिणामो धर्मो यथा मृदो घटादिः अध्वसु अतीतादिषु वर्तमानोऽतीतो धर्मः । किमुक्तं भवति? अतीतलक्षणयुक्तः, न पुनरसत्त्वमापन्नः । इतराभ्यां च अनागतवर्तमानाभ्यामवियुक्तः । कारणस्य मृदो वर्तमानत्वात् तत्र संसृष्टस्य घटस्य [अ]विद्यमानत्वेऽपि(नस्यापि) युक्तो वर्तमानेन लक्षणेन घटः । तथा भविष्यन्नपि घटो मृद एवानागतः सन् भविष्यतीत्यनागतलक्षणेनाप्यवियुक्तः तथा वर्तमानः, वर्तमानलक्षणयुक्तः, अतीतानागताभ्यां लक्षणाभ्यामवियुक्तः ॥

तथा अनागतः अनागतलक्षणयुक्तः, वर्तमानातीताभ्यां लक्षणाभ्यामवियुक्तः अतीतानागतलक्षणयोः मृदात्मकत्वात् घटस्य व्यवहितेनाप्यतीतलक्षणेनावियोगः॥

कथमेकलक्षणयुक्तो धर्मो लक्षणाभ्यामपराभ्यामवियुक्त इत्यवियोगस्य दृष्टान्तमाह—यथा पुरुष एकस्यां स्त्रियां रक्तो न शेषासु विरक्तो भवति । शेषासु तु भूतभविष्यल्लक्षणयुक्तो रागः । सतश्चाविनाशादसतश्चानुत्पत्तेरिति हि प्रतिपादितम् ॥

---

1. संसर्गाच्चास्य
2. सौक्ष्म्याच्चानुपलब्धिः
3. भ- गी- 2. 16.

[ भाष्यम् ]

अत्र लक्षणपरिणामे सर्वस्य सर्वलक्षणयोगात् अध्वसङ्करः[1] परैः दोषश्चोद्यत इति ॥

तस्य परिहारः—धर्माणां धर्मत्वं अप्रसाध्यम् । सति च धर्मत्वे लक्षणभेदोऽपि वाच्यः, न वर्तमानसमय एवास्य[2] । एवं हि न चित्तं रागधर्मकम्[3] । क्रोधकाले रागस्य असमुदाचारात् इति ॥

[ विवरणम् ]

अत्र लक्षणपरिणामे सर्वस्य धर्मस्य सर्वलक्षणयोगादध्वसंकरः परैर्दोषश्चोद्यते । कथम् ? यो हि भविष्यति स वर्तते, अतीतश्च । तेन अतीते वर्तमानभविष्यत्त्वम् , वर्तमाने अतीतभविष्यत्त्वम् , भविष्यति च अतीतवर्तमानत्वम् इत्येवमन्योन्याध्वसंकरः ॥

तस्य परिहारः अयमुच्यते—धर्मिणो मृदाख्यस्य धर्माणां पिण्डघट-कपालानां धर्मत्वं धर्मान्तराच्च भिन्नत्वम् अप्रसाध्यम् । सति च धर्मत्वे तद्भेदे च, लक्षणभेदोऽपि सिद्धो वाच्यः ॥

कथम् ? यथा पिण्डावस्थायां अनागतलक्षणयुक्तो घटो न वर्तमानो नापि अतीतः । यद्यपि मृत्त्वभविष्यत्त्वसमीक्षया अतीतवर्तमानाभ्य अपि[अवि]युक्तः ॥

तथा वर्तमानलक्षणयुक्तो नातीतो नाप्यनागतः । यद्यपि धर्मिरूपेणापे[वे]-क्ष्यमाणः अतीतानागतलक्षणाभ्यां हीयमानजायमानाभ्यां लक्षणाभ्या-मपि[वि]युक्तः ॥

तथा अतीतोऽतीतलक्षणयुक्तः न वर्तमानो नाप्यनागतः । यद्यपि मृत्त्वानुभूतव्यक्तिसमीक्षया अनागतवर्तमानाभ्यामवियुक्तः ॥

तथा पिण्डकपालादिषु योजनीयम् । तस्मादाह—न वर्तमानसमय एवास्य एकं लक्षणं धर्मस्य । किं तर्हि ? प्रकारेणोक्तेन त्रिलक्षणत्वम् । अतो नाध्वानः संकीर्यन्ते ॥

एवं हि न चित्तं रागधर्मकम् इति न चित्ते वि[राग]धर्मिणि रागादीनां धर्मत्वे तद्भेदे च सिद्धे अध्वसंकरः । कस्मात् ? क्रोधकाले रागस्य असमुदाचारात् ।

---

1. -रः प्राप्नोतीति परः

2. -स्य धर्मत्वम् ।

3. -म् स्यात् ।

[ भाष्यम् ]

किं च, त्रयाणां लक्षणानां युगपदेकस्यां[1] वृत्तौ नास्ति सम्भवः । क्रमेण तु स्वव्यञ्जकाञ्जनस्य भावो भवेत् इति । [2]उक्तं च "रूपातिशयाः वृत्त्यतिशयाश्च विरुध्यन्ते । सामान्यानि तु अतिशयैः सह प्रवर्तन्ते" । तस्मात् असंकरः । यथा रागस्यैव क्वचित् समुदाचार इति न तदानीं अन्यत्राभावः । किं तु, केवलं सामान्येन समन्वागत इति अस्ति तदा[3] तस्य भावः । तथा लक्षणस्य इति ॥

[ विवरणम् ]

न हि क्रोधकाले रागः स्वकाल इव समुदाचरति । क्रोधकाले हि रागः अतीतोऽनागतो वा । तथा क्रोधोऽपि रागकाले । यदि हि वर्तमानसमय एवैकं लक्षणं अभविष्यत्, क्रोधकालेऽपि रागः समुदाचरिष्यत् । नापि वा समुदाचरिष्यत् । नापि क्रोधकाले नास्ति ॥

किं च—त्रयाणां लक्षणानां युगपदेकस्यां लक्षणस्य वृत्तौ विरोधात् नास्ति सम्भवः । क्रमेण लक्षणानां क्रमेण स्वव्यञ्जकाञ्जनस्य घटादिस्वव्यञ्जकाञ्जनस्य अन्यतमस्य लक्षणस्य भवेत् सम्भवः ॥

उक्तं च—रूपातिशयाः वृत्त्यतिशयाश्च विरुध्यन्ते । वर्तमानरूप-वृत्त्यतिशयैर्युक्त घटे च पिण्डादिव्यक्तिरूपातिशया विरोधात् न संभवन्ति । अत एव अतीतानागतरूपा धर्मिसामान्यानुगतत्वेनाविरोधात् अतिशयैः सह वर्तन्ते ॥

तस्मात् अध्वनाम् असंकरः । यथा रागस्यैव क्वचित् समुदाचार इति न तदानीमन्यत्र स्त्रीषु अभावो रागस्य । किन्तु केवलं सामान्येन चित्तरूपेण समन्वागतः अतीतोऽनागतोऽपि सन् इत्यस्ति तदा तस्य रागस्य भावः । तथा लक्षणस्येति ॥

ननु च पिण्डकपालयोरतीतानागतत्वात् घटावस्थायामभावाच्च ताभ्यां मृदाख्यस्य धर्मिणोऽपि अतीतानागतत्वमिति धर्मिणि पिण्डकपालयोरभाव इति कृत्वा धर्माणां पिण्डकपालादीनामध्वत्रयानुपपत्तिरिति परिशङ्कमानः

1. स्यां व्यक्तौ
2. पञ्चशिखाचार्येण-
3. -दा तत्र तस्य-

[ भाष्यम् ]

न धर्मी त्र्यध्वा धर्मास्तु त्र्यध्वानः । ते लक्षिताः[1] तां तां अवस्थां प्राप्नुवन्तः अन्यत्वेन प्रतिनिर्दिश्यन्ते अवस्थान्तरतः, न द्रव्यान्तरतः । यथा एका रेखा शतस्थाने शतं, दशस्थाने दश, एका च एकस्थाने । यथा [2]वा एकत्वेऽपि स्त्री, माता चोच्यते दुहिता च स्वसा च इति ।

अवस्थापरिणामे कौटस्थ्यप्रसङ्गदोषः कैश्चित् उक्तः । कथम्? [3]अध्वानः स्वव्यापारेण व्यवहिताः । यदा धर्मः स्वव्यापारं न करोति तदा अनागतः, यदा करोति तदा वर्तमानः, यदा कृत्वा निवृत्तः

[ विवरणम् ]

कथयति—न धर्मी त्र्यध्वा । मृदादयो हि धर्मी पिण्डकपालातीतानागतत्वेन नातीतोऽनागतो वा । सर्वधर्मेषु मृदभिज्ञानानु(प्र)वृत्तेः । किं तर्हि? धर्माः पिण्डादयः त्र्यध्वानः घटकाले पिण्डकपालयोरदर्शनात् । तस्मादध्वत्रयायोगो न धर्मिणां परिशङ्कनीयः ॥

ते धर्मा लक्षिताः पिण्डादयः त्र्यध्वत्वेनाभिलक्षिताः तां तामवस्थां दृढदुर्बलत्वादिकां प्राप्नुवन्तोऽन्यत्वेन नवो घटः पुराणश्चेत्यनेन प्रतिनिर्दिश्यन्तेऽवस्थान्तरतः । न द्रव्यान्तरतः मृदतिरिक्तात् ॥

यथा एका रेखा शतस्थाने शून्यद्वयेन तृतीयस्थाने शतं भवति । सैव च दशस्थाने एकेन शून्येन द्वितीयस्थाने दश । सैव प्रथमस्थाने एका ॥

यथा वा एकत्वेऽपि स्त्री माता चोच्यते दुहिता च, सैव अन्यापेक्षया स्वसा च । तदेवम् अवस्थान्तरादेव शब्दप्रत्ययादिभेदाः । न धर्मधर्मिभेदेन । तस्मात् यदुच्यते परैः शब्दप्रत्ययलक्षणधर्मकालादिभेदो हेतुः कार्यकारणभेदे इति, सोऽनेनानैकान्तिकीकृतः ॥

अवस्थापरिणामे तृतीयेऽस्मिन् कौटस्थ्यप्रसङ्गदोषः [कैश्चित्] उक्तः । कथं कौटस्थ्यप्रसङ्गः? अध्वानः वर्तमानादयः स्वव्यापारेण व्यवहि-(स्थि)ताः । कथम्? यदा धर्मो घटः पिण्डावस्थायां स्वव्यापारं न करोति तदा अनागतः । यदा करोति तदा वर्तमानः अयम् । यदा कृत्वा निवृत्तः

---

1. -ताः अलक्षिताः । तत्र लक्षिताः
2. -था च ए-
3. अध्वनः व्यापारेण व्यवहितत्वात्

[ भाष्यम् ]

तदा अतीतः, इत्येवं [1]धर्मिणां नित्यत्वात् धर्मलक्षणाऽवस्थानां कौटस्थ्यं प्राप्नोति इति परैः दोष उच्यते ॥

नासौ दोषः ? कस्मात् । गुणिनित्यत्वेऽपि गुणानां विमर्द-वैचित्र्यात् ॥

यथा संस्थानं आदिमत् धर्ममात्रं शब्दादीनां [2]विनाशि अविनाशिनाम्, एवं लिङ्गं आदिमत् धर्ममात्रं सत्त्वादीनां गुणानां विनाशि अविनाशिनाम्। तस्मिन् विकारसंज्ञा इति ॥

[3]तत्रोदाहरणम्। मृत् धर्मी पिण्डाकारात्[4] आकारान्तरं उपसम्पद्य-मानः धर्मतः परिणमते घटाकार इति । घटाकारोऽनागतं लक्षणं हित्वा

[ विवरणम् ]

तदा अतीतः । तत्र स एव धर्मः कृतः क्रियमाणः करिष्यमाणः निजव्यापारोपारूढः धर्मिस्वात्मभूत एवावस्थापितः । न व्यतिरिक्तरूपः । तेन धर्मिणां गुणानां नित्यत्वात् नित्यत्वाव्यतिरेकात् धर्मलक्षणावस्थनां कौटस्थ्यं प्राप्नोतीति दोष उच्यते ॥

नासौ दोषः । कस्मात् ? गुणिनित्यत्वेऽपि गुणानां विमर्द-वैचित्र्यात् उद्भवाभिभवत्वविचित्रतया पुरुषवदेकान्तकूटस्थता नेष्यते गुणानाम् । परिणामाभ्युपगमात् । न चानवरतपरिणतीनामपि परस्परविमर्दातिरेकेण द्रव्यान्तर-भावापत्तिरिति न कौटस्थ्यम् ॥

कथं विमर्दवैचित्र्यमित्याह–यथा संस्थानं शरीरादिकं [आदि]मत् कारणवत् धर्ममात्रं कारणस्यात्मभूतमव्यतिरिक्तं विनाशि तिरोभावधर्मकं धर्मान्तरसमुदये । केषां संस्थानमित्या(मा)ह—शब्दादीनामविनाशिनाम्। एवं लिङ्गं महदाख्यं आदिमत् कारणवत् धर्ममात्रं विनाशि गुणानामविनाशिनाम् आत्मभूतम् । तस्मिन् महदादिधर्ममात्रे विकारसंज्ञा न गुणानां विमर्द-विचित्रतया विनाशित्वं गुणस्वरूपेण नित्यत्वं इति ॥

तत्रोदाहरणम्—मृत् धर्मी पिण्डाकाा पिण्डाकारात् आकारान्तरं घटं उपसम्पद्यमानो धर्मतः परिणमते ॥

---

1. धर्मधर्मिणोः लक्षणानामवस्थानां च कौ-
2. -नां गुणानां वि-
3. तत्रेदमुदाहरणम्
4. -त् धर्मात् धर्मान्तरं

[ भाष्यम् ]

वर्तमानं लक्षणं प्रतिपद्यत इति लक्षणतः परिणमते । घटो नवपुराणतां प्रतिक्षणमनुभवन् अवस्थापरिणामं प्रतिपद्यत इति । धर्मिणोऽपि धर्मान्तरं अवस्था, धर्मस्यापि लक्षणान्तरं अवस्था, इत्येक एव द्रव्यपरिणामो भेदेनोपदर्शित इति । एवं पदार्थान्तरेष्वपि योज्यमिति । त एते धर्मलक्षणावस्थापरिणामाः धर्मिस्वरूपमनतिक्रान्ताः इत्येक एव परिणामः सर्वानमून् विशेषान् अभिप्लवते । [1]अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणाम इति ॥ १३ ॥

तत्र—

[ सूत्रम् ]

## शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी ॥ १४ ॥

[ विवरणम् ]

[घटाकारोऽनागतं लक्षणं हित्वा वर्तमानलक्षणं प्रतिपद्यत इति लक्षणतः परिणमते ॥]

तथा घटो नवपुराणतां प्रतिक्षणमनुभवन् अवस्थापरिणामं प्रतिपद्यत इति । धर्मिणोऽपि मृदादेः धर्मान्तरं पिण्डादिकं अवस्था । धर्मी पिण्डकपालादिरूपावस्थामासीदिति ॥

धर्मस्यापि घटादेः लक्षणान्तरं अतीतादिकं अवस्था । स एव हि घटो धर्मोऽतीतानागतवर्तमानावस्थामुपारोहति ॥

तत एक एव परिणामो भेदेनोपदर्शित इति । एवं पदार्थान्तरेष्वपि मृदः अन्येष्वपि शरीरेन्द्रियादिषु योज्यम् । त एते धर्मलक्षणावस्थापरिणामा धर्मिस्वरूपमनतिक्रान्ता इत्येक एव धर्मिणः परिणामः सर्वान् धर्मलक्षणावस्थापरिणामान् विशेषानभिप्लवते । कुतः? येन अवस्थितस्य द्रव्यस्य पूर्वधर्मनिवृत्तौ धर्मान्तरोत्पत्तिः परिणाम इति धर्मी परिणाम एवेति शक्यं प्रतिपत्तुम् ॥ १३ ॥

कः पुनरसौ धर्मी? यस्मिन् अवस्थिते धर्मान्तरविरामे धर्मान्तरोदयः परिणाम इति । तत्र शान्तोदिताव्यपदेश्यधर्मानुपाती धर्मी । शान्तोदितान् अव्यपदेश्यांश्च धर्माननुपतितुं शीलं यस्य सोऽन्वयी भिन्नेष्वभिन्नात्मा धर्मीति व्यपदिश्यते । धर्मः नाम योग्यतावच्छिन्ना शक्नोति रशनाकुण्डलादिभावमापत्तुमिति या सुवर्णस्य धर्मिणः कुण्डलत्वादिका शक्तिः स एव धर्मः ॥

---

1. अथ कोऽयं परिणामः? अवस्थितस्य

[ भाष्यम् ]

योग्यतावच्छिन्ना धर्मिणः शक्तिरेव धर्मः । स च [1]फलप्रसव-भेदानुमितसद्भावः एकस्य [2]अन्यश्चान्यश्च । दृष्टः तत्र वर्तमानः स्वं व्यापारं अनुभवन् धर्मी धर्मान्तरेभ्यः शान्तेभ्यश्च अव्यपदेश्येभ्यश्च भिद्यते । यदा तु सामान्येन समन्वागतो भवति, तदा धर्मिस्वरूपमात्रत्वात् कोऽसौ केन भिद्येत ॥

[3]ते खलु धर्मिणो धर्माः शान्ताः ये कृत्वा व्यापारम्[4] उपरताः । सव्यापाराः उदिताः । ते च [5]अनागतलक्षणस्य समनन्तराः । वर्तमानस्य अनन्तरा अतीताः । किमर्थं अतीतस्य अनन्तरा न भवन्ति वर्तमानाः? [6]पूर्वपश्चिमाभावात् ।

[ विवरणम् ]

स च अव्यक्तोऽपि सन् धर्मिणि फलप्रसवभेदानुमितसद्भावः । यथा देशान्तरे कालान्तरे च ताटङ्कादिकं फलं कनकपिण्डः प्रसूयते । तत्फलप्रसवभेद-दर्शनेनान्यानन्यानपि प्रकारानयं प्रसवितुं विभवतीति तस्मिन् धर्मिणि फलप्रसव-भेदानुमितसद्भावः । एकस्य धर्मिणः अन्यश्चान्यश्च धर्म इत्यनेनैकस्य धर्मिणो धर्मासंख्यत्वमाह ॥

तत्र यो दृष्टः स वर्तमानः स्वं व्यापारमुदकाहरणादिकं अनुभवन् धर्मान्तरेभ्यः शान्तेभ्यश्चाव्यपदेश्येभ्यश्च भिद्यते ॥

यदा तु सामान्येन धर्मिरूपेण समन्वागतो भवति, अथ तदा धर्मिस्वरू-पमात्रत्वात् धर्मिस्वरूपात्मभूतत्वात् कोऽसौ विशेषतः केन वा भिद्येत । व्यापाराधिरूढरूपाणामेव भेदो, न कारणसमनुगमनिरीक्षितात्मनामित्यर्थः ॥

के पुनः शान्ता उदिता अव्यपदेश्या वा ? ते खलु धर्मिणो धर्माः शान्ताः ये कृत्वा व्यापारमुपरताः । सव्यापारा उदिताः । ते चानागतलक्षणस्य समनन्तराः । तथा वर्तमानस्यानन्तरा अतीताः । किमर्थमतीतस्यानन्तरा न भवन्ति । न सन्तीत्यर्थः । पूर्वपश्चिमाभावात् । यो यस्य पश्चाद्भवति स तस्य

---

1. फलप्रसवभेदानुमितः ए-
2. अन्योऽन्यश्च परिदृष्टः । तत्र
3. तत्र ये खलु धर्मिणो धर्माः शान्ताः उदिताः अव्यपदेश्याश्चेति, तत्र शान्ताः
4. -रान् उ-
5. अनागतस्य ल-
6. पूर्वपश्चिमताया अभावात्

[ भाष्यम् ]

यथा अनागतवर्तमानयोः पूर्वपश्चिमता, नैवं अतीतस्य । तस्मात् नातीतस्यास्ति समनन्तरः । तदनागत एव समनन्तरो भवति वर्तमानस्य इति ॥

अथ अव्यपदेश्याः के ?

सर्वं सर्वात्मकम् इति । [1]तत्रोक्तम्—जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टम् । तथा स्थावराणां जङ्गमेषु, जङ्गमानां स्थावरेषु इत्येवं जात्यनुच्छेदेन सर्वं सर्वात्मकम् इति ॥

[ विवरणम् ]

पश्चिमोऽनन्तरः । इतरश्च तदपेक्षया पूर्वः । तदिह पश्चिमाभावात् एव स्वयमपि पूर्वो न भवतीति पूर्वपश्चिमाभावादतीतस्यानन्तरा न सन्ति । यथा अनागतवर्तमानयोः पूर्वपश्चिमता नैवमतीतस्य । तस्मात् न[नाती]तस्यास्ति समनन्तरः ॥

यस्त्वयं पाठः तदनागत एव समनन्तरीभवति वर्तमानस्य इति, न तस्य प्रकृतेन सम्बन्धः । तस्मात् तदनागत एव समनन्तरो भवत्यतीतस्य इत्ययमेव पाठः । अर्थोपपत्तेः । कथम् ? यदा व्युत्थानसंस्कारो निरोधसंस्कारेण आद्योऽभिभूयते, तदा वर्तमानमध्वानं हित्वा व्युत्थानसंस्कारोऽतीतमध्वानमुपसम्पद्य पुनरनागतः सन् वर्तमानीभवतीत्यसमनन्तरोऽप्यनागत एव समनन्तरीभवत्यतीतस्येत्युच्यते । अतीतानागतयोर्लक्षणयोर्धर्माणां धर्मिस्वरूपमात्राविशेषात् ॥

अथ अव्यपदेश्याः के ? तदव्यपदेश्याभिप्रदर्शनार्थमाह—सर्वं सर्वात्मकं इति । कथम् ? तत्रोक्तम्—जलभूम्योः पारिणामिकं रसादिवैश्वरूप्यं स्थावरेषु दृष्टम् । यथा रस एक एव इक्षुशृङ्गिबेरकादिषु मधुरकटुकत्वादि वैश्वरूप्यं प्रतिपद्यते । तथा, रूपस्य शुक्लकृष्णत्वादिविचित्ररूपत्वम् । एवं गन्धादिष्वपि । तथा स्थावराणां जङ्गमेषु रसादिवैश्वरूप्यम् । स्थावराणामुपयुक्तानां जङ्गमेषु रसलोहितादिविश्वभेदः । तथा जङ्गमानां स्थावरेषु उपयुक्तानाम् वृक्षायुर्वेदप्रसिद्धं रसादिवैश्वरूप्यम् ॥

एवं स्थावराणां स्थावरेषु, जङ्गमानां च जङ्गमेषु, इत्येवं जात्यनुच्छेदेन सत्त्वाद्यविनाशेन सर्वं सर्वात्मकम् । अङ्गुलिशिखरे लोकत्रयमप्यस्ति । तथा च 'अङ्गुष्ठादसृजत् ब्रह्मा रोमकूपेभ्यः' इत्यादिश्रुतिस्मृतिशतप्रस्थानम् ॥

---

1. यत्रोक्तम्.

[ भाष्यम् ]

देशकालाकारनिमित्तापबन्धात् न खलु समानकालम् आत्मनाम् अभिव्यक्तिः इति। य एतेषु अभिव्यक्तानभिव्यक्तेषु धर्मेषु अनुपाती सामान्यविशेषात्मा सोऽन्वयी धर्मी। यस्य तु धर्ममात्रमेवेदं निरन्वयं तस्य भोगाभावः। कस्मात्? अन्येन विज्ञानेन कृतस्य कर्मणः अन्यत् कथं भोक्तृत्वेन अधिक्रियेत?। [1]स्मृत्यभावश्च, नान्यदृष्टस्य स्मरणम् अन्यस्यास्ति इति। वस्तुप्रत्यभिज्ञानाच्च स्थितोऽन्वयी धर्मी, यो धर्मान्यथात्वमभ्युपगतः प्रत्यभिज्ञायते। तस्मात् नेदं धर्ममात्रं निरन्वयम् इति॥ १४॥

[ विवरणम् ]

यदि सर्वं सर्वात्मकं, तदा सर्वं सर्वत्रोपलभ्येत, सम्मतविप्रयोगजन्मा च शोको मा प्र(ति)वर्तिष्टेत्यादेरुत्तरं पठति--देशकालाकारनिमित्तापबन्धात् देशादीनामपबन्धः अवबन्धः तस्मात्, न समानकालं आत्मनां सर्ववस्तूनां अभिव्यक्तिः। कस्य चित् क्वचिदेव देशे काले च केन चिदेवाकारेण तनुभृतां च धर्मादिनिमित्ताभिसमीक्षया क्वचिदेवाभिव्यक्तिः, यथा राहुप्रभृतीनाम्। एतेनैव सम्मतविप्रयोगनिमित्तशोकाद्युपपत्तिः। अत एकैकस्मिन् अतिलङ्घितसंख्यागोचरत्वात् धर्मा न शक्या व्यपदेष्टुम्॥

य एतेषु शान्तोदिताव्यपदेश्येषु अभिव्यक्तानभिव्यक्तेषु धर्मेषु अनुपाती सामान्यविशेषात्मा सत्त्वादिशब्दादिरूपेण सोऽन्वयी धर्मी। यस्य तु वादिनः धर्ममात्रमेवेदं निरन्वयं बाह्यमाध्यात्मिकं च, यस्य च ज्ञानमात्रमेव, तस्य धर्माणां क्षणप्रणाशित्वादतीतानागतवर्तमानपथारोहिणां समानकालानां च भोक्तृभोग्यत्वादिसंबन्धानुपपत्तेः भोगाभावः॥

सम्बन्धाभावं दर्शयति--कस्मात्? अन्येन विज्ञानेन कृतस्य कर्मणोऽन्यत् विज्ञानमकर्तृ भविष्यत् कथं भोक्तृत्वेनाधिक्रियेत। कर्तुश्च फलाभिप्रवृत्तेः फलेन संबन्धो युज्यते। अन्यः कर्ता फलेन चान्यः सम्बध्यत इति विरुध्यते॥

स्मृत्यभावश्च। कृतकरणीयादिविषयस्मृत्यभावश्च। अन्यदृष्टस्य स्मरणमन्यस्य नास्तीति। न हि चैत्रदृष्टस्य वसुमित्रः स्मरति। [वस्तु]प्रत्यभिज्ञानाच्च, यस्मात् तदेवेदमिति वस्तु प्रत्यभिजानीमः, तस्मात् स्थितोऽन्वयी धर्मी धर्मान्यथात्वं धर्मैरन्यथात्वं अभ्युपगतः प्रतिपन्नः। न तु स्वरूपेणान्यथात्वम्। यथा रुचकादिभेदानुगतमपि कनकमेवेति प्रत्यभिजानीमः। तस्मात् नेदं धर्ममात्रं निरन्वयमिति॥ १४॥

---

1. तत्स्मृत्यभावश्च.

[ सूत्रम् ]

## क्रमान्यत्वं परिणामान्यत्वे हेतुः ॥ १५ ॥

[ भाष्यम् ]

एकस्य धर्मिणः एक एव परिणाम इति प्रसक्तेः,[1] क्रमान्यत्वं परिणामान्यत्वे हेतुः भवति इति ॥

तद्यथा—चूर्णमृत्, पिण्डमृत्, घटमृत्, कपालमृत्, कणमृत् इति[2] क्रमः। यो यस्य धर्मस्य समनन्तरो धर्मः, स तस्य क्रमः।

पिण्डो[3] घट उपजायत इति धर्मपरिणामक्रमः।

[ विवरणम् ]

इदानीं परिणामभेदे हेतुरुच्यते–सिद्धे हि भेदे परिणामत्रयसंयमः प्रयोक्तुरुपकल्पेत। यतः कयाचिल्लिङ्गद्वारा अतीतादिषु मतिरुपजनयितुं शक्यते, नान्यथा इति, क्रमान्यत्वं परिणामान्यत्वे हेतुः। एकस्य धर्मिणः चित्तादेः एक एव परिणाम इति प्रसक्तेः धर्मादीनां धर्म्यभेदादिति, परिणामभेदसिद्धये हेतुरेष उच्यते—क्रमान्यत्वम्। क्रमः अनन्तरभावः तस्यान्यत्वं भेदः ॥

त्रयो हि क्रमा अन्योन्यविधर्माण उपलक्ष्यन्ते। लक्षणावस्थाक्रमाभ्यामन्यो धर्मक्रमः। धर्मावस्थाक्रमाभ्यामन्यो लक्षणक्रमः। धर्मलक्षणक्रमाभ्यामन्योऽवस्थाक्रमः। यच्च तेषामन्यत्वं प्रसिद्धमार्गमविरूढं तत् क्रमकार्याणां परिणामानामनुमापकं अन्यत्वे हेतुः ॥

तद्यथा मृत् धर्मी चूर्णमृत् इति चूर्णादिभिर्धर्मैरयुगपत्कालजन्मभिः क्रमवर्तिभिः परिणमते। सर्वत्र मृद्ग्रहणेन धर्मिणो मृदाख्यस्य परस्परलक्ष्यमाणभेदचूर्णपिण्डघटकपालकणादिधर्मानुगमं प्रतिपादयति ॥

चूर्णस्यानन्तरः पिण्डः, पिण्डस्यानन्तरो घटः, घटस्यानन्तराणि कपालानि, कपालानां कणा अनन्तरा इति धर्म एव चूर्णमृत्, पिण्डमृत्, घटमृत्, कपालमृत्, कणमृत्, इति क्रमः, धर्मान्तरस्य क्रमः। न लक्षणं, नाप्यवस्था। यथा–यो यस्य धर्मस्य समनन्तरो धर्मः स तस्य क्रमः। कथम्? पिण्डो घट उपजायत इति पिण्डरूपा मृत् घटीभवतीत्यर्थः। अभेदोपचारेण पिण्डो घट उपजायत इत्युच्यते। न पुनः पिण्डो धर्मो धर्मान्तरात्मतां

---

1. -क्ते क्र.
2. -ति च
3. - ण्डः प्रच्यवते घट-

[ भाष्यम् ]

लक्षणपरिणामक्रमः, घटस्य [1]अनागतात् वर्तमानभावः क्रमः। तथा पिण्डस्य [2]वर्तमानादतीतभावः क्रमः। नातीतस्यास्ति क्रमः। कस्मात्? [3]पूर्वापरतायां हि सत्यां समनन्तरत्वम्। सा तु नास्ति अतीतस्य। तस्मात् द्वयोरेव लक्षणयोः क्रमः॥

तथा अवस्थापरिणामक्रमोऽपि घटस्य अभिनवस्य प्रान्ते पुराणता दृश्यते। सा च क्षणपरम्पराऽनुपातिना क्रमेण [4]अभ्यूह्यमाना

[ विवरणम् ]

प्रतिपद्यते। पिण्डधर्मविमर्दनेन तद्विरोधी तदनन्तरं घटाख्यो धर्म उपजायते॥

धर्मपरिणामश्च द्विविधः, तुल्यपरिणामश्चातुल्यपरिणामश्च। यथा पिण्डो घट उपजायत इत्यतुल्यपिण्डस्य, घटादिधर्मैर्मृदाख्यो धर्मी परिणमते, सः अतुल्यधर्मपरिणामः। यावच्च घटस्य जन्मनः प्रभृति आ कपालापत्तेः तावत् घटरूपेणैव परिणमते मृदिति स तुल्यधर्मपरिणामः।

तथा चित्तमपि निरुद्धवृत्तिकमेकाग्रतावस्थायां तुल्याभ्यां धर्माभ्यां शान्तोदितप्रत्ययाभ्यां परिणमते, व्युत्थाननिरोधाभ्यां धर्माभ्याम् अतुल्याभ्यां परिणमते, तथा व्युत्थानवेलायां शान्तघोरमूढैः प्रत्ययैर्धर्मैरतुल्यैः परिणामं प्रतिपद्यते। सोऽयं धर्मपरिणाक्रम उक्तः॥

इदानीं लक्षणपरिणामक्रम उच्यते—लक्षणपरिणामक्रमः घटस्यानागतात् लक्षणात् वर्तमानभावः। तथा पिण्डस्य विरोधिधर्मोदये वर्तमानादतीत[भाव]ः क्रमः। नातीतस्यास्ति क्रमः। धर्मे हि वर्तमानलक्षणस्य समनन्तरं यल्लक्षणं स लक्षणक्रमः। न चातीतलक्षणस्य समनन्तरं लक्षणमस्ति॥

कस्मात्? पूर्वापरतायां हि सत्यां समनन्तरत्वम्। सा चातीतस्य नास्ति। तस्मात् द्वयोरेव अनागतवर्तमानयोः लक्षणयोः क्रमः। अतीतस्य क्रमाभावप्रतिपादने प्रयोजनम् [5]'क्षणतत्क्रमयोः संयमात्' इत्यत्र भविष्यति॥

तथा अवस्थापरिणामक्रमः घटस्याभिनवस्य प्रान्ते अवसानावस्थायां पुराणता दृश्यते। सा च क्षणपरम्पराऽनुपातिना क्रमेणाभ्यूह्यमाना प्रति-

---

1. अनागतभावात्
2. वर्तमानभावात्
3. पूर्वपरतायां सत्यां
4. अभिव्यज्यमाना
5. यो. सू. पा. 3. सू. 52.

[ भाष्यम् ]

परां व्यक्तिम् [1]आपादिता इति। धर्मलक्षणाभ्यां च विशिष्टोऽयं तृतीयः परिणाम इति ॥

त एते क्रमाः धर्मधर्मिभेदे सति प्रतिलब्धस्वरूपाः। धर्मोऽपि धर्मी भवति [2]अन्यधर्मापेक्षया इति। यदा तु परमार्थतो धर्मिणि[3] अभेदोपचारद्वारेणाभिधीयते धर्मः, तदा अयम् एकत्वेनैव क्रमः प्रत्यवभासते ॥

चित्तस्य द्वये धर्माः परिदृष्टाश्च अपरिदृष्टाश्च। तत्र प्रत्ययात्मकाः परिदृष्टाः, वस्तुमात्राः[4] अपरिदृष्टाः।

[ विवरणम् ]

क्षणमभिनवभावपरिमर्दनेन पुराणता सञ्जनिष्यते। सा च प्रान्तेषु परां व्यक्तिमापादिता। मध्ये तु सूक्ष्मतया न विभाव्यते। तेन मध्यावस्थायां सन्नपि क्रमो न लक्ष्यते। प्रान्तकालाभिव्यक्तिलिङ्गेनानुमायिष्यते–येन इयं पुराणता परां व्यक्तिमुपप्रापिता सोऽयं क्रम इति। न हि घटे परिनिष्पन्नमात्रे प्रतिक्षणजन्माऽपि पुराणता गृह्यते ॥

तथा च वदिष्यति–[5]"क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः" इति। तस्मात् धर्मलक्षणक्रमाभ्यामवस्थाक्रमस्यान्यत्वात् धर्मलक्षणपरिणामाभ्यां विशिष्टोऽयं तृतीयः परिणामः ॥

त एते क्रमा धर्मधर्मिभेदे सति प्रतिलब्धस्वरूपाः। विवक्षिते तु धर्मधर्मिणोरभेदे तत्र क्रमभेदो न लभ्यते। धर्मोऽपि धर्मी भवत्यन्यधर्मापेक्षया। गुणेभ्योऽन्यत्र धर्मधर्मित्वं नाम न व्यवस्थितम्। महदादीनामप्यविशेषापेक्षया धर्मित्वम्। अविशेषाणां च विशेषापेक्षया, विशेषाणां च शान्तोदितापेक्षयेति। यदा तु परमार्थतो धर्मिण्यभेदोपचारद्वारेणाभिधीयते धर्मः, तदाऽयमेकत्वेनैव क्रमः प्रत्यवभासते ॥

तत्र चित्तस्य द्वये द्विविधाः धर्माः परिदृष्टाश्चापरिदृष्टाश्च उपलब्धाश्चानुपलब्धाश्च। के ते इत्याह—तत्र प्रत्ययात्मकाः रागद्वेषमोहादयः परिदृष्टाः। वस्तुमात्राः स्वरूपेण विद्यमानाः कार्ययोगिनः अपरिदृष्टाः।

1. आपद्यते.
2. अन्यधर्मस्वरूपापेक्षया.
3. अभेदोपचारः, तद्द्वारेण स एवाभिधीयते
4. -त्रात्मकाः अ-
5. यो. सू. पा. 4. सू. 33.

[ भाष्यम् ]

ते च सत्त्वेव भवन्ति अनुमानेन प्रापितवस्तुमात्रसद्भावाः ।
निरोधधर्मसंस्काराः परिणामोऽथ जीवनम् ।
चेष्टा शक्तिश्च चित्तस्य धर्मा दर्शनवर्जिताः ॥ इति ॥ १५ ॥

[1]एते योगिन उपात्तसर्वसाधनस्य बुभुत्सितार्थप्रतिपत्तये संयमस्य विषय उपक्षिप्यते—

[ सूत्रम् ]

**परिणामत्रयसंयमात् अतीतानागतज्ञानम् ॥ १६ ॥**

[ विवरणम् ]

[ते च][2] स्वविषयवृत्तिसद्भावैः सत्त्वेव भवन्ति । ते कथमवगम्यन्त इति? अनुमानेन प्रापितवस्तुमात्रसद्भावाः कार्यलिङ्गेनावगतसद्भावाः । स्वरूपेण तु नानीश्वरैरुपलभ्यन्ते । ततश्चैकैकत्वेनोच्यन्ते ॥

निरोधधर्मसंस्काराः । निरोधः उक्तः । धर्मः इति, धर्माधर्मौ । संस्काराः वासनारूपाः । परिणामः उक्तलक्षणः । अथ जीवनम् इति, धर्माद्यपेक्षया सकलकरणवृत्तिः प्राणलक्षणा येन चित्तधर्मेण भवति, स जीवनम् इत्युच्यते । चेष्टा व्यापारः । शक्तिः सामर्थ्यं, चित्तस्य धर्माः । दर्शनवर्जिताः अप्रत्यक्षाः । इति एते सप्त निरोधादयश्चित्तधर्मा अपरिदृष्टा उच्यन्ते ॥ १५ ॥

एते त्रयः परिणामा धर्मलक्षणावस्थारूपाः योगिनः उपात्तसर्वसाधनस्य समासादितयमादिसकलसाधनस्य स्थिरतरसंयमस्य, अतीतानागतप्रत्युपस्थित-बुभुत्सितार्थप्रतिपत्तये संयमस्य विषयः उपक्षिप्यते । त्रयोऽप्येको विषयः संयमस्य ॥

परिणामत्रयसंयमादतीतानागतज्ञानम् । परिणामत्रये तावत् संयमः करणीयः, यावत् समाधिप्रज्ञाऽऽलोकः । स च यद्विषय उपस्थितः, तं विषयं यथाभूतं प्रत्यक्षतामापादयति । सूक्ष्मं व्यवहितमतीतमनागतं विप्रकृष्टं वा यमुद्दिश्य प्रापणाभिप्रायेण सूक्ष्मादिषु संयमः क्रियते, तदा सोऽर्थो

---

1. अतो यो.

2. अत्र आदर्शकोशे इत उपरि 'लक्ष्यमाण' इत्यादिः, अत्र (178) पुटे प्राक् मुद्रितः ग्रन्थः दृश्यते । तस्यानन्वयात् आदर्शकोशे (14) पुटेभ्यः उपरि लिखितः 'स्वाविषयवृत्ति' इत्यादिः ग्रन्थः योजितः ॥

[ भाष्यम् ]

धर्मलक्षणावस्थापरिणामेषु संयमात् योगिनो भवत्यतीतानागत-ज्ञानम्। धारणाध्यानसमाधित्रयं एकत्र संयम उक्तः। तेन परिणामत्रयं साक्षात्क्रियमाणम् अतीतानागतज्ञानं तेषु सम्पादयति ॥ १६ ॥

[ सूत्रम् ]

**शब्दार्थप्रत्ययानाम् इतरेतराध्यासात् सङ्करः, तत्प्रवि-भागसंयमात् सर्वभूतरुतज्ञानम् ॥ १७ ॥**

[ भाष्यम् ]

तत्र वाक् वर्णेष्वेव अर्थवती। श्रोत्रं च ध्वनिपरिणाममात्रविषयम्।

[ विवरणम् ]

वश्यतां योगिन उपयाति। धर्मलक्षणावस्थापरिणामेषु संयमात् योगिनो भवत्यतीतानागतज्ञानम्। धारणाध्यानसमाधित्रयमेकत्र संयम उक्तः। तेन संयमेन परिणामत्रयं साक्षात्क्रियमाणमतीतानागतज्ञानं तेषु परिणामेषु सम्पादयति। सकलपदार्थानां परिणामित्वात् तेषां चातीतादियोगात् कालत्रययुक्तसमस्तपदार्थविषयपरिणामत्रयसंयमेन सर्वं प्रत्यक्षीभवति। तथा प्रतिक्षणपरिणामधर्मकमनवस्थितं विश्वमीक्षमाणस्य वैराग्यं जायते ॥ १६ ॥

अयमन्यः संयमविषयः उपक्षिप्यते सर्वशब्दार्थप्रतिपत्त्यर्थः शब्दार्थ-प्रत्ययानामितरेतराध्यासात् संकरः तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानं सम्पद्यते। तत्र कः शब्दः, कोवा अर्थः, प्रत्ययो वा, संकरश्च किन्निमित्तः, कथं च तेषां प्रविभागः? इति ॥

तत्र किं वागुच्चार्यः श्रोत्रग्राह्यः (स) शब्दः, उतार्थान्तरं, किं वागेव, तद्व्यतिरिक्तो वा, इति तावद्विचार्यते—वाक् तावन्न शब्दः। कस्मात्? वाक् वर्णेष्वेवार्थवती। वागिति वर्णाभिव्यञ्जकमष्टसु स्थानेषु विषक्तमिन्द्रियं वर्णाभिव्यक्तिमात्रप्रयोजनापेक्षयं, न तावदर्थाभिव्यक्तौ शब्दाभिव्यक्तौ वा व्यापारं करोति ॥

तथा श्रोत्रं च न स्वयं शब्दः, नापि शब्दविषयम्। कस्मात्? ध्वनिपरि-णाममात्रविषयं हि तत्। ध्वनिरिति सामान्यं वर्णावर्णरूपम्। तस्य विशेषः परिणामः अकारादिवर्णात्मकः, काकादिवाशितात्मकश्च मूढकरणव्यङ्ग्यः। तत् ध्वनिपरिणाममात्रप्रकाशावसानं श्रोत्रं नार्थशब्दयोर्व्याप्रियते ॥

[ भाष्यम् ]

पदं पुनः नादानुसंहारबुद्धिनिर्ग्राह्यम् इति। वर्णाः एकसमयासम्भवित्वात् परस्परनिरनुग्रहात्मानः। ते पदम् [1]अनुपसंस्पृश्य अनुपस्थाप्य आविर्भूताः तिरोभूताश्च इति प्रत्येकम् अपदस्वरूपा उच्यन्ते ॥

[ विवरणम् ]

ननु च श्रोत्रग्राह्य एव शब्दः। न—अर्थप्रत्यायकत्वात्। अर्थं यः सम्प्रत्याययति स शब्दः। कः पुनरसौ? पदम्। तत् पुनर्नादानुसंहारबुद्धिनिर्ग्राह्यं नादानां ध्वनीनां श्रोत्रविषयभूतानां प्रत्येकं प्रत्ययिनि संस्कारमाधाय निवर्तमानानाम् अन्त्येन ध्वनिना या समुपस्थापिता बुद्धिः सा नादानुसंहारबुद्धिः प्रथमध्वनिक्रमानुसंहारासादितसंस्कारस्य प्रत्ययिनश्चित्तस्य जायते, तयैकया बुद्ध्या अयं निगृह्यते। तत् पदम्। तच्च प्रत्यक्षत्वात् रूपादिवन्नान्यप्रमाणापेक्षम् ॥

ननु च "गकारौकारविसर्जनीयाः" इति भगवानुपवर्षः। तन्न—अवाचकत्वात्। कथम्? समुदायासम्भवात्। समुदायासम्भवश्च एकसमयासम्भवित्वात्। न हि गकारोच्चारणकाले औकारविसर्जनीयौ। नाप्यौकारोच्चारणकाले गकारविसर्जनीयौ। नापि विसर्जनीयप्रवृत्तिवेलायामितरयोः समवस्थानमिति वर्णसमुदायासम्भवादवाचकत्वम् ॥

यथैव वर्णानां युगपत्समयानवस्थानम्, एवं संस्काराणाम् स्मृतीनां च तज्जनितानामयुगपत्कालत्वादवाचकत्वम्। स्मृत्युपयोगार्थत्वाच्च संस्कारस्यानुभूतविषय एवोपयोगात्, प्रत्याय्यस्य चापूर्वत्वात् ॥

अपि च संस्काराणां वाचकत्वाभ्युपगमे, 'शब्दादर्थप्रतिपत्तिः' 'पूर्वापरीभूतं भावमाख्यातेनाचष्टे' 'धर्मस्य शब्दमूलत्वादशब्दमनपेक्ष्यं स्यात्' इति प्रसिद्धिरपह्नूयेत ॥

अथापि वर्णभावभावित्वेन स्मृतिसंस्कारयोरपि शब्दत्वमुपचर्येत। नैतदपि—तद्भावभावित्वं नाम तस्मिन्नेव सति भवत्यसत्यभाव एव यत्र, तत्र स्यात्। (न च) तच्च वर्णानां शब्दत्वे सिद्धे भवेत्। लोकस्तु शरीरादावात्माभिमानादविवेकादतस्मिन्नपि तद्बुद्धिं करोतीति न सर्वत्र वस्तुनिर्णये हेतुर्भवति ॥

---

1. असंस्पृश्य

अपि च, वाक्श्रोत्रव्यापार एव सत्यर्थप्रतिपत्तिरिति तस्याव्यभिचारात् तद्भावभावित्वे शब्दत्वं प्राप्नोति । तस्मादन्त्यो वर्णो न वाचकः, वर्णत्वात्, आद्यवर्णवत् । तथा, तत्स्मृतिसंस्कारा न वाचकाः, स्मृतिसंस्कारत्वात्, आद्यवर्णस्मृतिसंस्कारवत् ॥

यदि चान्त्यो वर्णः पूर्ववर्णजनितसंस्कारसहितः वाचक इत्युच्यते—नैतदेवम् । कस्मात्? अन्त्यवर्णोच्चारणमात्रादेवार्थप्रत्ययप्रसङ्गात् । कथम्? अतीतदिवसोच्चरितगकारादिवर्णाहितसंस्कारो हि समस्तः श्रोता । तत्रान्त्यवर्णोच्चारणमात्रादर्थः प्रतीयेत । अथापि नियमार्थमाद्यवर्णोच्चारणमिति चेत् न—पूर्ववर्णानां पश्चिमवर्णेनातुल्यकालत्वात् साहायकाभावे नियमानुपपत्तिः ॥

तवापि वर्णानां पदव्यञ्जकत्वे नियमार्थं पूर्ववर्णा उच्चारयितव्या इति दोष एवेति, पदव्यञ्जकत्वकल्पनातो वर्णानामेव वाचकत्वं युक्तमिति चेत्, न—वर्णानां बुद्धौ स्वकीयसंस्काराधानमात्राभ्युपगमात् । उच्चरितप्रध्वंसमानवर्णसंस्कारपरंपरोपचितायां हि बुद्धौ पदं निर्भासते । एतदेव हि वर्णानां पदव्यञ्जकत्वम् । न पदं प्रति दीपवत् साक्षात् प्रवर्तते ॥

न बुद्धौ धर्मिद्वारेण संस्काराणामेकाश्रयावस्थानादन्योन्योपकार्योपकारकभावः समीचीनतरः । इष्टानिष्टविषयोपलब्धिस्मृतीच्छाद्वेषादिवत् । न कदाचिदन्त्येन वर्णेन पूर्ववर्णानां तदीयस्मृतिसंस्काराणां वा सम्बन्ध उपकल्पते ॥

अथ ममापि नियतक्रमवर्णसम्पादितसंस्कारपरम्परोपचितबुद्ध्युत्पादकत्वेनैव वर्णानां वाचकत्वमिति चेत्—न—अभ्युपेतपरित्यजनात् । यदि तावद्वर्णानेकसंस्कारविशिष्टा बुद्धिः अर्थविषया वा पदविषया वा? यद्यर्थविषया, सैव शब्दः प्राप्नोति । अर्थप्रत्यायकत्वात् । अथ पदविषया, तथाऽपि पदादर्थप्रतिपत्तिरिति बाध्येत ॥

तस्मादेकबुद्धिविषयो वर्णव्यतिरिक्तः शब्दोऽभ्युपगन्तव्यः । तेन पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः, तत्स्मृतिः, संस्कारो वा, न वाचकः । संस्कारसाहायकापेक्षत्वात्, बुद्धिवत् ॥

एवं गते कथं वर्णानामर्थविषयः पदविषयो वा व्यापारो नास्तीत्याह—**वर्णाः एकसमयासम्भवित्वात्** । एककालासम्भवित्वं च वाचः क्रमवर्तित्वात् । अतः **परस्परनिरनुग्रहात्मानः** कस्यचिदभिसम्बन्धस्याभावादितेरतरनिरुपकाराः । **ते पदमनुपसंस्पृश्यानुपस्थाप्य** कञ्चन पदे व्यापारमविधाय **आविर्भूताश्च तिरोभूताश्च** व्यस्ता वा समस्ता वा न पदात्मानमपाङ्गविक्षेपेणापि परामृशन्ति । **प्रत्येकमपदस्वरूपाः** युगपदनवस्थानात् समुदायात्मनाऽप्यपदस्वरूपा एव । किमङ्ग पुनः प्रत्येकमनर्थकानामवस्थितानामिति ॥

[ भाष्यम् ]

वर्णः पुनः एकैकः[1] सर्वाभिधानशक्तिप्रचितः सहकारिवर्णान्तरप्रतियोगित्वात् वैश्वरूप्यमिवापन्नः उत्तरश्च पूर्वेण पूर्वश्चोत्तरेण विशेषेऽवस्थापितः, इत्येवं बहवो वर्णाः क्रमानुरोधिनोऽर्थसङ्केतेन अवच्छिन्नाः इयन्त एते [2]सर्वाभिधानशक्तिपरिच्युताः गकारौकारविसर्जनीयाः सास्नादिमन्तमर्थं द्योतयन्ति इति ॥

तदेषाम् अर्थसङ्केतेन अवच्छिन्नानाम् [3]अनुगृहीतध्वनिक्रमाणां य एको बुद्धिनिर्भासः तत् पदं वाचकं वाच्यस्य सङ्केत्यते । तदेकं पदम् एकबुद्धिविषयम् एकप्रयत्नाक्षिप्तं [4]अविभागम् अक्रमम् [5]अवर्णात्मकम् अन्त्यवर्णप्रत्ययव्यापारोपस्थापितं परत्र प्रतिपिपादयिषया वर्णैरेव अभिधीयमानैः श्रूयमाणैश्च श्रोतृभिः अनादिवाग्व्यवहारवासनाऽनुविद्धया लोकबुद्ध्या सिद्धवत् सम्प्रतिपत्त्या प्रतीयते ॥

[ विवरणम् ]

वर्णः पुनरेकैकः सर्वाभिधानशक्तिप्रचितः । अभिधीयते यैः तान्यभिधानानि पदानि, तेषां सर्वेषामभिधानानां पदानामभिव्यञ्जिकाभिः शक्तिभिः प्रचितः, अराणामेकैक इव नाभौ । तद्यथा—गकारः गोवर्गाग्निगगनादिसर्वपदाभिद्योतनसामर्थ्यप्रचितः ॥

सहकारिवर्णान्तरप्रतियोगित्वात् । यथा गौरिति गकारौकारविसर्जनीयसहकारिसव्यपेक्षः अग्निरितीकारप्रतियोगी ; तस्मादनेकवर्णान्तरोपाधिसम्बन्धात् प्रतिपदं वैश्वरूप्यमिवापन्नः । उत्तरश्च वर्णः पूर्वेण विशेषे पदविशेषप्रद्योतने अवस्थापितः । पूर्वश्चोत्तरेण, मध्यमोऽपि पूर्वोत्तराभ्याम् ॥

एवं बहवो वर्णाः क्रमानुरोधिनः विशिष्टक्रमं, आनुपूर्वीम् अनुरुध्यमानाः ॥

अर्थसङ्केतेन अमी अस्मिन्नर्थे एतत्क्रमावलम्बिनः इयन्त इति सङ्केतः समयः, तेन अर्थसङ्केतेन अवच्छिन्नाः ॥

वर्णसङ्केतद्वारेण पदं सङ्केत्यते । वर्णाव्यभिचरितचारित्रम् असाधारणवर्णक्रमापेक्षितसङ्केतसमयं हि पदम् । वर्णसङ्केत एव तस्य सङ्केतः । इयन्त एते वर्णाः सर्वाभिधानशक्तिपरिच्युताः विशिष्टसास्नादिमदर्थप्रतिपादकासाधारण-

---

1. कः पदात्मा स-
2. सर्वाभिधानशक्तिपरिवृताः
3. उपसंहृतध्वनि-
4. अभागं
5. अवर्णं बौद्धम् अन्त्य-

पदावभासनव्यापारपरत्वादेव अपरपदान्तरप्रतिपादकशक्त्यन्तरेभ्यः परिच्युताः निवृत्ताः इतरेतरविशेषविनियोगपरवशावेशादुदासीनपदान्तरप्रकाशनशक्तयः गकारौकारविसर्जनीयाः सास्नादिमन्तमर्थमवद्योतयन्ति पदमभिव्यञ्जयन्तः ॥

तदेषामर्थसङ्केतेनावच्छिन्नानाम् अभिहितेन न्यायमार्गेण अनुगृहीतध्वनिक्रमाणां विशिष्टानुपरिपाटिसमायोगिनाम् इत्थंक्रमविशेषक्रमलब्धजन्मनां वर्णानां सम्बन्धः य एको बुद्धिनिर्भासः बुद्धेर्निर्भासः तत् पदं भूमिः (भूमिष्ठमेव) भूमिकेव वाचकं वाच्यस्य न वर्णाः । वर्णद्वारेण तु सङ्केत्यते ॥

तत् पदमेकम् एकमपि, यद्वस्तु सावयवं घटादि तदनेकबुद्धिविषयं दृष्टं, न तु पदं तथा । तत् एकबुद्धिविषयं सर्वलोकप्रत्यक्षम् । वर्णाः पुनरनेकत्वादयुगपत्कालजन्मानः एकबुद्धिविषयतां न समुपाश्नुवते । यस्त्वेवमेकबुद्धिनिर्ग्राह्यमनुमानेन निराचिकीर्षति, तस्य प्रत्यक्षविरोधिनी प्रतिज्ञा स्यात् ॥

एवम् एकप्रयत्नाक्षिप्तं वर्णक्रमजन्मप्रत्युपनीतसंस्कारनिमित्तबुद्धिपरिपाकाभिसमीक्षया पश्चिमबुद्धौ झटिति परिस्फुरितं, अविभागं अवयवशून्यं, अत एव अक्रममवर्णात्मकमन्त्यवर्णप्रत्ययव्यापारोपस्थापितम् आद्यवर्णव्यापारपरम्परानुगृहीतपश्चिमवर्णग्रहणमात्रप्रत्युद्भासितम् ॥

परत्र परबुद्धिप्रतिपिपादयिषया वर्णैरेवाभिधीयमानैः अभिधातृभिः, श्रूयमाणैश्च श्रोतृभिः, अनादिवाग्व्यवहारवासनानुविद्धया लोकबुद्ध्या सिद्धवत् संप्रतिपत्त्या प्रतीयते । (नापि) अनादिसंसारचक्रमण्डले परिवर्तते । शब्दादेवार्थप्रतिपत्तिपूर्वको व्यवहारः, तद्वासनावासितया लोकधिया सिद्धवत् प्रतीयत इति, लौकिकानां सम्मुग्धाकारप्रवर्तितव्यवहारमात्रचरितप्रयोजनानां आत्मनीव पदे विप्रतिपत्तिः ॥

तस्मात् [पदं] वर्णव्यतिरिक्तम्, एकबुद्धिनिर्ग्राह्यत्वे सति प्रत्यायकत्वात्, प्रदीपवत् । अर्थप्रतिपत्तौ च कारणत्वात्, प्रदीपवत्, बुद्धिवच्च । न वर्णाः पदम्, एकेन कर्त्रा क्रमेण प्रयुज्यमानत्वात्, करणत्वाच्च, वासीवृक्षादानादिवत् ॥

अत्र [1]कश्चित् आह—

1. कुमारिलभट्टः श्लोकवार्तिके स्फोटवादे 131-X136-श्लोकैः

वर्णा वा ध्वनयो वापि स्फोटं न [1]पदवाक्ययोः ।
व्यञ्जन्ति व्यञ्जकत्वेन यथा दीपप्रभादयः ॥
सत्त्वात् घटादिवच्चेति साधनानि यथारुचि ।
लौकिकव्यतिरेकेण कल्पितेऽर्थे भवन्ति हि ॥
नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः ।
घटादिवन्न दृष्टेन विरोधो धर्म्यसिद्धितः ॥
प्रतिषेधेत्तु यो वर्णांस्तज्ज्ञानानन्तरोद्भवात् ।
दृष्टबाधो भवेत्तस्य शशिचन्द्रनिषेधवत् ॥
वर्णोत्था वाऽर्थधीरेषा तज्ज्ञानानन्तरोद्भवा ।
यादृशी सा तदुत्था हि धूमादेरिव वह्निधीः ॥
दीपवद्वा गकारादिर्गवादेः प्रतिपादकः ।
ध्रुवं प्रतीयमानत्वात्तत्पूर्वं प्रतिपादनात् ॥" इति ।

अत्रोच्यते—वर्णा वा ध्वनयो वाऽपि स्फोटं न पदवाक्ययोः इति, पदं वाक्यं वा स्वतस्तावत् न प्रसिद्धम् । तत्रासति वर्णव्यतिरिक्ते पदे वाक्ये वा, पदवाक्ययोः स्फोटं न व्यञ्जयन्तीति कथं चेतस्विनां वचनावकाशः स्यात् । एवं च सति, उद्दिश्य पदवाक्ययोः स्फोटं प्रतिषेधता पदं वाक्यं चाभ्युपगतं भवेत् ॥

अथापि पराभिप्रायेणोच्येत, तथाऽपि सिद्धसाध्यता । न परस्य पदवाक्ययोरन्यः स्फोटो विद्यते, यः प्रतिषिध्येत । पदवाक्ये एव हि तस्य स्फोटः ॥

अथापि ब्रूयात्—अर्थावच्छेदका विशिष्टक्रमोपनिवेशिनो वर्णाः पदं वाक्यं च प्रतिषिध्यते इति । तच्च न युक्तम्, स्वतो विरोधात् ॥

अथाऽपि ब्रूयात्—वर्णव्यतिरिक्तं पदं वाक्यं वा प्रतिषिध्यते इति । तथाऽपि व्यतिरिक्तमुद्दिश्य तस्य व्यञ्जनप्रतिषेधात् व्यतिरिक्तपदवाक्याभ्युपगमः प्रसक्तः ॥

---

1. "ध्वनिमात्रोपादाने शङ्खादिध्वनीनां स्फोटाभिव्यञ्जकत्वस्य परैरनिष्टत्वादंशे सिद्धसाध्यत्वं स्यात् । तन्मा भूदिति पदवाक्ययोरिति विशेषणम्, पदवाक्ययोर्वर्तमाना वर्णा ध्वनयो वा स्फोटं नाभिव्यञ्जयन्तीत्यन्वयः" इति श्लोकवार्तिकव्याख्यायां न्यायरत्नाकरे पार्थसारथिमिश्राः ॥

अथाऽपि परकल्पितपदवाक्यप्रतिषेधः, एवमपि व्यञ्जकत्वादित्यसिद्धो हेतुः । कथम्? स्वात्मव्यतिरिक्तस्य वा पदस्य व्यञ्जकत्वं, अव्यतिरिक्तस्य वा व्यञ्जकत्वं, अर्थस्य वा व्यञ्जकत्वं वर्णानामिति त्रयी विकल्पना । यदि व्यतिरिक्तस्य व्यञ्जकत्वं, तदा स्वतोऽसिद्धः स्यात् ॥

अथाव्यतिरिक्तस्य, तथाऽपि परस्यासिद्धः । किं च, व्यञ्जकत्वाच्च व्यतिरिक्तस्यैव व्यञ्जकत्वं, नाव्यतिरिक्तस्य, प्रदीपादेरिव । अन्यव्यञ्जनार्थं हि व्यञ्जकः प्रदीपादिरुपादीयते, न स्वात्मव्यञ्जनार्थं । स्वात्मव्यक्त्यर्थं चेदुपादास्यते, जनुषाऽन्धस्यापि व्यज्येत ॥

अथ व्यतिरिक्तव्यञ्जकत्वे सिद्धे, पदस्य व्यञ्जका भवेयुः, अर्थस्य वा । तत्रानेकसाध्यं यथा शिबिकोद्वहनादि, तत् अन्यतमेन न शक्यं अनुष्ठातुं, एवमन्यतमेन वर्णानामर्थस्य प्रतिपादनमनेकसाध्यत्वादशक्यमिति प्रतिपादितम् ॥

न च कूपखानकन्यायेनापि कंचित् कंचित् व्यङ्ग्ये संस्कारमाधाय वर्णा निवर्तन्ते इति शक्यं वक्तुम् । अभिधेयस्यैकबुद्धिविषयत्वात् ॥

यथा च सुगतकृतान्ते प्रध्वंसमानं विज्ञानमुत्पत्स्यमानस्य विज्ञानस्य संस्कारमाधातुमपर्याप्तं, स्थितस्य धर्मिणः कस्यचिदभावात् । एवमन्योन्यसंबन्धाभावादयुगपत्समयजन्मनां वर्णानां पूर्वस्य पूर्वस्य विनश्यत उत्तरस्योत्तरस्य चोपजनिष्यमाणस्य बलाधानानुपपत्तिरिति नार्थस्य व्यञ्जका वर्णाः ॥

परिशेषात् पदस्यैव व्यतिरिक्तस्याभिव्यञ्जितारः इति स्थितधर्मः । अस्माकं तु स्थिते धर्मिणि चेतसि पूर्वपूर्ववर्णप्रत्युपस्थितसंस्कारपरम्परापरिपाकविशारदे पश्चिमवर्णजन्मवेलायां निरवयवमेकबुद्धिनिर्ग्राह्यबुद्धिनिर्भासात्मकं झटिति समुन्मिषतीति न संस्काराधानासामर्थ्यदोषप्रसङ्गः ॥

किं च, यद्यपि वर्णाः स्वबुद्धिं व्यञ्जयन्ति । सा बुद्धिरर्थप्रतीतिं प्रति करणभूतैवाभिव्यज्यते, न तु फलं प्रति वर्णाः करणत्वेन व्याप्रियन्ते । करणभूतबुद्ध्युत्पादनोपक्षयत्वात् । बुद्धेरेव हि फलं प्रति व्यापारः । यस्य हि फलं प्रति व्यापारः तत् प्रमाणं, स शब्दः । ततश्च अर्थप्रतीतिं प्रति कारणभूतबुद्धिव्यवहितत्वात् न वर्णानां वाचकत्वम् । परम्परया तु पदं प्रत्युपायत्वं न वर्णानां प्रतिषिध्यते ॥

तस्मादेवमयं श्लोकः पठितव्यः—

वर्णा वा ध्वनयो वाऽपि भिन्नमेवार्थमात्मनः ।।
व्यञ्जन्ति व्यञ्जकत्वेन यथा दीपप्रभादयः ।।

तथा, घटादीनामप्यर्थान्तरप्रत्युपस्थानमात्रत्वमभ्युपगम्यत एव । घटादयो हि दर्शनमात्रेण पचनाहरणधारणादियोग्यताबुद्धिम् अन्यद्वा किंचित् उपस्थापयन्त्येव । तथा वर्णानां पारम्पर्येण आत्मव्यतिरिक्तपदप्रत्युपस्थापकत्वं सत्त्वात् घटादिवदिष्यत एवेति तुल्यमेतदपि ।।

सत्त्वाद्धटादिवच्चेति साधनानि यथारुचि ।
लौकिकव्यतिरेकेण कल्पितेऽर्थे भवन्ति हि ।।

सर्वथा जातिर्वा बुद्धिर्वा भवतु, यतो वा कुतश्चित् उच्चारितप्रध्वस्तवर्णानसंभविनो वर्णव्यतिरिक्तात् अर्थप्रतिपत्तिः, स स्फोटः । स च अवश्यं वर्णासंभवित्वात् कार्यस्याभ्युपगमनीयः । तथा च—

'नार्थस्य वाचकः स्फोटो वर्णेभ्यो व्यतिरेकतः'

इति ब्रुवतोऽभ्युपगमविरोधः स्यात् । अपि च, वर्णेभ्यो व्यतिरेकतः इत्यन्यतरासिद्धः । स्वतो व्यतिरेकस्यासिद्धत्वात् ।।

किं च, नामाख्यातोपसर्गनिपातपदजातिचतुष्टयमभ्युपगच्छता जातिव्यञ्जकं वर्णव्यतिरिक्तम् अन्यदभ्युपगन्तव्यम् । न वर्णाः पदजातिमभिव्यञ्जितुमुत्सहन्ते । वर्णा हि वर्णजातिमभिव्यञ्जयन्ति । न चावयवेषु भिन्नकालजन्मविनाशेष्ववयविजातिव्यञ्जनमुपपद्यते । व्यवस्थितेष्वपि नाम तावदवयवेषु न पाणिपादादयः शरीरादृते शरीरत्वमभिव्यञ्जयन्ति । किं पुनरनवस्थितेषु ।।

किं च, अश्वः अयातमयातमक्षः भवति, तेन मम वायुर्वायुः, इत्यादिषु तुल्यस्वरूपेषु नामत्वाख्यातत्वे परस्परविरुद्धजातीये नैक एव वर्णोऽभिव्यनक्ति ।।

यदि वा अश्वः इति नामजात्या अभिव्यञ्जकाः अकारशकारवकाराकारविसर्जनीयाः आख्यातजात्यभिव्यञ्जकेभ्यो भिन्ना भवेयुः, तदा उपपद्यते भिन्नानां भिन्नजात्याभिव्यञ्जकत्वम् । तदेकत्वे नोपपद्यते ।।

यद्यपि अर्थप्रकरणशब्दान्तरसन्निधानादिभिः इदं नाम इदमाख्यातं इति परिकल्प्येत, तथाऽपि नामाख्यातजात्यभिव्यक्तिम् अर्थप्रकरणादिभिरेक एव वर्णो न शक्नोति कर्तुम् । न हि ब्राह्मण एव ब्राह्मणत्वं क्षत्रियत्वं चाभिव्यनक्ति ।।

तस्मात् भिन्ना अकाराः शकारा वकारादयश्च बहव एषितव्याः। एवं गोशब्दादयोऽपि भिन्ना एव। तथा गोशब्दत्वमश्वशब्दत्वं च सिद्धम्। एवं मत्वमात्वमित्वमीत्वं च सिद्धम्। एवं च सति अकारादयो वर्णा अत्वादीन्येव सामान्यान्यभिव्यञ्जयन्ति। नाश्वादीन् नामाख्यातजातिभेदानिति॥

तस्मात् वर्णव्यतिरिक्तं पदत्वसामान्याभिव्यञ्जकं पदमभ्युपगन्तव्यम्। एवं च सत्येव श्लोक एवं पठितव्यः—

प्रतिषेधेत्तु यः स्फोटं वर्णधीसमनन्तरम्।
दृष्टबाधो भवेत्तस्य शशिचन्द्रनिषेधवत्॥
वर्णोत्थाऽवर्णधीरेषा तज्ज्ञानानन्तरोद्भवा। इति॥

कारणबुद्धिव्यवहितत्वादनन्तरोद्भवत्वमसिद्धम्। पारम्पर्येण चेत् सिद्धसाध्यता। धूमस्यापि न वह्निधियं प्रति कारणत्वम्। धूमधियः कारणत्वात्। धूमादीनां पारम्पर्यवत् वर्णादीनामपि पारम्पर्येणोपकारकत्वमिष्यत इत्युक्तम्॥

तस्मादयमपि श्लोक एवं पठितव्यः—

वर्णोत्था नार्थधीरेषा तज्ज्ञानानन्तरोद्भवा।
येदृशी सा तदुत्था न धूमोदरिव वह्निधीः॥

न च दीपवत् सन्निपत्य गकारौकारौ सास्नादिमदर्थव्यञ्जकौ। अर्थव्यक्तिकालानवस्थानादनयोर्दृष्टो व्यभिचारः विसर्जनीयविषयेऽपि समुन्नीयते निरवस्थानादि। वर्णा नार्थव्यक्तिसमानकालावस्थायिनः, प्रदीपस्तु व्यङ्ग्यकालेन तुल्यकालावस्थानः कारणत्वं प्रतिलभते॥

तस्मादयमप्येवं श्लोकः पठितव्यः—

दीपवद्वा गकारादिर्गवादीनामवाचकः।
ध्रुवं प्रतीयमानत्वात् तत्पूर्वं प्रतिपादनात्॥

प्रमाणं चात्र भवति—अर्थस्य न वाचकाः, नाप्यर्थं प्रति प्रमाणं वर्णाः, साक्षात् सङ्केतापेक्षत्वात्, अङ्कप्रतिमादिवत्। यथा शताद्यङ्का विष्णुप्रतिमाश्च सङ्केतापेक्षा आगममेवावद्योतयन्ति। न विष्णुशताद्यर्थं प्रति प्रमाणत्वमुपयान्ति॥

यत्तु नापेक्षते सङ्केतं, तत् प्रमाणम्, यथा वाक्यं, दीपादिजात्यन्तरं च। न तथा वर्णा इति प्रतिमावदेषां अप्रामाण्यमापातितम्। तथा, वर्णा अर्थप्रतिपादकमात्मव्यतिरिक्तमभिव्यञ्जयन्ति, साक्षात् सङ्केतापेक्षत्वात्, अङ्कविष्णुप्रतिमादिवत्। स्फोटः तत्सङ्केतं न साक्षादपेक्षते इत्यवादिष्म॥

[ भाष्यम् ]

तस्य सङ्केतबुद्धितः प्रविभागः, एतावतामेवंजातीयकोऽनुसंहारः एतस्यार्थस्य वाचक इति । सङ्केतस्तु पदपदार्थयोरितरेतराध्यासरूपः [1]स्मृत्यात्मा योऽयं शब्दः सोऽयमर्थः, योऽयमर्थः सोऽयं शब्दः, यश्च प्रत्ययः सोऽर्थः शब्दश्चेति ॥

एवमितरेतराध्यासरूपः सङ्केतो भवतीति । एवमेते शब्दार्थप्रत्ययाः इतरेतराध्यासात् सङ्कीर्णाः, गौरिति शब्दो, गौरित्यर्थो, गौरिति ज्ञानम् । य एषां प्रविभागज्ञः, स सर्ववित् ॥

[ विवरणम् ]

तस्मादेवम् अनेकयुक्तिपरिवारप्रत्युपानीतबलाधानं कः स्फोटम् अपाकर्तुं शक्नोति ॥

तदेवं गते भाष्यमिदानीमुच्यते—तस्य पदस्य सङ्केतबुद्धितः प्रविभागः । शब्दार्थज्ञानव्यतिभिन्नरूपा हि सङ्केतबुद्धिः । तस्याः सकाशात् पदस्य प्रविभागः करणीयः ॥

सङ्केतरूपं दर्शयति—एतावतां वर्णानाम् एवंजातीयकोऽनुसंहार एतस्यार्थस्य वाचकः इति । यथा अयमङ्कः शतं सहस्रं, विष्णुरेषा प्रतिमा इति च ॥

संकेतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्यात्मा, न प्रमाणभूतः । यथा विष्णुरेषा प्रतिमा, एष एव चतुर्भुज इति, तथा प्रत्यय उभयमिदं उभयं नु प्रत्यय इत्यन्योन्याध्यस्तरूपा विष्णुप्रतिमाप्रत्ययाः ॥

तथा योऽयं शब्दः सोऽयमर्थः, योऽयमर्थः स शब्दः, यश्च प्रत्ययः सोऽर्थः शब्दश्चेति, एवमितरेतराध्यासरूपः संकेतो भवति । एवमेते शब्दार्थप्रत्यया इतरेतराध्यासात् संकीर्णाः । तद्यथा गौरिति शब्दो, गौरित्यर्थो, गौरिति ज्ञानम् इति ॥

य एषां शब्दार्थप्रत्ययानां प्रविभागज्ञः, स सर्वज्ञः । कस्मात्? अशक्यत्वात् प्रविभागज्ञानस्य । न ह्यसर्वज्ञः शक्नोति प्रविभागेन तानवगन्तुम् ॥

1. स्मृत्यात्मकः

[ भाष्यम् ]

सर्वपदेषु चास्ति वाक्यशक्तिः, वृक्ष इत्युक्ते अस्तीति गम्यते । न सत्तां पदार्थो व्यभिचरतीति । तथा न ह्यसाधना क्रिया अस्ति इति ।

[ विवरणम् ]

सर्वपदेषु चास्ति वाक्यशक्तिः । वृक्ष इत्युक्ते अस्तीति गम्यते । न सत्तां पदार्थो व्यभिचरतीति ॥

किमर्थमेतदुच्यते? इह सर्वभूतरुतज्ञानोपायः प्रतिपिपादयिषितः । सर्वभूतरुतं च वाक्यार्थविषयमेव, न पदार्थविषयम् । पदानां केवलानां वर्णानामिवानर्थकत्वात्, संव्यवहाराभावाच्च । यथैव वर्णानां वर्णान्तराभिसमीक्षया पदावद्योतनप्रयोजनवत्त्वम्, एवं पदानामपि पदान्तरापेक्षया वाक्योपस्थापनोपायत्वम् । एवं सति वाक्यस्यैव प्रामाण्यं, केवलपदप्रयोगेऽर्थाप्रतीतेः ॥

किं च, केवलं पदमप्रमाणं, तावता निर्णयाभावात्, एकैकवर्णवत् । नापि पदं वाचकम्, सङ्केतार्थापेक्षत्वात्, शताद्यङ्कवत् । नामाख्याते केवले न वाचके, केवलाप्रयोगात्, उपसर्गवत् । यत्रापि केवलं पदं प्रयुयुक्षितं तत्राप्यवश्यम्, अस्ति तिष्ठति देवदत्त इत्यादिपदं बुद्धौ विपरिवर्तत इति न केवलाप्रयोगसिद्धिः ॥

प्रलम्बते, पर्यागच्छति, अभ्यागच्छति, इत्यादिषु उपसर्गकर्मप्रवचनीयानां न कश्चिदर्थः । तथा अभिमनायते, सुमनायते, दुर्मनायते, इत्यादिषु च उपसर्गाणां द्योतकत्वं सिद्धम् । तथा, प्रतिष्ठते, अधीत इत्यादिष्वप्युपसर्गाणां द्योतकत्वमेव न वाचकत्वमिति । तथा न ह्यसाधना क्रिया अस्ति । केवलकर्मप्रयोगे किमपि साधनं द्रव्यं गुणो वावगम्यते ॥

किं च, प्रकृतिप्रत्ययानामनवस्थितावधिकत्वात् व्यभिचारादवाचकत्वम् । तद्यथा—दरिद्रातिः केषाञ्चित् द्रव्यमात्र एव पठ्यते । दरिद्रशब्दस्तु निपातोपसर्गस्थानीयः पुनरागच्छति, द्राति, निद्राति, दरिद्राति, इति । तत्र का प्रकृतिरिति वक्तव्यम् । किं (द्राक्त्विदं) द्रा, इति, किं वा दरिद्रेति । केषाञ्चित्तु दरिद्रेत्येतावत् पठ्यते । तथा द्राशब्दोऽपि पृथगाम्नायते ॥

एवमस्ति सकारमात्रं पठन्ति । वीति च प्रत्यये कारमागमं कुर्वन्ति । केचित्तु सह कारेण पठित्वा (अविति) वीति च प्रत्यये लोपं कारस्य कुर्वन्ति । तत्र का प्रकृतिरिति वक्तव्यम् । न निर्ज्ञायते । प्रकृत्यवधौ प्रत्ययावधौ वा प्रकृतिप्रत्ययार्थौ शक्यौ विवेक्तुम् ॥

क्वचिदुपसर्गोऽपि 'असंग्रामयत शूर' इत्यादिषु प्रकृत्येकदेशतामापन्नः। तथा, अततेर्नः, अः, अत्यापत्यमिः, इयान्, अधुना, इत्यादौ कः प्रकृत्यर्थभागम् असत्यां प्रकृतौ ब्रूयात्। अग्निचित्, सोमसुत्, भिदा, छिदा, अथो, कृति, अमा, पच, पठ, इत्यादिषु प्रत्ययार्थमसति प्रत्यये को ब्रूयात् ॥

एवमादिषु लक्षितापचाराणां प्रकृतिप्रत्ययनां कः शक्नुयादर्थवत्त्वं कल्पयितुम्। अत्र भवतु नान्यत्रेति नार्धजरतीयं लभ्यम्। उद्दालकपुष्पभञ्जिकापारं न पुष्पप्रचायिका, इत्यत्र कः पूर्वपदोत्तरपदार्थः? प्रज्ञः, संज्ञ, इत्यादिषु प्रत्यन्वयोऽपि नास्तीति कस्य कोऽर्थः? इति ॥

ऋषभो, वृषभो, वृषः, उदकं, उदकुम्भः, क्षीरोदः, यावो, यावकः, कूपः, सूपः, यूपः, इत्यादिषु कस्य कोऽर्थ इतिवक्तव्यम्। दध्यशान, मध्वत्र, इत्यादिषु, किमवधि किं पदं वाचकम्? ॥

तस्मात् सर्वत्र दृष्टापचाराणां वर्णप्रकृतिप्रत्ययपदानाम् अनर्थकानाम् अदृष्टापचारनिरवयववाक्योपायत्वमेव। तानि निःसन्धिबन्धनात् निरवयवात् मिथ्याभूतवर्णपदध्वनिकृतचित्रीभावाद्वाक्यादपोद्धृत्य व्याकरणीयानि ॥

तानि च वाक्यस्यानवयवभूतानि, उपायत्वात् वाक्यावयववद्वभासमानानि, यावत्फलम् असत्त्वात् शताद्यङ्कवदेव मिथ्याभूतानि, अनुच्चार्यमाणवाक्यावद्योतनार्थं करणसन्निपाते विशेषेणोपादाय परिहीयमाणानि, स्वकीयक्रमनिष्पत्तिविनिवृत्तिकालादिभेदविचित्रतया वाक्यात्मानं क्रमवन्तमिव, निष्पद्यमानमिव, निवर्तमानमिव, द्राघीयांसमिव, कालवन्तमिव, भेदवन्तमिव, विचित्राकारतामापादयन्ति ॥

एवं च सति, यदुच्यते शशविषाणादपोद्धृत्य खरविषाणस्य, किं तदिति एतदलीकं, यथैव मृगतृष्णिकातोयमलीकमपि सत्यादूषरादपोद्ध्रियते, यथा च स्थाणोः पुरुषः, पुरुषाच्च स्थाणुः, शुक्तिकातश्च रजतमपोद्ध्रियते, यथैव च मृगतोयादयो यथाभूतोषरादिवस्तुप्रतिपत्तिहेतवः, तथा वर्णपदप्रकृतिप्रत्यया यथाभूतवाक्यार्थप्रतिपत्तिकारणे तत्प्रतिपत्तौ चापोद्ध्रियन्ते ॥

क्वचिदर्थप्राप्तमपोद्ध्रियते, यथा मृगतोयादिकम्। क्वचित्तु प्रयोजनत्वेन विवक्षितं, यथा शतादिसङ्ख्यातः शताद्यङ्कापोद्धारः क्रियते, यथा च लिप्यक्षराणि सङ्केतापेक्षत्वात् कृतसमयरूपाणि अकारादिवर्णादपोद्ध्रियन्ते। अथ च सर्वाण्येतानि यथाभूतार्थप्रतिपादनोपायत्वं प्रतिपद्यन्ते। न च तावता मिथ्यात्वमेषां नास्ति। तथा पदादीन्यपि ॥

यो हि प्रकृतिप्रत्ययपदवर्णानां संकेतद्वारेणान्योपायानां मिथ्याभूतलिप्य-क्षरकल्पानां स्वयमपि स्वसंकेतेन वाक्यार्थप्रतिपत्त्युपायमनेकधा निर्माय व्यवहरमाणः सत्यत्वमेषां मन्यते, नूनमसावभ्रे चन्द्रमसं दिदृक्षमाणः चन्द्र-दर्शनोपायभूतमभ्रमपि चन्द्रत्वेन प्रतिपद्यत इति ॥

यथा च वाक्यमेव सत्यं, तथा वाक्यार्थस्यैव सत्यत्वं, न पदानि, पदार्था वा केवलाः, सत्यत्वमुपयान्ति । सर्वमेव सामान्यविशेषात्मकं वस्तु । न हि सामान्यव्यावृत्तो विशेषः, विशेषव्यावृत्तं वा सामान्यमस्ति । गौरित्युक्ते अस्तीति गम्यते । तेन केवलपदप्रयोगेऽप्यन्तर्नीतपदान्तरार्थो वाक्यार्थ एव प्रतीयते, न केवलपदार्थः ॥

एवं च सति

[1]पदार्था गमयन्त्येतं प्रत्येकं संशये सति ॥
सामस्त्ये निर्णयोत्पदात् स्थाणुमूर्धस्थकाकवत् ॥

इत्यसिद्धमस्माकम् । न हि स्थाणुर्नाम वाक्यार्थः पृथक्पदार्थत्वेन प्रसिद्धः । यस्मात् वृक्षः सन् स्थाणुः सन् मूर्धा सन् काकः सन् मूर्धनि स्थाणोः इत्यन्तर्नीतप्रतीयमानपदान्तरास्थानपेक्षायां स्थाणुमूर्धस्थकाकबुद्धिरेव न स्यात् । सत्स्वपि तेषु सद्बुद्धिसमुत्पत्तेः सत्पदार्थान्तरबुद्धिरवश्यंभाविनी ॥

तस्मात् वाक्यार्थ एव प्रत्येकमपि संशयात्मक इति कुतः पदार्थाः प्रत्येकमसन्तो वाक्यार्थं गमयेयुः । तस्मादेवमयं श्लोकः पठितव्यः—

वाक्यं तु गमयत्येनं प्रत्येकं संशये सति ॥
सामस्त्ये निर्णयोत्पादात् स्थाणुमूर्धस्थकाकवत् ॥

एवम्––

वाक्येनैवोच्यते तस्मात् वाक्यार्थोऽन्यैररूपणात् ।
अन्ते चास्तीति बोधाच्च वृक्षेणैव च वृक्षता ॥

यत्तु—पलाशशब्देन वृक्षता नोच्यते इति, सत्यमेवमेतत् । न हि पलाशवाक्येन वृक्षवाक्यार्थस्याभिधानम् । भिन्नविषयत्वात् । अन्यो हि पलाशवाक्यार्थः पलाशोऽस्ति तिष्ठतीति वा । अन्यो वृक्षवाक्यार्थः । यदा च पदवर्णानां निरवयवानां पृथगस्तित्वमभ्युपगम्यते, तदा निरवयववर्णपदो-पादानं वाक्यं सावयवं कथमवकल्पेत । न हि क्रियाकाशादिभिः सावयवं शक्यमारब्धुम् । अथ सावयवत्वमभ्युपायिष्यते, तत्रापि दोष एव प्रसज्येत ॥

1. श्लोकवार्तिके वाक्याधिकरणे श्लो. 363.

[ भाष्यम् ]

[1]नियमार्थोऽनुवादः कर्तृकरणकर्मणां चैत्राग्नितण्डुलानाम् इति । दृष्टं च वाक्यार्थे [2]पदम् । श्रोत्रियः छन्दोऽधीते, जीवति प्राणान् धारयति[3] इति वाक्ये पदार्थाभिव्यक्तिः । ततः पदं प्रविभज्य व्याकरणीयं क्रियावाचकं वा कारकवाचकं वा । अन्यथा भवति, अश्वः, अजापयः, इत्येवमादिषु नामाख्यातसारूप्यादनिर्ज्ञातं कथं क्रियायां कारके वा व्याक्रियेत इति ॥

[ विवरणम् ]

सद्भावे[4] पदवर्णानां भेदो यः परमाणुवत् ।
सर्वाभावस्ततश्चेति सेयं बालविभीषिका ॥

परमाणूनां सत्त्वादिधर्ममात्रत्वाभ्युपगमात् विवृत्य सुष्ठु भाषामहे—सेयं वृद्धविभीषिकेति ॥

अथ केवलपदप्रयोगे पदार्थान्तरस्यापि संग्रहात् किमनेकपदप्रयोगेणेति चेत्, नियमार्थोऽनुवादः कर्तृकरणकर्मणां चैत्राग्नितण्डुलानां क्रियावचनात् साधनानि विद्यन्त इत्यर्थप्राप्तानां नियमः, चैत्र एव कर्ता, अग्निनैव करणेन, तण्डुलानेव कर्म, इति ॥

अपि च नियमार्थमात्रे(मन्तरे)णानुवादः । दृष्टं च वाक्यार्थे केवलं पदम् । यथा श्रोत्रियः छन्दोऽधीते इति । साधनवचनमेव केवलश्रोत्रियपदं छन्दोऽधीते इत्यस्मिन् क्रियासाधनसमुदाये वर्तते । तथा जीवति इति क्रियापदमाक्षिप्तक्रियासाधनविशेषम् । (छत्रं) छन्दोऽधीते, प्राणान् धारयति, इति वाक्ये श्रोत्रियो जीवतीति च पदार्थाभिव्यक्तिः । सर्वथा सर्वपदेषु वाक्यशक्तिरित्यङ्गीकृतपदान्तरार्थान्येव सर्वाणि पदानीत्येतदुच्यते ॥

तस्मात् क्वचित् क्रियापदेनैव साधनमुपक्षिप्तम् । क्वचिच्च नामपदेनैव क्रिया अभिहिता । तस्मात् तेषां विभागो दुरवबोध इति । ततः वाक्यात् प्रविभज्य [पदं] व्याकरणीयं क्रियावाचकं वा जीवतीत्यादि, कारकवाचकं वा श्रोत्रियः क्षत्रियः इत्यादि ॥

अन्यथा यदि वाक्यात् प्रविभज्य न व्याक्रियेत, तदा ततो भवत्यश्वोऽजापयः इत्येवमादिषु नामाख्यातसारूप्यादनिर्ज्ञातं कथं क्रियायां कारके वा व्या[क्रि]यिेत । भवति निधेहीति सर्वनाम्नः शत्रन्तस्य वा सप्तम्यां रूपम् । भवति बीजादङ्कुर इत्याद्यातम् ॥

---

1. तथा च पचतीत्युक्ते सर्वकारकाणामाक्षेपः । नि - 2. पदरचनम् ।
3. -ति तत्र वाक्ये 4. श्लोकवार्तिके वाक्याधिकरणे श्लो. 150.

[ भाष्यम् ]

तेषां शब्दार्थप्रत्ययानां विभागः । तद्यथा—श्वेतते प्रासाद इति क्रियाऽर्थः । श्वेतः प्रासाद इति कारकार्थः[1] । क्रियाकारकात्मा तदर्थः प्रत्ययश्च । कस्मात् ? सोऽयमित्यभिसम्बन्धात् [2]अभेदाकारप्रत्ययः सङ्केत इति ॥

यस्तु श्वेतोऽर्थः स शब्दप्रत्यययोरालम्बनीभूतः । स हि स्वाभिरवस्थाभिः विक्रियमाणः न शब्दसहगतो न बुद्धिसहगतः ।

[ विवरणम् ]

अश्वश्चरतीति जातिवाचकम् । अश्वस्त्वं ग्राममिति श्वयतेर्लुङन्तस्य मध्यमपुरुषैकवचनान्तस्य प्रयोगः । अजापयः पीयतामिति नामपदम् । अजापयस्त्वं राजानमिति जपतेर्णिजन्तस्य लङ्मध्यमपुरुषैकवचनान्तस्य रूपम् ॥

तेषां शब्दार्थप्रत्ययानां सङ्करं प्रदर्श्य विभागः प्रतिपाद्यते—श्वेतते प्रासाद इति क्रियार्थः । श्वेतः प्रासाद इति कारकार्थः । क्रियाकारकत्वाद्वस्तुनः श्वेतते श्वेत इति च क्रियार्थेन च कारकार्थेन चाभिधानम् ॥

यथा शब्दः क्रियाकारकात्मा, यः श्वेतः स श्वेतते यः श्वेतते स श्वेतः इत्येवं क्रियाकारकाव्यतिरिक्तः एकः शब्दः, तथा अर्थः तद्वाच्यः क्रियाकारकात्मा । तथा तद्विषयः प्रत्ययः क्रियाकारकात्मा । तथा अर्थः शब्दप्रत्ययात्मा । प्रत्ययोऽपि शब्दार्थात्मा । कस्मात् ? सोऽयमित्यभिसम्बन्धात् । योऽर्थः स शब्दः, यः शब्दः सोऽर्थः प्रत्ययश्च, यः प्रत्ययः सोऽर्थः शब्दश्च, इत्येवं अभेदाकारप्रत्ययः स्मृत्यात्मा सङ्केतः इति । एवं सङ्कररूपतः प्रविभागः कार्यः ॥

कथम् ? यस्तु श्वेतोऽर्थः श्वेतगुणः प्रासादादिरर्थः स शब्दप्रत्यययोः आलम्बनभूतः वाच्यत्वेन विषयत्वेन च । स हि स्वाभिरवस्थाभिः नवपुराणत्वादिभिः विक्रियमाणः न शब्दसहगतो न अपि बुद्धिसहगतः । शब्द-

1. -र्थः शब्दः ।

2. एकाकार एव

[ भाष्यम् ]

एवं प्रत्ययः एवं शब्दः नेतरेतरसहगत इति, अन्यथा शब्दः, अन्यथा अर्थः, अन्यथा प्रत्ययः, इति प्रविभागः ।

एवं तत्प्रविभागसंयमात् योगिनः सर्वभूतरुतज्ञानं सम्पद्यत इति ॥ १७ ॥

[ सूत्रम् ]

संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् । १८ ॥

[ भाष्यम् ]

द्वये खल्वमी संस्काराः–स्मृतिक्लेशहेतवो वासना[1]ऽभिधानाः, विपाकहेतवो धर्माधर्मरूपाः । ते पूर्वभवाभिसंस्कृताः परिणामचेष्टानिरोधशक्तिजीवनधर्मा[2] अपरिदृष्टाः चित्तधर्माः । तेषु संयमः संस्कारसाक्षात्क्रियायै समर्थः ।

विवरणम् ]

प्रत्ययाभावेऽपि भावात् । एवं प्रत्ययः न शब्दसहगतो नाप्यर्थसहगतः । इतराभावेऽपि भावात् । तथा शब्दः अपि, अर्थप्रत्ययव्यभिचारात्, इति एवं अन्यथा अर्थः अन्यथा शब्दः अन्यथा प्रत्ययः इति प्रविभागः । एवं च [तत्] प्रविभागसंयमात् इदं वर्णैः सङ्केतितैः वाक्यात्मकम् अभिव्यज्यमानम् 'अयमर्थः, प्रत्ययश्चायं' इति प्रविभागेन संयमात् प्रविभक्तपदपदार्थप्रत्ययानां स्वेन रूपेण साक्षात्करणात् योगिनः सर्वभूतरुतज्ञानं सम्पद्यते ॥ १७ ॥

संस्कारसाक्षात्करणात् पूर्वजातिज्ञानम् । द्वये खल्वमी संस्काराः वासनाऽभिधानाः परिदृष्टाः अपरिदृष्टाश्च स्मृतिक्लेशहेतवः । परिदृष्टाः (उभयेऽपि) क्लेशकर्मविपाकानुभवनिर्वर्तिताः चित्तधर्माः धर्माधर्मरूपाः धर्माधर्मनिमित्ताः पूर्वभवाभिसंस्कृताः (ता)अतिक्रान्तानन्तजन्मनिष्पादिताः परिणामचेष्टानिरोधशक्तिजीवनधर्माः पूर्वव्याख्याताः अपरिदृष्टाः । तेषु द्वयेषु संस्कारेषु संयमः क्रियमाणः संस्कारसाक्षात्क्रियायै समर्थः भवति ॥

---

1. -रूपाः
2. -र्मवद

[ भाष्यम् ]

न च देशकालनिमित्तानुभवैर्विना तेषामस्ति साक्षात्करणम् । तदित्थं संस्कारसाक्षात्करणात् पूर्वजातिज्ञानमुत्पद्यते योगिनः । परत्राप्येवमेव संस्कारसाक्षात्करणात् परजातिसंवेदनम् ॥

अत्रेदमाख्यानं श्रूयते—भगवतो जैगीषव्यस्य संस्कारसाक्षात्करणात् दशसु महासर्गेषु जन्मपरिणाम[1]मनुपश्यतः विवेकजं ज्ञानं प्रादुरभूत् । अथ भगवान् आवट्यः तनु [तन्त्र] धरः तमुवाच—दशसु महासर्गेषु भव्यत्वात् अनभिभूतबुद्धिसत्त्वेन त्वया नरकतिर्यग्ग-[2] मनदुःखं [3]अनुपश्यता देवमनुष्येषु पुनः पुनः उत्पद्यमानेन सुखदुःखयोः किमधिकमुपलब्धम् इति ।

[ विवरणम् ]

ते च देशकालनिमित्तानुभवविशिष्टतया निर्वर्तितत्वात् साक्षात्करणकालेऽपि देशादिविशेषणविशिष्टा एव प्रत्यक्षीभवन्ति । तस्मात् न च (ते) देशकालनिमित्तानुभवैर्विना तेषामस्ति साक्षात्करणम् ॥

तदित्थं संस्कारसाक्षात्करणात् पूर्वजातिज्ञानमुत्पद्यते योगिनः । परत्रापि प्राणिषु एवमेव येषां जातिं बुभुत्सते तदीयसंस्कारेषु संयमात् [संस्कारसाक्षात्करणात्] तत्पूर्वजातिज्ञानमुत्पद्यते ॥

तत्र संस्कारसाक्षात्करणफलव्यञ्जनार्थं इदमाख्यानमुपक्षिप्यते—भगवतो जैगीषव्यस्य संस्कारसाक्षात्करणात् दशसु महासर्गेषु जन्मपरिणामं अनुपश्यतो विवेकजं वैराग्यनिमित्तं ज्ञानं प्रादुरभूत् ॥

अथ भगवान् आवट्यः तन्त्रधरः तमुवाच--दशसु महासर्गेषु [भव्यत्वात्] अनभिभूतबुद्धिसत्त्वेन त्वया नरकतिर्यग्गमनदुःखमनुपश्यता देवमनुष्येषु पुनः पुनः उत्पद्यमानेन सुखदुःखयोः किमुपलब्धमधिकमिति ॥

भगवन्तमावट्यं जैगीषव्य उवाच—दशसु महासर्गेषु भव्यत्वात् अनभिभूतबुद्धिसत्त्वेन मया नरकतिर्यग्गमनमनुपश्यता देवमनुष्येषु पुनः पुनः उत्पद्यमानेन यत् किञ्चित् अनुभूतं तत् सर्वं दुःखमिति [दुःखमेव] प्रत्यवैमि ॥

---

1. भक्रम
2. भैसम्भवं
3. संप-

[ भाष्यम् ]

भगवन्तमावट्यं जैगीषव्य उवाच—दशसु महासर्गेषु भव्यत्वात् अनभिभूतबुद्धिसत्त्वेन मया नरकतिर्यग्गमनं अनुपश्यता देवमनुष्येषु पुनः पुनः उत्पद्यमानेन यत्किञ्चिदनुभूतं तत् सर्वं दुःखमेव प्रत्यवैमि ॥

भगवान् आवट्य उवाच—यदिदमायुष्मतः प्रधानवशित्वम् अनुत्तमं च सन्तोषसुखं किमिदमपि दुःखपक्षे निक्षिप्तमिति ॥

भगवान् जैगीषव्य उवाच—विषयसुखापेक्षयैवेदमनुत्तमं सन्तोष-सुखं [प्रधानवशित्वसुखं च] उक्तम् । कैवल्यसुखापेक्षया दुःखमेव । बुद्धिसत्त्वस्यायं धर्मः त्रिगुणः । त्रिगुणश्च प्रत्ययो हेयपक्षे न्यस्त इति । दुःखरूपः तृष्णातन्तुः । [1]तृष्णासन्तानदुःखोपशमरूपं तु प्रसन्नम् [2]अनाबाधं सर्वानुकूलं सुखमिदमुक्तम् इति ॥ १८ ॥

[ सूत्रम् ]

**प्रत्ययस्य परचित्तज्ञानम् ॥ १९ ॥**

[ भाष्यम् ]

प्रत्यये संयमात् प्रत्ययस्य [3]साक्षात्करणम् । ततः परचित्त-ज्ञानम् ॥ १९ ॥

[ विवरणम् ]

भगवानावट्य उवाच—यदिदमायुष्मतः प्रधानवशित्वमनुत्तमं च सन्तोषसुखं [किमिदमपि दुःखपक्षे निक्षिप्तमिति । भगवान् जैगीषव्य उवाच--विषयसुखापेक्षयैवेदमनुत्तमं सन्तोषसुखं [प्रधानवशित्वसुखं च] उक्तम् । कैवल्यसुखापेक्षया दुःखमेव । बुद्धिसत्त्वस्यायं धर्मः त्रिगुणः ।] त्रिगुणश्च प्रत्ययो हेयपक्षे न्यस्त इति । किमपेक्षया पुनरेतद् द्वयं सुखं भवतीत्याह—दुःखरूपस्तृष्णातन्तुः । तृष्णासन्तानदुःखो-पशमरूपं तु प्रसन्नमनाबाधं सर्वानुकूलं सुखमिदमुक्तं सन्तोषसुखं प्रधानजयसुखं च ॥ १८ ॥

प्रत्ययस्य परचित्तज्ञानम् । परप्रत्यये संयमात् परप्रत्ययस्य साक्षात्करणम् । तत्साक्षात्करणे तत्संबन्धिनः परचित्तस्य ज्ञानं भवति ॥ १९ ॥

1. तृष्णादुःखसन्तापापगमात्तु
2. अबाधं
3. साक्षात्करणात् ततः

[ सूत्रम् ]

**न च [1]सालम्बनं तस्याविषयीभूतत्वात् ॥ २० ॥**

[ भाष्यम् ]

रक्तं प्रत्ययं जानाति । अमुष्मिन् आलम्बने रक्त इति न जानाति । परप्रत्ययस्य यदालम्बनं तत् योगिचित्तेन न आलम्बनीकृतम् । परप्रत्ययमात्रं तु योगिचित्तस्य आलम्बनीभूतम् इति ॥ २० ॥

[ सूत्रम् ]

**कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुष्प्रकाशासम्प्रयोगे अन्तर्धानम् ॥ २१ ॥**

[ भाष्यम् ]

कायस्य रूपे संयमात् रूपस्य या ग्राह्या शक्तिः तां[2] प्रतिबध्नाति ।

[ विवरणम् ]

तत्र परप्रत्ययसाक्षात्करणात् तद्दुःखे दुःखित्वं, तत्सुखे सुखित्वं च प्राप्नोतीत्याशङ्क्याह—न च सालम्बनं तस्य अविषयीभूतत्वात् । रक्तं प्रत्ययं जानाति योगी । परस्य अमुष्मिन् आलम्बने रक्तः प्रत्यय इति न जानाति । परप्रत्ययस्य यदालम्बनं सुखरूपं दुःखरूपं वा, येन सुखी दुःखी वा भवेत् ॥

ननु चालम्बनमसञ्जानानः कथममुष्मिन् रक्त इति सञ्जानीत इति? उच्यते—रक्तममुष्मिन्निति सामान्यं विजानाति । न पुनः सुखविशेषं सुखिनः प्रत्ययस्यालम्बनीभूतमालम्बते । परप्रत्ययमात्रं तु योगिचित्तस्यालम्बनीभूतम् ॥ २० ॥

कायरूपसंयमात् तद्ग्राह्यशक्तिस्तम्भे चक्षुःप्रकाशासम्प्रयोगे अन्तर्धानम् । योगिन आत्मीयस्य कायस्य रूपं कायरूपम् । तस्मिन् रूपे संयमात् तस्य रूपस्य या परचक्षुर्ग्राह्या शक्तिः तां प्रतिबध्नाति

---

1. न च तत् सा
2. प्रतिष्टभ्नाति ।

ग्राह्यशक्तिस्तम्भे सति चक्षुष्प्रकाशासम्प्रयोगे अन्तर्धानमुत्पद्यते योगिनः। एतेन शब्दाद्यन्तर्धानम् उक्तं वेदितव्यम् ॥ २१ ॥

[ सूत्रम् ]

**सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञान-मरिष्टेभ्यो वा ॥ २२ ॥**

[ भाष्यम् ]

आयुर्विपाकं कर्म द्विधा[1]—सोपक्रमं निरुपक्रमं च। तत्र यथाऽऽर्द्रं वस्त्रं वितानितं क्षेपीयसा[2] कालेन शुष्येत् तथा सोपक्रमम्। यथा च तदेव संपिण्डितं चिरेण संशुष्येदेवं निरुपक्रमम्। यथा वा अग्निः शुष्के कक्षे [3]युक्तवाते समन्ततो नियुक्तः[4] क्षेपीयसा कालेन दहेत् तथा

[ विवरणम् ]

निरुणद्धि। ततः परेषां चक्षुःप्रकाशो योगिकायरूपेण न सम्प्रयुज्यते। ततश्च अन्तर्धानम्। एतेन शब्दाद्यन्तर्धानमुक्तम्। योगिशब्दस्य या ग्राह्यशक्तिः तस्यां संयमे सति या शब्दस्य ग्राह्यशक्तिः सा प्रतिष्टभ्यते। तेन योगिशब्दं न परः शृणोति। तथा स्पर्शादिष्वपि द्रष्टव्यम् ॥ २१ ॥

सोपक्रमं निरुपक्रमं च कर्म तत्संयमादपरान्तज्ञानमरिष्टेभ्यो वा। आयुर्विपाकं कर्म द्विधा। कथम्? त्वरितं निमित्तमादाय फलप्रदं सोपक्रमम् उच्यते। यत्तु मन्दप्रसरं चिरेण फलं दास्यति तत् निरुपक्रमम् ॥

यथा आर्द्रं वस्त्रं वितानितं विस्तारितं क्षेपीयसा क्षिप्रतरेण कालेन शुष्येत्, तथा सोपक्रमं कर्म क्षिप्रमायुर्विपाकं कृत्वा क्षीयते ॥

तदेव वस्त्रं सम्पिण्डितं अवितानितम् चिरेण शुष्येदेवं निरुपक्रमं चिरेण आयुः करोति ॥

यथा वा अग्निः शुष्के कक्षे युक्तवाते अनुकूलमातरिश्वनि समन्ततो नियुक्तः क्षेपीयसा कालेन दहेत्, तथा सोपक्रमं कर्म क्षेपीयसा कालेन आयुर्धक्ष्यति ॥

---

1. द्विविधं
2. लघीयसा
3. मुक्तो वातेन
4. युक्तः

[ भाष्यम् ]

सोपक्रमम् । यथा वा स एवाग्निस्तृणराशौ क्रमेण[1] न्यस्तश्चिरेण दहेत् तथा निरुपक्रमम् । तदैकभविकमायुष्करं कर्म द्विविधम्—सोपक्रमं निरुपक्रमं च । तत्संयमादपरान्तस्य प्रायणस्य ज्ञानम् ।

अरिष्टेभ्यो वेति । त्रिविधमरिष्टमाध्यात्मिकमाधिभौतिकमाधिदैविकं चेति । तत्राऽऽध्यात्मिकं, घोषं स्वदेहे पिहितकर्णो न शृणोति । ज्योतिर्वा नेत्रेऽवष्टब्धे न पश्यति । तथाऽऽधिभौतिकं, यमपुरुषान् पश्यति, पितॄनतीतानागतानकस्मात् वेत्ति । तथाऽऽधिदैविकं,[3] अकस्मात् [4]सिद्धादीन् पश्यति । विपरीतं वा सर्वामति । अनेन वा जानात्यपरान्तमुपस्थितमिति ॥ २२ ॥

[ सूत्रम् ]

मैत्र्यादिषु बलानि ॥ २३ ॥

[ विवरणम् ]

स एवाग्निः तृणराशौ क्रमेण न्यस्तश्चिरेण दहेत् , तथा निरुपक्रमं कर्म ॥

तदेतत् द्विविधम् ऐकभविकमायुष्करं कर्म । तत्संयमादपरान्तज्ञानम् । अपरान्तस्य प्रायणस्य आत्मीयस्य ज्ञानम् । तथा परकीयद्विविधकर्मसंयमात् परप्रायणज्ञानमपि भवति । प्रायणज्ञाने च प्रयोजनं पुरुषकर्तव्यतां प्रतिसमीहनम् ॥

अरिष्टेभ्यो वा प्रायणज्ञानम् । त्रिविधमरिष्टमाध्यात्मिकमाधिभौतिकमाधिदैविकं च । तत्राध्यात्मिकस्योदाहरणम्— घोषं स्वदेहे पिहितकर्णो न शृणोति । ज्योतिर्वा नेत्रेऽवष्टब्धे न पश्यति ॥

तथा आधिभौतिकं—यमपुरुषान् पश्यति । पितॄनतीतानागतानकस्माद्वेत्ति । आधिदैविकम्—अकस्मादेव सिद्धादीन् पश्यति । विपरीतं वा सर्वं पश्यति करोति च । तत्रारिष्टमिति लौकिकी वाचोयुक्तिः । एवं ह्याह—विपरीतदर्शनं ममासीदरिष्टमिति ॥ २२ ॥

1. क्रमशोऽवयवेषु
2. पश्यति
3. स्वर्गे अ
4. सिद्धान् वा

[ भाष्यम् ]

मैत्री करुणा मुदितेति तिस्रो भावनाः। तत्र भूतेषु सुखितेषु मैत्रीं भावयित्वा मैत्रीबलं लभते। दुःखितेषु करुणां भावयित्वा करुणाबलं लभते। पुण्यशीलेषु मुदितां भावयित्वा मुदिताबलं लभते। भावनातः समाधिर्यः स संयमः। ततो बलान्यवन्ध्यवीर्याणि जायन्ते। पापशीलेषूपेक्षा न तु भावना। ततश्च तस्यां नास्ति समाधिरित्यतो न बलमुपेक्षातः तत्र संयमाभावादिति ॥ २३ ॥

[ सूत्रम् ]

**बलेषु हस्तिबलादीनि ॥ २४ ॥**

[ भाष्यम् ]

हस्तिबले संयमाद्धस्तिबलो भवति। वैनतेयबले संयमाद्वैनतेयबलो भवति। वायुबले संयमाद्वायुबलो भवति इत्येवमादि ॥ २४ ॥

[ सूत्रम् ]

**प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम् ॥ २५ ॥**

[ विवरणम् ]

मैत्र्यादिषु बलानि। मैत्री करुणा मुदितेति तिस्रो भावनाः। तत्र भूतेषु सुखितेषु मैत्रीं भावयित्वा मैत्रीबलं लभते। दुःखितेषु करुणां भावयित्वा करुणाबलं लभते। पुण्यशीलेषु मुदितां भावयित्वा मुदिताबलं लभते ॥

भावनातः मैत्र्यादिभावनातः समाधिर्यः संजायते स, संयमः मैत्र्यादिभावनास्थैर्यनिमित्तः। ततः संयमात् मैत्र्यादिगतात् योगिनो बलान्यवन्ध्यवीर्याणि जायन्ते ॥

पापशीलेषु तु अस्य उपेक्षा, न तु भावना। ततश्च भावनाया अभावात् तस्याम् उपेक्षायां नास्ति समाधिरित्यतो न बलमुपेक्षातः। तत्र संयमाभावादिति ॥ २३ ॥

बलेषु हस्तिबलादीनि। एतैर्मैत्र्यादिनिमित्तैर्बलैर्बलवान् योगी हस्त्यादीन बलेषु संयमं कृत्वा हस्त्यादिबलो भवति ॥ २४ ॥

प्रवृत्त्यालोकन्यासात् सूक्ष्मव्यवहितविप्रकृष्टज्ञानम्। या असौ ज्योतिष्मती प्रवृत्तिरुक्ता, तस्यां प्रकाशः आलोकः तं प्रकाशं योगी

[ भाष्यम् ]

ज्योतिष्मती प्रवृत्तिरुक्ता मनसस्तस्यां य आलोकः तं योगी सूक्ष्मे वा व्यवहिते वा विप्रकृष्टे वाऽर्थे विन्यस्य [1]तमधिगच्छति ॥ २५ ॥

[ सूत्रम् ]

भुवनज्ञानं सूर्ये संयमात् ॥ २६ ॥

[ भाष्यम् ]

तत्प्रस्तारः सप्त लोकाः । तत्रावीचेः प्रभृति मेरुपृष्ठं यावदित्येवं भूर्लोकः । मेरुपृष्ठादारभ्य—आ ध्रुवात् ग्रहनक्षत्रताराविचित्रोऽन्तरिक्षलोकः । ततः परः स्वर्लोकः पञ्चविधो माहेन्द्रस्तृतीयो लोकः । चतुर्थः प्राजापत्यो महोलोकः । त्रिविधो ब्राह्मः । तद्यथा —जनलोकस्तपोलोकः सत्यलोक इति ॥

"ब्राह्मस्त्रिभूमिको लोकः प्राजापत्यस्ततो महान् ।
माहेन्द्रश्च स्वरित्युक्तो दिवि तारा भुवि प्रजाः ॥"

इति संग्रहश्लोकः ॥

तत्रावीचेरुपर्युपरि निविष्टाः षण्महानरकभूमयो घनसलिलानलानिलाकाशतमःप्रतिष्ठा महाकालाम्बरीषरौरवमहारौरवकालसूत्रान्धतामिस्राः । यत्र स्वकर्मोपार्जितदुःखवेदनाः प्राणिनः कष्टमायुर्दीर्घमाक्षिप्य जायन्ते । ततो महातलरसातलातलसुतलवितलतलातलपातालाख्यानि सप्त पातालानि । भूमिरियमष्टमी सप्तद्वीपा वसुमती, यस्याः सुमेरुर्मध्ये पर्वतराजः काञ्चनः । तस्य राजतवैदूर्यस्फटिकहेममणिमयानि शृङ्गाणि । तत्र वैदूर्यप्रभाऽनुरागात् नीलोत्पलपत्रश्यामो नभसो दक्षिणो भागः । श्वेतः पूर्वः । स्वच्छः पश्चिमः । कुरण्टकाभ उत्तरः । दक्षिणपार्श्वे चास्य जम्बूः यतोऽयं जम्बूद्वीपः । तस्य सूर्यप्रचारात् रात्रिंदिवं लग्नमिव वर्तते । तस्य नीलश्वेतशृङ्गवन्त उदीचीनास्त्रयः पर्वता द्विसाहस्रायामाः । तदन्तरेषु त्रीणि वर्षाणि नव नव योजनसाहस्राणि रमणकं हिरण्मयमुत्तराः कुरव इति । निषधहेमकूटहिमशैला दक्षिणतो द्विसाहस्रायामाः ।

[ विवरणम् ]

सूक्ष्मे वा व्यवहिते वा विप्रकृष्टे वा अर्थे विन्यस्य स्थापयित्वा तमधिगच्छति ॥ २५ ॥

---

1. तमर्थम्

[ भाष्यम् ]

तदन्तरेषु त्रीणि वर्षाणि नव नव योजनसाहस्राणि हरिवर्षं किंपुरुषं भारतमिति । सुमेरोः प्राचीना भद्राश्वमाल्यवत्सीमानः । प्रतीचीनाः केतुमाला गन्धमादनसीमानः । मध्ये वर्षमिलावृतम् । तदेतद्योजनशत-साहस्रं सुमेरोर्दिशि दिशि तदर्धेन व्यूढम् ॥

स खल्वयं शतसाहस्रायामो जम्बूद्वीपः, ततो द्विगुणेन लवणो-दधिना वलयाकृतिना वेष्टितः । ततश्च द्विगुणा द्विगुणाः शाककुश-क्रौञ्चशाल्मलगोमेध(प्लक्ष)पुष्करद्वीपाः, समुद्राश्च सर्षपराशिकल्पाः सविचित्रशैलावतंसा इक्षुरससुरासर्पिर्दधिमण्डक्षीरस्वादूदकाः । सप्त समुद्रपरिवेष्टिता वलयाकृतयो लोकालोकपर्वतपरिवाराः पञ्चाशद्योजन-कोटिपरिसङ्ख्याताः । तदेतत्सर्वं सुप्रतिष्ठितसंस्थानमण्डमध्ये व्यूढम् । अण्डं च प्रधानस्याणुरवयवो यथाऽऽकाशे खद्योत इति ॥

तत्र पाताले जलधौ पर्वतेष्वेतेषु देवनिकाया असुरगन्धर्वकिंनर-किंपुरुषयक्षराक्षसभूतप्रेतपिशाचापस्मारकाप्सरोब्रह्मराक्षसकूष्माण्डविनायकाः प्रतिवसन्ति । सर्वेषु द्वीपेषु पुण्यात्मानो देवमनुष्याः ॥

सुमेरुः त्रिदशानामुद्यानभूमिः । तत्र मिश्रवनं नन्दनं चैत्ररथं सुमानसमित्युद्यानानि । सुधर्मा देवसभा । सुदर्शनं पुरम् । वैजयन्तः प्रासादः । ग्रहनक्षत्रतारकास्तु ध्रुवे निबद्धा वायुविक्षेपनियमेनो-पलक्षितप्रचाराः सुमेरोरुपर्युपरि संनिविष्टा दिवि विपरिवर्तन्ते ॥

माहेन्द्रनिवासिनः षड्देवनिकायाः—त्रिदशा अग्निष्वात्ता याम्यास्तुषिता अपरिनिर्मितवशवर्तिनः परिनिर्मितवशवर्तिनश्चेति । सर्वे संकल्पसिद्धा अणिमाद्यैश्वर्योपपन्नाः कल्पायुषो वृन्दारकाः कामभोगिन औपपादिकदेहा उत्तमानुकूलाभिरप्सरोभिः कृतपरिचाराः ॥

महति लोके प्राजापत्ये पञ्चविधो देवनिकायः—कुमुदा ऋभवः प्रतर्दना अञ्जनाभाः प्रचिताभा इति । एते महाभूतवशिनो ध्यानाहाराः कल्पसहस्रायुषः । प्रथमे ब्रह्मणो जनलोके चतुर्विधो देवनिकायः ब्रह्मपुरोहिताः ब्रह्मकायिकाः ब्रह्ममहाकायिकाः अमरा इति । ते भूतेन्द्रियवशिनो द्विगुणद्विगुणोत्तरायुषः ॥

[ भाष्यम् ]

द्वितीये तपसि लोके त्रिविधो देवनिकायः—आभास्वरा महाभास्वराः सत्यमहाभास्वरा इति । ते भूतेन्द्रियप्रकृतिवशिनो द्विगुणद्विगुणोत्तरायुषः सर्वे ध्यानाहारा ऊर्ध्वरेतस ऊर्ध्वमप्रतिहतज्ञाना अधरभूमिष्वनावृतज्ञानविषयाः । तृतीये ब्रह्मणः सत्यलोके चत्वारो देवनिकाया अकृतभवनन्यासाः स्वप्रतिष्ठा उपर्युपरि स्थिताः प्रधानवशिनो यावत्सर्गायुषः ॥

तत्राच्युताः सवितर्कध्यानसुखाः, शुद्धनिवासाः सविचारध्यानसुखाः, सत्याभा आनन्दमात्रध्यानसुखाः, संज्ञासंज्ञिनश्चास्मितामात्रध्यानसुखाः । तेऽपि त्रैलोक्यमध्ये प्रतितिष्ठन्ति । त एते सप्त लोकाः सर्व एव ब्रह्मलोकाः । विदेहप्रकृतिलयास्तु मोक्षपदे वर्तन्त इति, न लोकमध्ये न्यस्ता इति । एतत् योगिना साक्षात्करणीयं सूर्यद्वारे संयमं कृत्वा । ततोऽन्यत्रापि एवं तावदभ्यसेत् यावदिदं सर्वं दृष्टमिति ॥ २६ ॥

[ सूत्रम् ]

**चन्द्रे ताराव्यूहज्ञानम् ॥ २७ ॥**

[ भाष्यम् ]

चन्द्र संयमं कृत्वा ताराणां व्यूहं विजानीयात् ॥ २७ ॥

[ सूत्रम् ]

**ध्रुवे तद्गतिज्ञानम् ॥ २८ ॥**

[ विवरणम् ]

भुवनज्ञानं सूर्ये संयमात् । सूर्ये संयमं कृत्वा समस्तं भुवनप्रस्तारं प्रत्यक्षीकुर्वीत । भाष्यं तु गतार्थं, सर्वपुराणप्रसिद्धत्वात् ॥ २६ ॥

चन्द्रे ताराव्यूहज्ञानम् । सूर्ये संयमनाद्भुवनप्रस्तारं विदित्वा, तदनन्तरं चन्द्रे संयमं कृत्वा ताराणां व्यूहं विजानीयात् । सूर्यसंयमाद्भुवनप्रस्तारमात्रं प्रज्ञातम्—एवं प्रस्तीर्णाः लोका नद्यः समुद्रा गिरयश्चेति । न तु तारा इत्थं व्यूहिता अनेन सम्बद्धा इति । चन्द्रसंयमात्तु ताराव्यूहप्रकारावगतिरिति ॥ २७ ॥

ध्रुवे तद्गतिज्ञानम् । ततश्च समनन्तरं ध्रुवे संयमं कृत्वा ताराणां गतिं विजानीयात्—अनेन प्रकारेण सञ्चरमाणा अनेन विशिष्टा इति । अस्मिन् कालेऽनेन ग्रहेण अयं ग्रहो विरुध्यते, इत्थमस्तमयः । इत्थमुदयः, तद्द्वारेण प्राणभृतां शुभमशुभं चेत्यादि विजानीयात् ॥

[ भाष्यम् ]

ततो ध्रुवे संयमं कृत्वा ताराणां गतिं विजानीयात् । ऊर्ध्वविमानेषु कृतसंयमस्तानि विजानीयात् ॥ २८ ॥

[ सूत्रम् ]

**नाभिचक्रे कायव्यूहज्ञानम् ॥ २९ ॥**

[ भाष्यम् ]

नाभिचक्रे संयमं कृत्वा कायव्यूहं विजानीयात् । वातपित्तश्लेष्माणस्त्रयो दोषाः । धातवः सप्त त्वग्लोहित[1]मांसास्थिमेदोमज्जाशुक्राणि । पूर्वं पूर्वमेषां बाह्यमित्येष विन्यासः ॥ २९ ॥

[ सूत्रम् ]

**कण्ठकूपे क्षुत्पिपासानिवृत्तिः ॥ ३० ॥**

[ भाष्यम् ]

जिह्वाया अधस्तात्तन्तुः, तन्तोरधस्तात् कण्ठः । ततोऽधस्तात् कूपः । तत्र संयमात् क्षुत्पिपासे न[2] प्रतिबाधेते ॥ ३० ॥

[ सूत्रम् ]

**कूर्मनाड्यां स्थैर्यम् ॥ ३१ ॥**

[ विवरणम् ]

एवमन्येषु चोर्ध्वं विमानेषु संयमं कृत्वा तानि विमानानीत्थंप्रकाराण्येवंगतानीत्येवमादि सर्वं विजानीयात् ॥ २८ ॥

नाभिचक्रे कायव्यूहज्ञानम् । नाभिचक्रे संयमं कृत्वा कायव्यूहं विजानीयात् । वातपित्तश्लेष्माणस्त्रयो दोषाः एतावत्प्रमाणा एतत्प्रतिष्ठा इत्यादि ज्ञेयम् ॥

तथा धातवः सप्त बाह्याभ्यन्तरभावेनावस्थिताः । (सप्त:)त्वक् बाह्या सर्वेषाम् । ततोऽभ्यन्तरं लोहितं, ततो मांसं, ततोऽस्थि, ततो मेदः, ततो मज्जा, ततः शुक्रं सर्वाभ्यन्तरमित्येवं पूर्वं पूर्वमेषां बाह्यम् इत्येष विन्यासः । तथा नाडीनां च व्यूहं विजानीयात् ॥ २९ ॥

कण्ठकूपे क्षुत्पिपासानिवृत्तिः । जिह्वाया अधस्तात्तन्तुः उन्नामिकायां जिह्वायां दृश्यते । तन्तोरधस्तात् कण्ठः । ततोऽधस्तात् कूपः । तत्र संयमात् क्षुत्पिपासे न प्रतिबाधेते ॥ ३० ॥

---

1. -तस्नय्वस्थि-

2. बाधेते

[ भाष्यम् ]

[1]कूपस्याधस्तात् उरसि [2]कूर्मा नाम नाडी, तस्यां कृतसंयमः स्थिरपदं लभते । यथा सर्पो गोधा वेति ॥ ३१ ॥

[ सूत्रम् ]

**मूर्धज्योतिषि सिद्धदर्शनम् ॥ ३२ ॥**

[ भाष्यम् ]

शिरःकपालेऽन्तश्छिद्रं प्रभास्वरं ज्योतिः, तत्र संयमं कृत्वा सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनम् ॥ ३२ ॥

[ सूत्रम् ]

**प्रातिभाद्वा सर्वम् ॥ ३३ ॥**

[ भाष्यम् ]

प्रातिभं नाम तारकं, तद्विवेकजस्य ज्ञानस्य पूर्वरूपम् । यथोदये प्रभा भास्करस्य । [3]तस्माद्वा [4]सर्वं विजानन्ति योगिनः प्रातिभस्य ज्ञानस्यो[5]त्पादादिति ॥ ३३ ॥

[ सूत्रम् ]

**हृदये चित्तसंवित् ॥ ३४ ॥**

[ विवरणम् ]

कूर्मनाड्यां स्थैर्यम् । कूपस्याधस्तादुरसि कूर्मा नाम नाडी । तस्यां कृतसंयमः स्थिरपदं लभते चित्तस्थैर्यं लभते । यथा सर्पो गोधा वा धारणादुरसा अत्यन्तं स्थिरीभवति ॥ ३१ ॥

मूर्धज्योतिषि सिद्धदर्शनम् । शिरःकपालेऽन्तश्छिद्रं प्रभास्वरत्वात् ज्योतिः इत्युच्यते । तत्र संयमात् सिद्धानां द्यावापृथिव्योरन्तरालचारिणां दर्शनं भवति ॥ ३२ ॥

प्रातिभाद्वा सर्वम् । आत्मनि संयमं कुर्वतः, ईश्वरं वा अत्यर्थं प्रणिदधानस्य योगिनः प्रातिभं तारकं स्वयमुत्थितं मानसं ज्ञानम्, तत् वक्ष्यमाणलक्षणस्य विवेकजस्य ज्ञानस्य पूर्वरूपम् । यथा उदये प्रभा औषसी किंचिदुन्मीलन्ती लोहितायमाना भास्करस्य उज्जिगमिषतः पूर्वरूपम् । तस्माद्वा सर्वं विजानन्ति योगिनः प्रातिभस्य ज्ञानस्योत्पादादिति ॥ ३३ ॥

---

1. कूपादध
2. कूर्माकारा
3. तेन वा
4. मेव जानाति योगी
5. त्पत्तावि

[ भाष्यम् ]

यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म, तत्र विज्ञानं, तस्मिन् संयमाच्चित्तसंवित् ॥ ३४ ॥

[ सूत्रम् ]

**सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात्स्वार्थसंयमात्पुरुषज्ञानम् ॥ ३५ ॥**

[ भाष्यम् ]

बुद्धिसत्त्वं प्रख्याशीलं समानसत्त्वोपनिबन्धने रजस्तमसी वशीकृत्य सत्त्वपुरुषान्यताप्रत्ययेन परिणतम् । तस्माच्च सत्त्वात् परिणामिनोऽत्यन्तविधर्मा विशुद्धोऽन्यश्चि[1]न्मात्ररूपः पुरुषः ।

[ विवरणम् ]

हृदये चित्तसंवित् । यदिदमस्मिन् ब्रह्मपुरे शरीरे दहरम् अल्पं पुण्डरीकं पुण्डरीकाकारो मांसपिण्डोऽधोमुखः, वेश्मवदनेकनाडीसुषिरयोगात् वेश्म । तत्र विज्ञानं चित्तं, तस्मिन् उरस्सरोविलग्ननाले प्राणवेश्मनि पुण्डरीके संयमाच्चित्ते सर्वे संवित् भवति ॥ ३४ ॥

सत्त्वपुरुषयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः परार्थात् स्वार्थसंयमात् पुरुषज्ञानम् । सत्त्वं चित्तं, पुरुषो भोक्ता, तयोः अत्यन्तासङ्कीर्णयोः अत्यन्तविलक्षणयोरतीव पृथग्भूतयोः वृत्तिसारूप्यं प्रत्ययाविशेषः, स भोगः पुरुषस्य । परार्थात् सत्त्वात् पुरुषप्रत्ययेन सङ्कीर्णाभासात् विविच्य स्वार्थे चितिमात्रस्वरूपे संयमात् पुरुषज्ञानं भवति ॥

कीदृशं तत् परार्थं चित्तसत्त्वम्? यतो विविच्य स्वार्थे पुरुषे संयमः क्रियत इति । बुद्धिसत्त्वं प्रख्याशीलं समानं सत्त्वं वस्तुकार्यं पुरुषार्थकर्तव्यतया समवस्थानम् उपनिबन्धनं ययोस्ते समानसत्त्वोपनिबन्धने रजस्तमसी वशीकृत्य न्यग्भावमापाद्य सत्त्वपुरुषान्यताप्रत्ययेन योगिनः परिणतम् ॥

तस्माच्च सत्त्वात् परिणामिनः त्रिगुणादनित्यादशुद्धात् परार्थादचेतनात् अत्यन्तविधर्मा विशुद्धोऽन्यः अपरिणामी स्वार्थो नित्यः चिन्मात्ररूपः पुरुषः ॥

---

1. तिमा

[ भाष्यम् ]

तयोरत्यन्तासंकीर्णयोः प्रत्ययाविशेषो भोगः, पुरुषस्य दर्शितविषयत्वात् । स भोगप्रत्ययः सत्त्वस्य परार्थत्वाद्दृश्यः ॥

यस्तु तस्माद्विशिष्टश्चितिमात्ररूपोऽन्यः पौरुषेयः प्रत्ययः, तत्र संयमात्पुरुषविषया प्रज्ञा जायते । न च पुरुषप्रत्ययेन बुद्धिसत्त्वात्मना पुरुषो दृश्यते । पुरुष एव तं प्रत्ययं [1]स्वालम्बनं पश्यति । तथा ह्युक्तम्—"विज्ञातारमरे केन विजानीयात्" [बृ॰ २ । ४ । १४] इति ॥ ३५ ॥

[ विवरणम् ]

तयोरत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोगः पुरुषस्य दर्शितविषयत्वात् । स भोगप्रत्ययः । नापरिणामित्वे सति दर्शितविषयत्वादन्यो भोगः सम्भवति । सत्त्वस्य परार्थत्वात् अविशिष्टो भोगप्रत्ययो दृश्यः पुरुषेण ॥

यस्तु तस्मात् गौणप्रत्ययात् प्रत्ययिनश्च विशिष्टश्चितिमात्ररूपोऽन्यः पौरुषेयः प्रत्ययः, स्वार्थः पुरुष एव परिणामानुपपत्तेः प्रत्ययः । तत्र संयमात् पुरुषविषया प्रज्ञा जायते ॥

ननु च यदि पुरुषः प्रत्ययस्य विषयीक्रियते, तेन चेत् पुरुषो गृह्यते, परार्थः पुरुषः प्राप्नोति । नैष दोषः । न च पुरुषप्रत्ययेन पुरुषविषयेण प्रत्ययेन बुद्धिसत्त्वात्मना बुद्धिसत्त्वधर्मेण पुरुषो दृश्यते बुद्धेरचेतनत्वात् ॥

पुरुष एव तं प्रत्ययं स्वालम्बनं पुरुषाभासं पश्यति पुरुषाभासत्वमेव प्रत्ययस्य पुरुषालम्बनत्वम् । न प्रत्ययस्य पुरुषालम्बनत्वम् । यथा मुखसन्निधौ दर्पणो मुखाकारेण परिणमते, तथा चित्तं पुरुषाकारेण परिणतं पुरुषाभासं पुरुषेण गृह्यते ॥

तथा चोक्तम्—"विज्ञातारमरे केन विजानीयात्" इति । न कस्यचित् पुरुषः कर्मतां प्रतिपद्यत इत्यर्थः ॥

ननु चक्षुरादर्शतलप्रतिहतं प्रतिनिवृत्य यथा मुखस्य ग्राहकं, एवं पुरुषोऽपि चित्तसत्त्वप्रतिहतः प्रतिनिवृत्य स्वात्मानं गृह्णीयात्—न—परिणामानुपपत्तेः पुरुषस्य । न ह्यपरिणामिनश्चित्तं प्रति प्रवृत्तिः प्रतिनिवृत्तिर्वा साधिमानमुपाश्नुवीत ॥

न चापि चक्षुः प्रतिनिवृत्य मुखं ग्राहयति । मुखस्य दर्पणमण्डलाधिकरणत्वेन अनुभूयमानत्वात् । न हि स्वमुखं दर्पणाधिकरणस्थम् । किं च,

---

1. स्वात्मावल

[ सूत्रम् ]

**ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते ॥ ३६ ॥**

[ भाष्यम् ]

प्रातिभात्सूक्ष्मव्यवहितविप्रकृष्टातीतानागतज्ञानम् । श्रावणाद्दिव्यशब्दश्रवणम् । वेदनाद्दिव्यस्पर्शाधिगमः । आदर्शाद्दिव्यरूपसंवित् । आस्वादाद्दिव्यरससंवित् । वार्तातः संव्यवहारतत्त्वरूपं यथावत् अधिगच्छति (दिव्यगन्धविज्ञानमित्येतानि नित्यं जायन्ते) ॥ ३६ ॥

[ सूत्रम् ]

**ते समाधावुपसर्गा व्युत्थाने सिद्धयः ॥ ३७ ॥**

[ भाष्यम् ]

ते प्रातिभादयः समाहितचित्तस्योत्पद्यमाना उपसर्गाः, तद्दर्शनप्रत्यनीकत्वात् । व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः ॥ ३७ ॥

[ सूत्रम् ]

**बन्धकारणशैथिल्यात्प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः ॥ ३८ ॥**

[ विवरणम् ]

आदर्शानुविधानाच्च । यथा खड्गे दीर्घं मुखं दृश्यते । न स्वमुखं दीर्घम् । प्रतिहतेन चेदुपलभ्येत चक्षुषा निजमुखं, तत्र आदर्शानुविधानमयुक्तम् ॥ ३५ ॥

ततः प्रातिभश्रावणवेदनादर्शास्वादवार्ता जायन्ते । ततः स्वार्थे समाधानात्, प्रातिभात् आत्मसंयमजनितात् मानसात् ज्ञानात्, सूक्ष्मव्यवहितविप्रकृष्टातीतानागतज्ञानं सम्पद्यते । श्रावणात् दिव्यशब्दानां श्रवणम् । वेदनात् स्पर्शज्ञानात् सिद्धादीनां स्पर्शं जानाति । आदर्शात् चाक्षुषात् ज्ञानात्[1] दिव्यं रूपम् अवगच्छति । आस्वादात् रसनेन्द्रियज्ञानात् दिव्यरससंवेदनं भवति । वृत्तौ भवं वार्तं लोकसंव्यवहारज्ञानं, तस्मादेष संव्यवहारतत्त्वरूपं यथावदधिगच्छति ॥ ३६ ॥

ते समाधावुपसर्गा व्युत्थाने सिद्धयः । ते प्रातिभादयः पुरुषे समाहितचित्तस्य उ(स्य समु)त्पद्यमाना उपसर्गाः पुरुषदर्शनप्रत्यनीकत्वात् । व्युत्थितचित्तस्योत्पद्यमानाः सिद्धयः । यद्यपि पुरुषे संयमादुत्पद्यन्ते, तथापि न विरक्तस्य समाहितचित्तस्य जायन्ते ॥ ३७ ॥

---

1. अत्र आदर्शकोशे इत उपरि 'तद्द्रव्यान्यथात्वेन' इति लिखितमस्ति । तस्यानन्वयात्, 4. पुटेभ्यः पश्चात् लिखितं 'दिव्यं' इत्यादि वाक्यं योजितम् ॥

[ भाष्यम् ]

लोलीभूतस्य मनसोऽप्रतिष्ठस्य शरीरे कर्माशय[1]याद्बन्धः प्रतिष्ठेत्यर्थः। तस्य कर्मणो बन्धकारणस्य शैथिल्यं समाधिबलाद्भवति । प्रचारसंवेदनं च चित्तस्य समाधिजमेव। कर्मबन्धक्षयात्स्वचित्तप्रचारसंवेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति। निक्षिप्तं चित्तं चेन्द्रियाण्यनु पतन्ति। यथा मधुकरराजानं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनु निविशन्ते, तथेन्द्रियाणि परशरीरावेशे चित्तमनु विधीयन्त इति ॥ ३८ ॥

[ सूत्रम् ]

**उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च ॥ ३९ ॥**

[ भाष्यम् ]

समस्तेन्द्रियवृत्तिः प्राणादिलक्षणा जीवनं, तस्य क्रिया पञ्चतयी-

[ विवरणम् ]

बन्धकारणशैथिल्यात् प्रचारसंवेदनाच्च चित्तस्य परशरीरावेशः। लोलीभूतस्य घण्टाभिघाततुल्यस्य देदीप्यमानाङ्गारराशिद्युतिचञ्चलस्य मनसोऽप्रतिष्ठस्य शरीरे कर्माशयाद्बन्धः प्रतिष्ठेत्यर्थः । शरीरमात्रसंकोचावस्थानम् ॥

तस्य बन्धस्य कर्म कारणम्। कारणशैथिल्यं कर्माशयशिथिलत्वं समाधिबलाद्भवति । प्रचारसंवेदनं च चित्तस्य समाधिजमेव । कर्मबन्धक्षयात् स्वचित्तप्रचारसंवेदनाच्च 'अस्मिन्निमित्ते हृष्यति मुह्यति लुम्यति चानेन कारणेन' इत्येवमादिस्वचित्तसञ्चरणसतत्त्ववेदनाच्च योगी चित्तं स्वशरीरान्निष्कृष्य शरीरान्तरेषु निक्षिपति ॥

चित्तम् अस्य उत्पतत् इन्द्रियाणि अनूत्पतन्ति। तस्मादिन्द्रियवृत्तिलाभात् परशरीरेषु प्राणादिवृत्तय उत्पद्यन्ते । यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति, निविशमानमनु निविशन्ते, तथेन्द्रियाणि परशरीरावेशे चित्तमनु विधीयन्ते ॥ ३८ ॥

उदानजयात् जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च । समस्तेन्द्रियवृत्तिः जीवनं सर्वेषामेकादशानामिन्द्रियाणां वर्तनं जीवनम् । यथा पञ्जरगतशकुनिसञ्चलनेन पञ्जरचलनम्, एवम् अशेषकरणानामेकेन संमूर्छितेन व्यापारेण येन शरीरं ध्रियते तज्जीवनम् । तस्य जीवनस्य पुरुषार्थकर्तव्यतानियमात् पञ्चतयी क्रिया प्राणापानव्यानोदानसमानभेदेन प्रस्तीर्यते ॥

---

1. यवशाद्ब

[ भाष्यम् ]

प्राणो मुखनासिकागतिराहृदयवृत्ति । समं नयनात्समानश्चाऽऽनाभिवृत्तिः । अपनयनादपान आपादतलवृत्तिः । उन्नयनादुदान आशिरोवृत्तिः । व्यापी व्यान इति । एषां प्रधानः प्राणः । उदानजयाज्जलपङ्ककण्टकादिष्वसङ्ग उत्क्रान्तिश्च प्रायणकाले भवति । तां [1]वशीकृत्य प्रतिपद्यते ॥ ३९ ॥

[ सूत्रम् ]

**समानजयाज्ज्वलनम् ॥ ४० ॥**

[ भाष्यम् ]

जितसमानस्तेजस उपध्मानं कृत्वा ज्वलयति ॥ ४० ॥

[ सूत्रम ]

**श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् ॥ ४१ ॥**

[ भाष्यम् ]

सर्वश्रोत्राणामाकाशं प्रतिष्ठा [2]शब्दानां च ।

[ विवरणम् ]

तत्र प्राणो मुखनासिकागतिराहृदयवृत्तिः । समं नयनात् समानः आनाभिवृत्तिः आनाभिदेशं वर्तते । मूत्रपुरीषादीनाम् अपनयनादपानः, स च नाभिप्रभृति आपादतलं वर्तते । ऊर्ध्वं शरीरस्य नयनादुदानः, स च पादतलादारभ्य आमस्तकवृत्तिः । समस्तशरीरव्यापी व्यान इति ॥

एतेषां प्रधानः प्राणः । तज्जयाच्च सर्वेषामपानादीनां तु जयो भवति । तेषां तु जयोपायो विस्तरेण हैरण्यगर्भे व्याख्यातः । इह तु मनोजयानुजितत्वात् तेषां जयोपायो न पृथगभिहितः । प्राणायामजयात्तु जीयन्त एव । न पृथगेषां जयोपायप्रतिपादनमादत्यमिति फलमात्रमुदानजितेरुच्यते —

उदानजयात् जलपङ्ककण्टकादिषु, आदिना कृपाणधारादिषु असङ्गः । किं च, उत्क्रान्तिश्च प्रायणकाले भवति । तां प्रायणकाले भवन्तीमुत्क्रान्तिमुदानजयात् वशीकृत्य स्वतन्त्रतया प्रतिपद्यते ॥ ३९ ॥

समानजयात् ज्वलनम् । जितसमानः तेजस उपध्मानं कृत्वा समानवाय्वाश्रयत्वात् उदानतेजसोः तदुपध्मानकर्मकारकस्तावद्योगी जाठरं ज्वलयति॥४०॥

श्रोत्राकाशयोः संबन्धसंयमाद्दिव्यं श्रोत्रम् । कः पुनरसौ संबन्धो यत्र संयम इत्याह–सर्वश्रोत्राणामाकाशं प्रतिष्ठा । शब्दानां चाकाशगुणत्वादाकाशमेव प्रतिष्ठा । प्राप्तं शब्दं प्रति श्रोत्रस्य व्यवधानाभावः श्रोत्राकाशयोः सम्बन्धः ॥

---

1. वशित्वेन 2. सर्व-

[ भाष्यम् ]

[1]तथा चोक्तम्—

तुल्यदेशश्रवणानामे[2]कश्रुतित्वं सर्वेषां भवतीति । तच्चैतदाकाशस्य लिङ्गम् । अनावर[3]णात्मकं चोक्तम् । तथा[4] मूर्तस्यान्यत्राकाशादावरणदर्शनाद्विभुत्वमपि प्रख्यातमाकाशस्य । शब्दग्रहणानुमितं तु श्रोत्रम् । बधिराबधिरयोरेकः शब्दं गृह्णात्यपरो न गृह्णातीति । तस्माच्छ्रोत्रमेव शब्दविषयम् । श्रोत्राकाशयोः संबन्धे कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्तते ॥ ४१ ॥

[ सूत्रम ]

**कायाकाशयोः संबन्धसंयमाल्लघुतूलसमापत्तेश्चाऽऽकाशगमनम् ॥ ४२**

[ भाष्यम ]

यत्र कायस्तत्राऽऽकाशं, तस्यावकाशदानात्कायस्य तेन संबन्धः[5] । तत्र कृतसंयमो जित्वा तत्संबन्धं लघुषु तूलादिष्वा परमाणुभ्य समापत्तेः[6]

[ विवरणम् ]

तथा चोक्तम्—तुल्यदेशश्रवणानाम् । श्रूयतेऽनेनेति श्रवणम् । तुल्यदेशानि श्रवणानि येषां ते तुल्यदेशश्रवणाः । तेषाम् एकश्रुतित्वं सर्वेषां भवति । तदेकस्मिन्नवकाशदायिनि निरावरणात्मके वस्तुनि सति युज्यते । तच्चैतदाकाशस्य सत्त्वे लिङ्गम् ॥

तथा अनावरणात्मकं चोक्तम् । (कुतः) तथा मूर्तस्यान्यत्राकाशात् आकाशविलक्षणस्य घटादेः आवरणदर्शनात् । अतो यस्य मणिवज्रादिमध्येष्वप्यावरणं नास्ति, तदाकाशम् । अत एव विभुत्वमपि प्रख्यातमाकाशस्य ॥

श्रोत्रस्य लिङ्गमाह—शब्दग्रहणानुमितं तु श्रोत्रम् । यस्माद बधिराबधिरयोरेकः शब्दं गृह्णाति अपरो न गृह्णाति । यन्निमित्तमबधिरस्य शब्दग्रहणमितरस्य चाग्रहणं तच्छ्रोत्रम् । तस्माच्छ्रोत्रमेव शब्दविषयम् । बधिरेणाश्रवणात् । श्रोत्राकाशयोः संबन्धे कृतसंयमस्य योगिनः दिव्यं श्रोत्रं प्रवर्तते ॥ ४१ ॥

कायाकाशयोः सम्बन्धसंयमात् लघुतूलसमापत्तेश्च आकाशगमनम् । यत्र कायः तत्र आकाशम् । तस्य अवकाशदानात् कायस्य अविनाभावलक्षणः सम्बन्धः तेन आकाशेन । तत्र कायाकाशयोः इतरेतराविनाभावप्राप्ति-

---

1. यथोक्तम्-
2. कदेशश्रु-
3. -णं चोक्तम्
4. -ऽमूर्तस्यानाव-
5. प्राप्तिस्तत्र-
6. त्तिं लब्ध्वा-

[ भाष्यम् ]

जितसंबन्धो लघुर्भवति । लघुत्वाच्च जले पादाभ्यां विहरति । ततस्तु ऊर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरति । ततो यथेष्टमाकाशगतिरस्य भवतीति ॥ ४२ ॥

[ सूत्रम् ]

**बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः॥ ४३ ॥**

[ भाष्यम् ]

शरीराद्बहिर्मनसो[1] या वृत्ति, सा विदेहा नाम धारणा । सा यदि शरीरप्रतिष्ठस्यैव मनसो बहिर्वृत्तिमात्रेण भवति, सा कल्पितेत्युच्यते । या तु शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः सा खल्वकल्पिता । तत्र कल्पितया साधयन्त्यकल्पितां महाविदेहामिति ।

[ विवरणम् ]

लक्षणसम्बन्धे कृतसंयमो योगी जित्वा तत्सम्बन्धं ततो लघुषु तूलादिषु आ परमाणुभ्यः समापत्तेः जितसम्बन्धः तूलादिवत् लाघवं प्रतिपद्यते ॥

जितकायाकाशसम्बन्धः समापन्नः तूलादितुल्यलाघवशीलनार्थं जले पादाभ्यां विहरति । ततः ऊर्ध्वम् ऊर्णनाभितन्तुमात्रे विहरति । तत्र सञ्जातकोकिलतन्तुसमानलाघवः पुनः रश्मिषु विहरति । ततो मातरिश्वनि । ततो यथेष्टम् आकाशे गतिरस्य भवति ॥ ४२ ॥

बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः । शरीरात्[2] बहिः देशान्तरे विषयविशेषे स्वयमेव समाधिबलात् उपजायते या मनसो वृत्तिः सा महाविदेहा नाम धारणा । सा यदि शरीरप्रतिष्ठस्यैव मनसो वृत्तिमात्रेण बहिः विषये भवति, तदानीं कल्पिता उच्यते । शरीरस्थमनस्सङ्कल्पपूर्वकत्वात् । या तु समाधिबलनिमित्तात् शरीरे बन्धकारणशैथिल्यात् शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः, सा खलु अकल्पिता इत्युच्यते । यथैव कल्पितायां शरीरावधिक एव बहिर्वृत्तिलाभः, एवं नाकल्पितायां शरीराधिष्ठानावधिसमीक्षा ॥

सा चोभय्यपि विदेहैव बहिरुपकल्पितत्वात् । तत्र या इयमकल्पिता महाविदेहेति समाख्यायते । तत्र कल्पितया साधयन्त्यकल्पितां महाविदेहाम् । कल्पनासंशीलनसाध्यत्वादकल्पितायाः कल्पितया च संसाधयन्ति ।

---

1. वृत्तिलाभो
2. अत्र आदर्शकोशे इत उपरि "विवेकजं" इत्यादिः ग्रन्थः लिखितः । तस्यानन्वयात्, 18. पुटेभ्यः पश्चात् लिखितः "बहिः" इत्यादिः ग्रन्थः योजितः ॥

[ भाष्यम् ]

यया परशरीराण्याविशन्ति योगिनः । ततश्च धारणातः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं क्लेशकर्मविपाकत्रयं रजस्तमोमूलं तस्य च क्षयो भवति ॥ ४३ ॥

[ सूत्रम् ]

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमाद्भूतजयः ॥ ४४ ॥

[ भाष्यम् ]

तत्र पार्थिवाः[1] शब्दादयो विशेषाः सहाऽऽकारादिभिर्धर्मैः स्थूल-शब्देन परिभाषिताः । एतद्भूतानां प्रथमं रूपम् ।

[ विवरणम् ]

यया महाविदेहया परशरीराण्याविशन्ति योगिनः । ततश्च धारणातः महाविदेहातः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं क्लेशकर्मविपाकत्रयं रजस्तमोमूलं तस्य च क्षयो भवति ॥ ४३ ॥

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमात् भूतजयः । स्थूलं च स्वरूपं च सूक्ष्मं चान्वयश्चार्थवत्त्वं चेत्येवमेकैकं भूतं पञ्चात्मकम् । तत्र पार्थिवाः शब्दादयः शब्दस्पर्शरूपरसगन्धाः विशेषाः पञ्चलक्षणतन्मात्रारब्धत्वात् पृथिव्याः । सह आकारादिभिः । पृथिव्यास्तावदाकारादयः—

आकारो गौरवं रौक्ष्यं वरणं स्थैर्यमेव च ।
स्थितिर्भेदः क्षमा कार्ष्ण्यं काठिन्यं सर्वभोग्यता ॥ इति ॥

तथा–स्नेहप्रभासौक्ष्म्यमार्दवगौरवरक्षापवित्रत्वसन्धानादय औदका गुणाः ॥

तथा–तैजसाः ऊर्ध्वभाक्त्वपावनतादग्धृत्वपाचकत्वलाघवभास्वरत्वादयः ॥

तथा–वायवीयाः तिर्यग्यानपवित्रत्वाक्षेपबलनोदनत्वादयः ॥

तथा–नाभसाः सर्वगत्यव्यूहविष्टम्भाः ॥

तदेतैः आकारादिभिः सह शब्दादयो विशेषाः स्थूलशब्देन संव्यवहारार्थं शास्त्रे परिभाषिताः । एवमाप्याश्चत्वारो रसादयो विशेषाः सौक्ष्म्यादिभिः सह, एवं तैजसा रूपादयस्त्रयो विशेषा ऊर्ध्वभाक्त्वादिभिः सह स्थूला उच्यन्ते । तथा वायवीयाः शब्दस्पर्शतिर्यक्पातादयः स्थूला विशेषाः । एवमाकाशस्य सर्वगतत्वादयः स्थूला विशेषाः । तत् एतत् भूतानां प्रथमं स्थूलं रूपं उक्तम् ॥

---

1. वाचाः

[ भाष्यम् ]

द्वितीयं रूपं [1]सामान्यं मूर्तिर्भूमिः स्नेहो जलं वह्निरुष्णता वायुः [2]प्रणामित्वं सर्वतोगतिराकाश इत्येतत्स्वरूपशब्देनोच्यते ॥

[3]तस्य सामान्यस्य शब्दादयो विशेषाः । तथा चोक्तम्—एकजातिसमन्वितानामेषां धर्ममात्रव्यावृत्तिरिति ॥

सामान्यविशेषसमुदायोऽत्र द्रव्यम् । द्विष्ठो हि समूहः प्रत्यस्तमितभेदावयवः[4] शरीरं वृक्षो यूथं वनमिति ॥

शब्देनोपात्तभेदावयवानुगतः समूह उभये देवमनुष्याः । समूहस्य देवा एको भागो मनुष्या द्वितीयो भागस्ताभ्यामेवाभिधीयते समूहः ॥

[ विवरणम् ]

द्वितीयम् अधुना स्वरूपम् उच्यते । तच्च सामान्यं पर्थिवेषु भिन्नेष्वभिन्नमनुगतं मूर्तिरेव भूमिः इति । तथा रसादिष्वाप्येष्वनुगतं सामान्यं स्नेह एव जलम् इति । तथैवाग्नेयेषु रूपादिष्वनुगतं सामान्यं वह्निरुष्णत्वमेव । तथा स्पर्शतिर्यग्गतादिष्वनुगतं सामान्यं प्रणामित्व[5]मेव वायुः । तथा शब्दादिष्वनुगतम् सामान्यं सर्वतोगतिरेव आकाशः, इत्येतत् स्वरूपशब्देनोक्तं द्वितीयं रूपम् ॥

तस्य सामान्यस्य रूपस्य शब्दादयो विशेषाः । तथा चोक्तम्—एकजातिसमन्वितानां सत्त्वादिगुणसमनुगतानाम् एषां भूतानां पृथिव्यादीन सामान्यानां शब्दादिधर्ममात्रं व्यावर्तते ॥

सामान्यविशेषसमुदायो द्रव्यम् । कस्मात्? द्विष्ठो हि समूहः द्वाभ्यां प्रकाराभ्यां स्थितो द्विष्ठः प्रत्यस्तमितभेदावयवः व्यावृत्तप्रत्ययशून्य इत्यर्थः । यथा शरीरं वृक्षो यूथं वनमिति ॥

उपात्तभेदावयवानुगतः आगृहीतभेदावयवानुगतः समूहः उभयशब्देनोपादीयते । उभये देवमनुष्या इति । तद्यथा—समूहस्य देवा एको भागः, मनुष्या एको भागः । ताभ्यामेव भागाभ्यामागृहीतयथास्वभेदानुगताभ्याम् अभिधीयते समूहः उभये इति ॥

---

1. स्वसा-
2. प्रणामी
3. अस्य
4. -वानुगतः
5. अत्र आदर्शकोशे इत उपरि "गुणाः शुक्लत्वादयः" इत्यादिग्रन्थः लिखितः । तस्यानन्वयात् 15. पुटेभ्यः प्राक् लिखितः "मेव वायुः" इत्यादिः ग्रन्थः योजितः ॥

[ भाष्यम् ]

[1] भेदाभेदो विवक्षितः । आम्राणां वनं ब्राह्मणानां संघ आम्रवणं ब्राह्मणसंघ इति ॥

स पुनर्द्विविधो युतसिद्धावयवोऽयुतसिद्धावयवश्च । युतसिद्धावयवः समूहो वनं संघ इति । अयुतसिद्धावयवः संघातः शरीरं वृक्षः परमाणुरिति । अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः । एतत्स्वरूपमित्युक्तम् ॥

अथ किमेषां सूक्ष्मरूपम्? तन्मात्रं भूतकारणं, तस्यैकोऽवयवः परमाणुः सामान्यविशेषात्माऽयुतसिद्धावयवभेदानुगतः समुदाय इत्येवं सर्वतन्मात्राण्येतत्तृतीयम् ।

[ विवरणम् ]

तयोः भेदाभेदो विवक्षितः आम्राणां वनम् इति । आम्राणामिति भेदेन विवक्षा । वनमित्यभेदेन । ताभ्यां द्वाभ्यां भेदाभेदाभ्याम् आम्राणां वनमिति षष्ठी प्रथमा । तद्द्वयोर्विवक्षित एकः समूह इति ॥

स पुनर्द्विविधः समूहः---युतसिद्धावयवोऽयुतसिद्धावयवश्च । युतसिद्धावयवः पृथक्सिद्धावयवः समूहो वनं सङ्घ इति । अयुतसिद्धावयवः अपृथक्सिद्धावयवः सङ्घातः शरीरं वृक्षः परमाणुरिति ॥

परमाणूनामपि सावयवत्वं सत्त्वादिकार्यत्वात् मूर्तत्वाच्च घटादिवदेव । अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः । एतत्स्वरूपमित्युक्तं सामान्यविशेषात्मकम् ॥

अथ किमेषां सूक्ष्मं रूपम् इति । तन्मात्रं भूतकारणम् । अनेकपरमाणुप्रारब्धत्वात् तस्य तन्मात्रस्य एकोऽवयवः परमाणुः । सोऽपि सामान्यविशेषात्मा अयुतसिद्धावयवभेदानुगतः समुदाय इति । एवं सर्वतन्मात्राणि । ततश्च तन्मात्राणि विशेषविनिर्मुक्तानि तदवयवाश्च परमाणव इति एतत् भूतानां तृतीयं सूक्ष्माख्यं रूपं संयमस्य विषय इति । तन्मात्रारब्धत्वाच्च सावयवमाकाशमनित्यं च । न च शब्दव्यतिरेकेण आकाशं नाम द्रव्यम् उपलब्धुं शक्यम् । धर्मधर्मिणोरभेदात् ॥

---

1. स च भेदाभेद-

[ भाष्यम् ]

अथ भूतानां चतुर्थं रूपं—ख्यातिक्रियास्थितिशीला गुणाः कार्यं स्वरूपानुपातिनोऽन्वयशब्देनोक्ताः ।

[ विवरणम् ]

ननु च केशादीनां कृष्णिमाऽप्यपैति, शुक्लिमा समुपजायते । तथा च अपायोपजनधर्माणः कृष्णिमादयः ते गुणाः । यत्तु न कृष्णिमानमनु विनश्यति, शुक्लिमानमन्वेति, तत् द्रव्यम् । एवम् आकाशादीनामपि गुणव्यतिरेकेण सद्भावः, शब्दप्रत्ययादिभेदात् इति ॥

न—दृष्टान्ताभावात् । ते एव कृष्णाः शुक्लाश्च केशाः कृष्णशुक्लत्वादि-धर्मैः परिणमन्ते । सर्वं हि सर्वात्मकमित्युक्तम् । न खलु क्वचिदपि कूटस्थे आश्रये [2]गुणाः शुक्लत्वादयः अपायोपजनवन्त उपलभ्यन्ते । न च कृष्णत्वादि-व्यपनयनेन द्रव्यस्वरूपम् । यदपि—दर्शनस्पर्शनाभ्यां यदुपलभ्यते तत् द्रव्यम् इति, तदप्ययुतसिद्धरूपस्पर्शसमुदायत्वादुभाभ्यां दर्शनस्पर्शनाभ्यां गृह्यत इत्यदोषः ॥

ननु च न रूपं स्पर्शनेन गृह्यते, नापि दर्शनेन स्पर्शः, यदुभाभ्यां गृह्यते 'यत् पश्यामि तदेव स्पृशामी'ति तद्द्रव्यम् । यत्तु चक्षुषैव गृह्यते स्पर्शनेनैव च गृह्यते स गुण इति ॥

न—माषतिलयवादिभिन्नजातिविमिश्रराशावनैकान्तिकत्वात् । गृह्यते च दर्शनस्पर्शनाभ्यां राशिः । किं च–दर्शनस्पर्शने गुणस्यैव ग्राहके, बाह्येन्द्रिय-त्वात्, श्रोत्रवत् । न हि जातिरपि गुणव्यतिरिक्ता विद्यते भेदेनाग्रहणात् ॥

किं च, घटादादावपि परस्पराध्यासेन दर्शनस्पर्शनाभ्यां रूपस्पर्शयोरेव ग्रहणम् । यथेदं रूपं दुर्गन्धि सुरभिगन्धि चेति । तस्मादाकाशमपि तन्मात्रा-रब्धं शब्दव्यतिरेकेणाशक्यं प्रतिपत्तुमिति सावयवमनित्यं च ॥

अथ भूतानां चतुर्थं रूपम् । ख्यातिक्रियास्थितिशीला गुणाः कार्य-स्वरूपानुपातिनः कार्यधर्मानुयायिनः अन्वयशब्देनोक्ताः । अनुगमात् । तदेतद्भूतानां चतुर्थं रूपं संयमस्य गुणान्वयाख्यो विषयः ॥

---

1. स्वभावानु-

2. अत्र आदर्शकोशे इत उपरि "मनाशयं" इत्यादिवाक्यं लिखितम् । तस्यानन्वयात्, 14. पुटेभ्यः पश्चात् लिखितं "गुणाः" इत्यादि वाक्यं योजितम् ॥

[ भाष्यम् ]

अथैषां पञ्चमं रूपमर्थवत्त्वं, भोगापवर्गार्थता, गुणेष्वन्वयिनी, गुणास्तन्मात्रभूतभौतिकेष्विति सर्वमर्थवत् । तेष्विदानीं भूतेषु पञ्चसु पञ्चरूपेषु संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति । तत्र पञ्च भूतस्वरूपाणि जित्वा भूतजयी भवति । तज्जयाद्वत्सानुसारिण्य इव गावोऽस्य संकल्पानुविधायिन्यो भूतप्रकृतयो भवन्ति ॥ ४४ ॥

[ सूत्रम् ]

**ततोऽणिमादिप्रादुर्भावः कायसंपत्तद्धर्मानभिघातश्च ॥ ४५ ॥**

[ भाष्यम् ]

तत्राणिमा–भवत्यणुः । लघिमा–लघुर्भवति । महिमा–महान्भवति ।

[ विवरणम् ]

अथैषां पञ्चमं रूपमर्थवत्त्वम् । अस्य व्याख्यानं भोगापवर्गार्थता । सा च गुणेष्वन्वयिनी । तत्र या गुणेष्वनुवृत्ता भोगापवर्गार्थता तदिदं भूतानां पञ्चमं रूपं संयमस्यार्थवत्त्वाख्यो विषयः ॥

गुणास्तन्मात्रेषु भूतेषु भूतविकारेषु चान्वयिनः । एवं तन्मात्रं सूक्ष्मरूपं भूतभूतविकारेष्वनुगतम् । भूतस्वरूपं च स्थूलेषु भूतविकारेष्वनुगतमिति सर्वमर्थवत् । गुणानां भोगापवर्गार्थवत्त्वात् तेषां च सर्वान्वयित्वात् तदर्थवत्त्वेन सर्वं भूतविकारादिकम् अर्थवत् ॥

तेष्विदानीं भूतेषु पञ्चसु पञ्चरूपेषु स्थूलादिपञ्चरूपेषु यथाक्रमं संयमात् पूर्वं स्थूलेन संयमं कृत्वा तज्जयसाक्षात्करणानन्तरं स्वरूपसंयमं कुर्वीत । पुनः सूक्ष्मे, पुनश्चान्वये, पुनश्चार्थवत्त्वे इत्येवं यथाक्रमं संयमात्तस्य तस्य स्थूलादिकस्य दर्शनं जयश्च यथावत् प्रादुर्भवति । तत्र भूतस्वरूपाणि जित्वा योगी भूतजयी भवति । तज्जयात् वत्सानुसारिण्य इव गावः (यथा प्रकृतिभूता गावः) अस्य संकल्पानुविधायिन्यो भूतप्रकृतयो भवन्ति ॥ ४४ ॥

(स्व)संयमफलमिदानीमाह—ततोऽणिमादिप्रादुर्भावः कायसम्पत् तद्धर्मानभिघातश्च । तत्राणिमा को भवति इत्याह—अणुः इति । सूक्ष्मादपि सूक्ष्मतरो भवतीच्छातः । तेनाणिम्ना सर्वमनुप्रविशति वज्रमपि । तथा सर्वस्यादृश्यो भवति ॥

लघिमा—लघुः लघुभ्यः तूलादिभ्योऽपि लघुतरः भवति । तेन निरालम्बनः सर्वतो गन्तुं पर्याप्नोति । महिमा—महान् भवति । आकाशमपि

[ भाष्यम् ]

प्राप्तिः—अङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम् । प्राकाम्यम्—इच्छानभिघातः । भूमावुन्मज्जति निमज्जति यथोदके । वशित्वम्—भूतभौति[1]कवशी भवत्यवश्यश्चान्येषाम् । ईशित्वम्—तेषां प्रभवाप्ययव्यूहानामीष्टे । यत्रकामावसायित्वम्—सत्यसंकल्पता, यथा संकल्पस्तथा भूतप्रकृतीनामवस्थानम् । न च शक्तोऽपि पदार्थविपर्यासं करोति । कस्मात्? अन्यस्य यत्रकामावसायिनः पूर्वसिद्धस्य तथा[2] तेषु संकल्पादिति । एतान्यष्टावैश्वर्याणि ॥

कायसंपद्वक्ष्यमाणा । तद्धर्मानभिघातश्च—पृथ्वी मूर्त्या न निरुणद्धि योगिनः शरीरादिक्रियां, शिलामप्यनुविशतीति । नाऽऽपः स्निग्धाः क्लेदयन्ति । नाग्निरुष्णो दहति । न वायुः प्रणामी

[ विवरणम् ]

व्याप्नोति । प्राप्तिः—इहस्थ एव अङ्गुल्यग्रेणापि स्पृशति चन्द्रमसम् । प्राकाम्यं—प्रचुरकामो यथेष्टकामो भवति इच्छानभिघातः । भूमावुन्मज्जति निमज्जति च यथाकामत्वात् यथोदके ॥

वशित्वम्—सर्वलोकवशित्वम् । अस्य व्याख्यानं भूतभौतिकवशी भवति अवश्यश्चान्येषाम् । ईशित्वम्—तेषां भूतानां प्रभवव्यूहाप्ययानाम् उत्पत्तिस्थितिप्रलयानाम् ईष्टे । यत्रकामावसायित्वम्-यस्मिन् कामस्तत्रैव तदवसानं तदन्तं गच्छति । सत्यसंकल्पाद्धेतोः यथा संकल्पः तथा भूतप्रकृतीनामवस्थानं भवति ॥

शक्तोऽपि स योगी न पदार्थविपर्यासं करोति । नाग्निं शीतीकरोति । कस्मात्? अन्यस्य यत्रकामावसायिनः पूर्वसिद्धस्य परमेश्वरस्य तथा तेषु पदार्थेषु विपर्यासेन संकल्पात् । न हि पदार्थविपर्यासं चिकीर्षमाणस्य पूर्वसिद्धं प्रति विना द्वेषेण तद्विपर्यासो भवति । तदशुद्धयभावादेव न पदार्थविपर्यासं करोति । कल्याणतराचरणो हि स इति । एतान्यष्टौ अणिमाद्यैश्वर्याणि भूतजयाद्भवन्ति ॥

कायसम्पद्वक्ष्यमाणा । तद्धर्मानभिघातः तेषां भूतानां धर्मैः न योगिनोऽभिघातो भवति । पृथिवी स्वेन धर्मेण मूर्त्या न विरुणद्धि योगिनः शरीरादिक्रियाम् । कथम्? शिलामप्यनुप्रविशति । नापः स्निग्धा योगिनं क्लेदयन्ति वर्षसहस्रमप्युदके तिष्ठन्तम् । नाग्निरुष्णो दहति । न वायुः प्रणामी

1. -केषु व-    2. भूतेषु

[ भाष्यम् ]

वहति । अनावरणात्मकेऽप्याकाशे भवत्यावृतः[1] सिद्धानामप्यदृश्यो भवति ॥ ४५ ॥

[ सूत्रम् ]

**रूपलावण्यबलवज्रसंहननत्वानि कायसंपत् ॥ ४६ ॥**

[ भाष्यम् ]

दर्शनीयः कान्तिमानतिशयबलो वज्रसंहननश्चेति ॥ ४६ ॥

[ सूत्रम् ]

**ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥**

[ भाष्यम् ]

सामान्यविशेषात्मा शब्दा[2]दिर्विषयः । तेष्विन्द्रियाणां वृत्तिर्ग्रहणम् । न च तत्सामान्यमात्रे ग्रहणाकारः । कथमनालोचितः [3]स्वविषयविशेष इन्द्रियेण मनसाऽनुव्यवसीयेतेति ।

[ विवरणम् ]

वहति । अनावरणात्मकेऽपि प्रकटरूपेऽपि भवत्यावृतः प्रकटो न भवति । सिद्धानामप्यदृश्यो भवति ॥ ४५ ॥

रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् । रूपवान् दर्शनीयः । लावण्यवान् कान्तिमानतिशयबलो वज्रसंहननश्च भवति ॥ ४६ ॥

ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः । सर्वमेतद्भूतसूत्रेण तुल्यव्याख्यानम् । अस्मितामात्रं तु विशेषो भूतानामिव तन्मात्राणि । सामान्यविशेषात्मा शब्दादिर्विषयः । तेष्विन्द्रियाणां या वृत्तिः विषयविशेषावलोकनात्मिका तत् ग्रहणम् । न च तत्सामान्यमात्रे शब्दादिसामान्याभासनमात्रे मनसि ग्रहणाकारः उपपद्यते । कथम्? अनालोचितः स्वविषयविशेष इन्द्रियेण अनिगृहीतो निजो विषयविशेषो मनसा कथं नु नाम अनुव्यवसीयेत । न कथंचिदनुव्यवसीयेत तैमिरिकातैमिरिकयोरनुव्यवसायानुव्यवसायाभ्याम् । तस्मान्नेन्द्रियेणानालोचिते विषये मनसा अनुव्यवसायः । तत्रास्यां विशेषात्मिकायां वृत्तौ प्रथमं संयमः कर्तव्यः ॥

---

1. -तकायः
2. -दिर्ग्राह्यः ।
3. स वि-

[ भाष्यम् ]

स्वरूपं पुनः प्रकाशात्मनोः[1] सामान्यविशेषयोरयुतसिद्धावयवभेदानुगतं[2] द्रव्यमिन्द्रियम्। तेषां तृतीयं रूपमस्मितालक्षणोऽहंकारः तस्य सामान्यस्येन्द्रियाणि विशेषाः। चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणाः, येषामिन्द्रियाणि साहंकाराणि परिणामः। पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वमिति। पञ्चस्वेतेष्विन्द्रियरूपेषु यथाक्रमं संयमः, तत्र तत्र जयं कृत्वा पञ्चरूपजयादिन्द्रियजयः प्रादुर्भवति योगिनः ॥ ४७ ॥

[ विवरणम् ]

अथ स्वरूपं पुनः इन्द्रियाणां द्वितीयं रूपम्। प्रकाशात्मनोः सामान्यविशेषयोः विषयविशेषालोचनमिन्द्रियाणां विशेषः। यथा प्रदीपस्य घटादिविशेषाकारालोको विशेषः। प्रकाशमात्रं सामान्यम्। अतः सामान्यविशेषात्मकम् अयुतसिद्धावयवभेदानुगतं द्रव्यमिन्द्रियं प्रदीपवत्। यथा सामान्यमूर्तिधर्मः स्थूलादिष्वनुप्रवर्तते, तथेन्द्रियं प्रकाशात्मकं द्रव्यविशेषात्मिकायां ग्रहणवृत्तावनुप्रवर्तते। तदेतस्मिन् द्वितीये इन्द्रियाणां स्वरूपे संयमः क्रियेत ॥

तेषां इन्द्रियाणां तृतीयं रूपमस्मितालक्षणोऽहङ्कारः। तस्य अहङ्कारस्य सामान्यस्येन्द्रियाणि अयुतसिद्धावयवभेदानुगतानि ग्रहणरूपान्वयीनि विशेषाः। तत्र अस्मितायां संयमः करणीयः ॥

चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणाः। येषामिन्द्रियाणि साहङ्काराणि परिणामः। तत्र गुणानुगमे संयमः कर्तव्यः ॥

पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वम्। अतः सर्वेषामर्थवत्वमनुगमश्च पूर्ववत् ॥

एवं एषु पञ्चस्विन्द्रियरूपेषु यथाक्रमं क्रमानतिक्रमेण संयमः। तत्र प्रत्येकं पञ्चसु जयं कृत्वा पञ्चस्वरूपजयं लभेत। तस्मात् पञ्चस्वरूपजयादिन्द्रिय(ादि)जयो वक्ष्यमाणफलाय प्रादुर्भवति योगिनः। यत्तु [3]'ततः परमा वश्यतेन्द्रियाणाम्' इति, तद्विषयग्रहणवृत्तेर्वशित्वमात्रं विषयाप्रतिपत्तिरूपम् ॥ ४७ ॥

---

1. -नो बुद्धिसत्त्वस्य
2. -तः समूहो द्र
3. यो. सू. 2-55

[ सूत्रम् ]

ततो [1]मनोजवत्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥

[ भाष्यम् ]

कायस्यानुत्तमो गतिलाभो मनोजवत्वम् । विदेहानामिन्द्रियाणामभिप्रेतदेशकालविषयापेक्षो वृत्तिलाभो विकरणभावः । सर्वप्रकृतिविकारवशित्वं प्रधानजयः, इत्येतास्तिस्रः सिद्धयो मधुप्रतीका उच्यन्ते । एताश्च करणपञ्च[2]स्वरूपजयादधिगम्यन्ते ॥ ४८ ॥

[ सूत्रम् ]

सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च ॥ ४९ ॥

[ भाष्यम् ]

निर्धूतरजस्तमोमलस्य बुद्धिसत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्तमानस्य सत्त्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम् ।

[ विवरणम् ]

ततो मनोजवत्वं विकरणभावः प्रधानजयश्च । तत इन्द्रियजयात् कायस्यानुत्तमः न विद्यतेऽस्मादुत्तम इत्यनुत्तमः गतिलाभो मनोजवत्वम् । विदेहानां शरीरनिरपेक्षाणां इन्द्रियाणां अभिप्रेतदेशापेक्षोऽभिप्रेतकालापेक्षोऽभिप्रेतशब्दादिविषयापेक्षश्च वृत्तिलाभो विकरणभावः । सर्वप्रकृतिविकारवशित्वं अष्टानां प्रकृतीनां तद्विकाराणां च वशित्वं प्रधानजय इत्येतास्तिस्रः सिद्धयो मधुप्रतीकाः इति उच्यन्ते । ताश्च पञ्चस्वरूपजयादधिगम्यन्ते ॥ ४८ ॥

सत्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च । सर्वप्रकारेण सर्वसाधनेन निर्धूतरजस्तमोमलस्य सत्वस्य परे वैशारद्ये स्वच्छे स्थितिप्रवाहे परे वर्तमानस्य परस्यां वशीकारसंज्ञायां ज्ञानप्रसादमात्रे निरतिशये वर्तमानस्य सत्वपुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम् । सर्वस्य वस्तुजातस्येष्टे ॥

---

1. -जवित्वं  2. -रूप

[ भाष्यम् ]

सर्वा[1]त्मना [2]गुणाध्यवसायात्मकाः स्वामिनं क्षेत्रज्ञं प्रत्यशेषदृश्या-त्मत्वेनोपस्थिता इत्यर्थः । सर्वज्ञातृत्वं सर्वात्मकानां गुणानां शान्तोदितान्यपदेश्यधर्मत्वेन व्यवस्थितानामक्रमोपारूढं विवेकजं ज्ञानमित्यर्थः । इत्येषा विशोका नाम सिद्धिर्यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरति ॥ ४९ ॥

[ सूत्रम् ]

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् ॥ ५० ॥

[ भाष्यम् ]

यदाऽस्यैवं भवति क्लेशकर्मक्षये सत्त्वस्यायं [3]विवेकी प्रत्ययो धर्मः सत्त्वं च हेयपक्षे न्यस्तं पुरुषश्चापरिणामो शुद्धोऽन्यः सत्त्वादिति । एवमस्य ततो विरज्यमानस्य यानि क्लेशबीजानि दग्धशालिबीजकल्पानि प्रसवासमर्थानि तानि सह मनसा प्रत्यस्तं गच्छन्ति । तेषु प्रलीनेषु पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते ।

[ विवरणम् ]

सर्वात्मना सकलप्रकृतिविकारात्मना गुणाध्यवसायात्मकाः बुद्ध्यादि-कारणभावपरिणताध्यवसायात्मकाः शान्तोदिताव्यपदेश्यधर्मानुप्रसर्पिणः स्वामिनं क्षेत्रज्ञं दृशिमात्रं अशेषगुणाः दृश्यत्वेन भोग्यत्वेन अवस्थिताः लभ्यन्ते इत्यर्थः ॥

सर्वज्ञातृत्वं सर्वात्मकानां शान्तोदिताव्यपदेश्यधर्मत्वेनावस्थितानां गुणानां अक्रमोपारूढम् एककालभावि विवेकजं ज्ञानमित्यर्थः । इत्येषा सर्ववशित्वसर्वज्ञातृत्वलक्षणा विशोका नाम सिद्धिः । यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो विहरति वशी ॥ ४९ ॥

तद्वैराग्यादपि दोषबीजक्षये कैवल्यम् । यदा अस्यैवं भवति सर्वज्ञस्य सर्वभावानधितिष्ठतः क्लेशकर्मक्षये विवेकी सत्वस्य प्रत्ययः । कीदृश इत्याह—सत्वं च हेयपक्षे न्यस्तं परिणामित्वाशुद्धत्वत्रिगुणत्वादिभिः । पुरुषश्च सत्वविधर्मा अपरिणामी शुद्धोऽन्यः सत्वात् इत्यनेन प्रकारेण ॥

ततः अपि सर्वज्ञसर्वभावाध्यक्षत्वात् विरज्यमानस्य यानि क्लेशबीजानि अविद्यावासनारूपाणि दग्धशालिबीजकल्पानि प्रसवासमर्थानि तानि चरितार्थेन प्रलीयमानेन सह आश्रयेण मनसा प्रत्यस्तं गच्छन्ति । तेषु प्रलीनेषु पुरुषः पुनरिदं तापत्रयं आध्यात्मिकादिलक्षणं न भुङ्क्ते ॥

---

1. -त्मानो 2. गुणा व्यवसायव्यवसयात्मकाः 3. विवेक-

[ भाष्यम् ]

तदेषां गुणानां मनसि कर्मक्लेशविपाकस्वरूपेणाभिव्यक्तानां चरितार्थानां प्रतिप्रसवे पुरुषस्याऽऽत्यन्तिको गुणवियोगः कैवल्यं, तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुष इति ॥ ५० ॥

[ सूत्रम् ]

स्थान्युप(नि)मन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् ॥५१॥

[ भाष्यम् ]

चत्वारः खल्वमी योगिनः प्राथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिरतिक्रान्तभावनीयश्चेति । तत्राभ्यासी[1] प्रवृत्तज्योतिः प्रथमः । ऋतंभरप्रज्ञो द्वितीयः । भूतेन्द्रियजयी तृतीयः सर्वेषु भावितेषु भावनीयेषु कृतरक्षाबन्धः कर्त[2]व्यतासाधनवान् ।

विवरणम् ]

तदेषां गुणानां मनसि क्लेशकर्मविपाकस्वरूपेणाभिव्यक्तानां चरितार्थानां प्रतिप्रसवे प्रलये पुरुषस्यात्यन्तिको गुणवियोगः कैवल्यम् । तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुषः । तत्र तद्वैराग्यादपि इत्यपिशब्दादप्राप्तयोगैश्वर्यस्यापि सम्यग्दर्शनात् कैवल्यमिति ॥ ५० ॥

स्थान्युपमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात् । स्थानं स्वर्गादिकं येषान्ते स्थानिनो देवा इन्द्रादयः । तैः उपमन्त्रणं भो भो इहोष्यताम् इत्यादि । तस्मिन् सत्यात्मनो हीनत्वं स्मरतः प्राप्नुतः सङ्गस्मयौ (अर्थादिति) तौ च न कर्तव्यौ । सङ्गस्मयकरणेऽनिष्टं प्रसज्येत ॥

चत्वारः खल्वमी योगिनः–प्राथमकल्पिको मधुभूमिकः प्रज्ञाज्योतिः अतिक्रान्तभावनीयश्च । तान् क्रमेण व्याचष्टे—तत्राभ्यासी अभ्यसनशीलः प्रवृत्तज्योतिः ज्योतिष्मत्यादीनामन्यतमा प्रवृत्तिः प्रवृत्ता यस्य स प्रवृत्तज्योतिः प्रथमः ॥

ऋतम्भरप्रज्ञो द्वितीयः । भूतेन्द्रियजयी तृतीयः । स तु सर्वेषु भावितेषु भावनीयेषु साक्षात्कृतेषु जितेषु च कृतरक्षाबन्धः, उपात्तस्य हि रक्षा विधानीया, भावनीयेषु साक्षात्करणीयेषु कर्तव्यतासाधनवांश्च । कर्तव्यतायाः साधनानि कर्तव्यतासाधनानि अभ्यासवैराग्यादीनि यस्य सः कर्तव्यतासाधनवान् ॥

---

1. प्रवृत्तमात्रज्यो-    2. व्यसाधनादिमान्

[ भाष्यम् ]

चतुर्थो यस्त्वतिक्रान्तभावनीयः तस्य चित्तप्रतिसर्ग एव एकोऽर्थः। सप्तविधा तस्य प्रान्तभूमिप्रज्ञा ॥

तत्र मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्वविशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते 'भो इहाऽऽस्यतामिह रम्यतां कमनीयोऽयं भोगः कमनीयेयं कन्या रसायनमिदं जरामृत्युं बाधते वैहायसमिदं यानममी कल्पद्रुमाः पुण्या मन्दाकिनी सिद्धा महर्षय उत्तमा अनुकूला अप्सरसो दिव्ये श्रोत्रचक्षुषी वज्रोपमः कायः स्वगुणैः सर्वमिदमुपार्जितमायुष्मता प्रतिपद्यतामिदमक्षयमजरममरस्थानं देवानां प्रियम्' इति। एवमभिधीयमानः सङ्गदोषान् भावयेद्घोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणान्धकारे विपरिवर्तमानेन कथंचिदासादितः क्लेशतिमिरविनाशी योगप्रदीपस्तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः। स खल्वहं लब्धालोकः कथमनया विषयमृगतृष्णया वञ्चितस्तस्यैव पुनः प्रदीप्तस्य संसाराग्नेरात्मानमिन्धनीकुर्यामिति। स्वस्ति वः स्वप्नोपमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्य इत्येवं निश्चितमतिः समाधिं भावयेत् ॥

सङ्गमकृत्वा स्मयमपि न कुर्यादेवमहं देवानामपि प्रार्थनीय इति। स्मयादयं सुस्थितंमन्यतया मृत्युना केशेषु गृहीतमिवाऽऽत्मानं न भावयिष्यति। तथा चास्य च्छिद्रान्तरप्रेक्षी नित्यं यत्नोपचर्यः प्रमादो लब्धविवरः क्लेशानुत्तम्भयिष्यति। ततः पुनरनिष्टप्रसङ्गः। एवमस्य सङ्गस्मयावकुर्वतो भावितोऽर्थो दृढीभविष्यति। भावनीयश्चार्थोऽभिमुखीभविष्यतीति ॥ ५१ ॥

[ विवरणम् ]

यस्त्वतिक्रान्तभावनीयश्चतुर्थः तस्य चित्तप्रतिसर्ग एव चित्तप्रलय एव एकोऽर्थः परिशिष्टः। सप्तविधा तस्य प्रान्तभूमिप्रज्ञा। तत्र मधुमतीं भूमिं द्वितीयामृतम्भरप्रज्ञाभूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्वविशुद्धिमनुपश्यन्तः स्थानैरुपमन्त्रयन्ते। भोः इत्यादि प्रसिद्धार्थं भाष्यम् ॥ ५१ ॥

[ सूत्रम् ]

## क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥ ५२ ॥

[ भाष्यम् ]

यथाऽपकर्षपर्यन्तं द्रव्यं परमाणुरेवं [1]अपकर्षपर्यन्तः कालः क्षणः । यावता वा समयेन विचलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशम[2]भिसंपद्येत स कालः क्षणः । [3]तस्य प्रवाहाविच्छेदभाविनः आनन्तर्यं क्रमः । क्षणतत्क्रमयोर्नास्ति वस्तुसमाहार इति । बुद्धिसमाहारात् मुहूर्ताहोरात्रादयः ।

[ विवरणम् ]

क्षणतत्क्रमयोः संयमाद्विवेकजं ज्ञानम् । क्षणं क्रमं च स्वयमेव विस्तरेणाचष्टे—तत्र अपकर्षपर्यन्तं यतः परमपकर्षो न शक्यते कर्तुं तद्द्रव्यं परमाणुः । एवं लोकबुद्धिविकल्पितादहोरात्रलक्षणादपकृष्यमाणात् कालादल्पीयः-परिजिघृक्षया यतः परम् अपक्रष्टुं न शक्यते सः अपकर्षपर्यन्तः कालः क्षणः वस्तुभूतः ॥

यद्वा, यावता समयेन विचलितः परमाणुः पूर्वं देशं जह्यादुत्तरमभिसंपद्येत स[4] कालः क्षणः । सर्वथाऽप्यस्ति (सूक्ष्म)क्षण इत्यर्थः ॥

तस्य प्रवाहाविच्छेदभाविनः तस्य क्षणस्य प्रवाहः प्रबन्धः अविच्छेदो नैरन्तर्यं तथा भवितुं शीलं यस्य क्षणस्य प्रवाहाविच्छेदभाविनः क्षणस्य यत् आनन्तर्यं सः क्षणस्य क्रमः । तयोश्च क्षणतत्क्रमयोर्नास्ति वस्तुसमाहारः क्षणक्रमस्यावस्तुत्वात् क्षणस्य चैकत्वात् नास्ति तयोः समाहारः समूहः ॥

ननु चासति क्षणतत्क्रमसमाहारे कथं माससंवत्सरादयः प्रवर्तेरन्निति, तदर्थमाह—बुद्धिसमाहारात् बुद्धिपरिकल्पितात् क्षणतत्क्रमयोः समाहारादादित्यादिदेशान्तरसंबन्धावबन्धबुद्धिसमुद्भावितात् मुहूर्ताहोरात्रादयः । ततश्च बुद्धिस्थित एष भेदः ॥

यो हि प्रसन्नसमानप्रत्ययप्रवाहिमानसः एकाग्रभूमिप्रतिष्ठितचित्तसत्त्वः, तस्य सत्यपि कालानुभवे क्षणयुगसहस्रयोस्तुल्यता । नैवं व्युत्थितचित्तस्य । तथा स्वप्नेऽपि घटिकामात्रेण बुद्धिपरिकल्पितं योजनसहस्रमनेकं संवत्सरेणैव [गन्तव्यं] गच्छति । तस्माद्बुद्धिवैचित्र्यनिर्मित एव कालसमाहारः ।

---

1. परमाप- 2. मुपसंपद्येत 3. तत्प्रवाहाविच्छेदस्तु क

4. अत्र आदर्शकोशे इत उपरि "ग्राह्योपरक्तः" इत्यादि वाक्यं लिखितम् । तस्यानन्वयात्, 13. पुटेभ्यः पूर्वं लिखितं "कालः क्षणः सर्वथा" इत्यादिवाक्यं योजितम् ॥

[ भाष्यम् ]

स खल्वयं कालो वस्तुशून्यो[1] बुद्धिनिर्माणः शब्द[2]धर्मानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवाभासते ॥

क्षणस्तु वस्तुरूपः[3] क्रमावलम्बी । क्रमश्च क्षणानन्तर्यात्मा ।

[ विवरणम् ]

यस्य तु क्रियाव्यतिरिक्तः कालः नित्यो विभुः, तस्य चिरक्षिप्रत्वाद्यपि क्रियामात्रे पर्यवसितत्वात् पृथक्कालास्तित्वे न लिङ्गं घटते । नियतपरिमाणा हि क्रिया अनवगतपरिमाणायाः क्रियाया लक्षणम् । यथा आ गोदोहनं स्वपिति । आ ओदनपाकमधीते इति । स एव च कालः । न हि नित्यस्य विभोः तस्य कूटस्थस्य असम्बन्धत्वात् वस्त्वन्तरपरिच्छेदकत्वं प्रस्थादिवदुपपद्यते ॥

क्रियावान् कालः परिच्छेदकः प्रस्थादिवदिति चेत्, तस्यापि क्रियावत्त्वात् क्रियावतश्च परिच्छेदनीयत्वादन्येन क्रियावता परिच्छेदकेन कालेन भवितव्यम् । तस्याप्यन्येनेत्यनवस्थाप्रसङ्गः । क्रियावत्त्वाच्चानित्यत्वमपि प्रसज्येत ॥

अथ स्वव्यापारेणैव कालः परिच्छेदनीयकं यायादिति चेत्, अन्येऽपि स्वव्यापारेणैव परिच्छेद्या इति कालपृथक्त्वकल्पना निरर्थिका । तथा च क्रियैवास्तु कालः ॥

अथापि सद्भावमात्रेण कालः परिच्छेदक इति, सर्वेषामपि सद्भावाविशेषादेवं प्रसक्तम् ॥

क्रियाकालपक्षेऽप्येष विकल्पः प्राप्त इति चेत् —न, क्रियायाः सर्वप्रसिद्धत्वात् । परिच्छेदकत्वस्य च आ गोदोहमास्ते इत्यादिषु सिद्धत्वात् क्रियैव परिच्छेदिका लभ्यते, नापरः कालः परिच्छेदक इति । चिरं क्षिप्रमिति च प्रयत्नमन्दिमपाटवकृतः प्रत्ययो न व्यतिरिक्तकालनिबन्धन इत्याह—**स खल्वयं कालः** संवत्सरादिरूपो **वस्तुशून्यो बुद्धिनिर्माणः** बुद्ध्या निर्मापिष्यते ॥

**शब्दधर्मानुपाती** त्रुटिनिमेषाहोरात्रादिशब्दविकल्पानुप्रवर्ती । **लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इवाभासते** । **क्षणस्तु वस्तुरूपः** वास्तविकः[4] तद्द्रव्यान्यथात्वेनानुमीयमानः **क्रमावलम्बी** । **क्रमश्च क्षणानन्तर्यात्मा** क्षणप्रवाहाविच्छेदबुद्धिनिमित्तः ॥

---

1. -न्योऽपि 2. ज्ञानानु- 3. वस्तुपतितः

4. अत्र आदर्शकोशे इत उपरि "अन्तराभावः" इत्यादि वाक्यं लिखितम् । तस्यानन्वयात्, 20. पुटेभ्यः पूर्वं लिखितं "तद्द्रव्यान्यथात्वेन" इत्यादिवाक्यं योजितम् ॥

[ भाष्यम् ]

तं कालविदः काल इत्याचक्षते योगिनः । न च द्वौ क्षणौ सह भवतः । क्रमश्च न द्वयोः, सहभुवोरसंभवात् । पूर्वस्मादुत्तरस्य भाविनो यदानन्तर्यं क्षणस्य स क्रमः । तस्माद्वर्तमान एवैकः क्षणो न पूर्वोत्तरक्षणाः सन्तीति । तस्मान्नास्ति तत्समाहारः । ये तु भूतभाविनः क्षणास्ते परिणा[1]मास्तितया व्याख्येयाः । तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति । तत्क्षणोपारूढाः खल्वमी सर्वे धर्माः । तयोः क्षणतत्क्रमयोः संयमात्तयोः साक्षात्करणम् । ततश्च विवेकजं ज्ञानं प्रादुर्भवति ॥ ५२ ॥

[ विवरणम् ]

तं क्षणं कालविदः काल इत्याचक्षते योगिनः । न च द्वौ क्षणौ सह भवतः, ययोः समाहारः कल्प्येत । एकस्मिन् धर्मिणि सहजन्मनोः क्षणयोरसंभवात् । जायमानो हि चैत्र एकस्मिन् क्षणे जायते । न तत्र द्वौ क्षणौ सह भवतः । क्रमश्च न द्वयोः । कस्मात्? द्वयोः क्षणयोः सहभुवोरसम्भवात् ॥

पूर्वस्मादुत्तरस्य भाविनो यदानन्तर्यं क्षणस्य स क्रमः । यथा पिण्डादुत्तरभाविनो घटस्य यदानन्तर्यं स क्रमः । न हि चक्रान्तरस्थस्य मृत्पिण्डस्य चक्रान्तरस्थमृत्पिण्डजनितो घटः क्रमे वर्तते । तस्माद्वर्तमान एवैकः क्षणः । न पूर्वोत्तरावतीतानागतौ स्तः पूर्वोत्तरयोर्धर्मिस्वरूपमात्रत्वात् । धर्मी च वर्तमानक्षणारूढ एव । तस्मान्नास्ति तत्समाहारः क्षणतत्क्रमसमाहारः ॥

ये तु भूतभाविनः अतीतभविष्यन्तः क्षणाः ते धर्मिणः परिणामास्तितया धर्मिपरिणामापेक्षया व्याख्येयाः । तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति । तत्क्षणोपारूढाः वर्तमानक्षणोपारूढाः खल्वमी सर्वे धर्माः सर्वपदार्थाः ॥

यदुक्तमतीतक्षणस्य नास्ति क्रम इति, तस्यैतत् प्रयोजनं, तत्क्रमक्रमप्रतिषेधः । क्षणक्रमक्रमे हि सति क्षणक्रमस्य वस्तुत्वं प्रसज्येत । वस्तुनो हि क्रम इति । ततश्च क्रमतत्क्षणयोः संयमादिति नोपकल्पेत । तस्मात् एतयोः क्षण[तत्]क्रमयोः संयमात् तयोः साक्षात्करणम् । ततश्च विवेकजं ज्ञानम् । क्षणतत्क्रमाङ्किता एव हि सर्वे पदार्था इति तानशेषान् विविच्य विजानाति ॥ ५२ ॥

---

1. -मान्विता

[ भाष्यम् ]

तस्य विषयविशेष उपक्षिप्यते—

[ सूत्रम् ]

**जातिलक्षणदेशैरन्यताऽनवच्छेदात् तुल्ययोस्ततः प्रतिपत्तिः ॥ ५३ ॥**

[ भाष्यम् ]

तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यताया हेतुः, गौरियं वडवेयमिति। तुल्यदेशजातित्वे लक्षणमन्य[1]त्वावच्छेदकरं, कालाक्षी गौः स्वस्तिमती गौरिति । द्वयोरामलकयोर्जातिलक्षणसारूप्ये देशभेदोऽन्यत्वकरः, इदं पूर्वमिदमुत्तरमिति । यदा तु पूर्वमामलकमन्यव्यग्रस्य ज्ञातुरुत्तरदेश उपावर्तते, तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति प्रविभागानुपपत्तिः । असंदिग्धेन च तत्त्वज्ञानेन भवितव्यमित्यत इदमुक्तं, ततः प्रतिपत्तिर्विवेकजज्ञानादिति ॥

[ विवरणम् ]

तस्य विवेकजस्य ज्ञानस्य कीदृशं ज्ञेयमिति तस्य विषयविशेषः उपक्षिप्यते—जातिलक्षणदेशैरन्यतानवच्छेदात् तुल्ययोस्ततः प्रतिपत्तिः । [तुल्ययोर्देशलक्षणसारूप्ये] जातिभेदः पदार्थानाम् अन्यतायाः अन्यत्वावच्छेदस्य हेतुः । यथा—गौरियं वडवेयमिति ॥

यत्र जातिभेदो नास्त्येकैव जातिः, तत्र तुल्यजातित्वे लक्षणं लिङ्गम् अन्यत्वावच्छेदकरम्—कालाक्षी गौः, स्वस्तिमती गौरिति ॥

यत्र न जातिभेदो नापि लक्षणभेदस्तत्र देशभेदोऽन्यत्वावच्छेदहेतुः । यथा—द्वयोरामलकयोर्जातिलक्षणसारूप्ये देशभेदोऽन्यत्वकरः इदं पूर्वम् आमलकम् इदमुत्तरमिति ॥

यदा तु पूर्वमामलकम् अन्यव्यग्रस्य समाकुलितचित्तस्य ज्ञातुरुत्तरदेश उपावर्तते पूर्वदेशे चोत्तरं, तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति तुल्ययोः प्रविभागानुपपत्तिः । असन्दिग्धेन तत्त्वज्ञानेन भवितव्यं, ज्ञेयस्य विद्यमानत्वादेकरूपस्य इत्यत इदमुक्तं ततः प्रतिपत्तिर्विवेकज्ञानादिति । क्षणतत्क्रमसंयमापादितविवेकजन्मनो ज्ञानात् प्रतिपत्तिरिति ॥

---

1. -त्वकरं

[ भाष्यम् ]

कथं? पूर्वामलकसहक्षणो देश उत्तरामलकसहक्षणाद्देशात् भिन्नः। ते चाऽऽमलके स्वदेशक्षणानुभवभिन्ने।

अन्यदेशक्षणानुभवस्तयोरन्यत्वे हेतुरिति। एतेन दृष्टान्तेन परमाणोस्तुल्यजातिलक्षणदेशस्य पूर्वपरमाणुदेशसहक्षणसाक्षात्करणादुत्तरपरमाणोस्तद्देशा[1]पवृतावुत्तरस्य तद्देशानुभव[2]भिन्नः [3]क्षणः। क्षणभेदात्तयोरीश्वरस्य योगिनोऽन्यत्वप्रत्ययो भवतीति ॥

अपरे तु वर्णयन्ति—येऽन्त्या विशेषास्तेऽन्यताप्रत्ययं कुर्वन्तीति। तत्रापि देशलक्षणभेदो मूर्तिव्यवधिजातिभेदश्चान्यत्वे हेतुः। क्षणभेदस्तु

[ विवरणम् ]

तत् कथम्? पूर्वामलकसह(ल)क्षणो देशः पूर्वामलकसहचरो देशः उत्तरामलकसह(ल)क्षणात् उत्तरामलकसहचरात् देशात् भिन्नः। ते चामलके पूर्वोत्तर(ल)क्षणसहचरिते स्वदेश(ल)क्षणानुभवभिन्ने स्वदेशचिह्नभूते यः क्षणः तदनुभवभिन्ने स्वेदेश(ल)क्षणानुभवचिह्निते अन्यदेश(ल)क्षणानुभवस्तयोरन्यत्वे हेतुरिति ॥

अनेन दृष्टान्तेन परमाणोरतुल्यजातिलक्षणभेद(देश)स्य पूर्वपरमाणुदेशसह(ल)क्षणसाक्षात्करणात् पूर्वपरमाणुदेशेन सहभूतस्य (ल)क्षणस्य साक्षात्करणात् उत्तरपरमाणोस्तद्देशापवृत्तौ पूर्वदेशगतावपि उत्तरस्य तद्देशानुभवभिन्नः क्षणः। क्षणभेदात्तयोरीश्वरस्य योगिनोऽन्य(था)त्वप्रत्ययः भेदावच्छेदो भवति ॥

अत्रापरे वर्णयन्ति—ये अन्त्या विशेषाः परमाणुगता नित्याः, ते एव अन्यताप्रत्ययं कुर्वन्तीति किं तत्क्षणतत्क्रमसंयमेन। यथा घटादिगता विशेषा अन्यताप्रत्ययं कुर्वन्ति, तथा परमाणुगता ये विशेषाः त एव तद्भावप्रत्ययं स्वसद्भावप्रत्ययं च कुर्वीरन्। आश्रयभेदप्रत्ययमपि कुर्वन्ति ॥

अत्रोच्यते—देशलक्षणभेदो मूर्तिव्यवधिजातिभेदश्चान्यत्वे हेतुः उक्त एव स्थूलेषु (न तु) ननु परमाणुषु प्रतिक्षणपरिणामित्वात्। अवस्थितेषु हि विशेषेष्वन्त्येषु स्यादन्यथाऽवधारणम्। न चानवरतपरिणामेषु घटते ॥

1. -शानुपपत्ता- 2. -भवो 3. सहक्षणभेदा

[ भाष्यम् ]

योगिबुद्धिगम्य एवेति । अत उक्तं—मूर्तिव्यवधिजातिभेदाभावान्नास्ति मूलपृथक्त्वमिति वार्षगण्यः ॥ ५३ ॥

[ सूत्रम् ]

**तारकं सर्वविषयं सर्वथाविषयमक्रमं चेति विवेकजं ज्ञानम् ॥ ५४ ॥**

[ भाष्यम् ]

तारकमिति स्वप्रतिभोत्थमनौपदेशिकमित्यर्थः । सर्वविषयं, नास्य किंचिदविषयीभूतमित्यर्थः ॥

[ विवरणम् ]

यदा पूर्वः परमाणुरुत्तरपरमाणुरूपेण परिणमते, पूर्वपरमाणुरूपेण चोत्तरः, तत्रावस्थितान्त्यविशेषाभावाद्विवेकप्रतिपत्तिरनुपपन्ना । तत्रावश्यं क्षणतत्क्रमसंयमजनितविवेकज्ञानादेव संप्रतिपत्तिः । अनित्याश्च परमाणव इति युक्तम् । तस्मात् क्षणभेदस्तु योगिबुद्धिगम्य एव ॥

तथा चानित्यत्वस्य परमाणूनामाचार्यान्तरमतप्रतिपादनद्वारेण प्रसिद्धिं दर्शयति—अत उक्तम्—मूर्तिव्यवधिजातिभेदाभावात् नास्ति मूल(जाति)-पृथक्त्वमिति वार्षगण्यः । यथा प्रतिक्षेत्रज्ञं प्रधानबुद्धत्वं न्यायविरुद्धं मूर्तिव्यवधिजातिभेदाभावात् प्रधानानां पृथक्त्वम् एकपुरुषार्थदृश्यवत् अनुपपन्नम्, एवं परमाणूनामपि मूलत्वे पृथक्त्वं नोपकल्पते । ततश्च एकं मूलमिति प्राप्तम् । न परमाणुभेदो हि नित्यो युक्तः । परमाणूनां च मूर्तत्वात् रूपादिमत्त्वाच्च अनित्यत्वं घटादिवदेवेति ॥ ५३ ॥

तारकं सर्वविषयं सर्वथाविषयम् अक्रमं चेति विवेकजं ज्ञानम् । काष्ठाप्राप्तं ज्ञानं देवर्षिगन्धर्वादीनाम् । [1]तारकमिति । विवेकजमिदमुच्यते स्वप्रतिभोत्थमनौपदेशिकमित्यर्थः । नान्येनोपदेष्टुं शक्यं, नाप्युपदेशेन यथावत् ग्रहीतुं शक्यते । यस्मात् तत् सर्ववस्तुविषयम् । नास्य किंचिदविषयीभूतम् ।

1. अत्र अदर्शकोशे इत उपरि "दिव्यं रूपम्" इत्यादि वाक्यं लिखितम् । तस्यानन्वयात्, 4. पुटेभ्यः पश्चात् लिखितं "तारकमिति । विवेकजं" इत्यादि वाक्यं योजितम् ॥

[ भाष्यम् ]

सर्वथाविषयमतीतानागतप्रत्युत्पन्नं सर्वपर्यायैः सर्वथा जानातीत्यर्थः। अक्रममित्येकक्षणोपारूढं सर्वं सर्वथा गृह्णातीत्यर्थः।

एतद्विवेकजं ज्ञानं परिपूर्णम्। अस्यैवांशो योगप्रदीपो मधुमतीं भूमिमुपादाय यावदस्य परिसमाप्तिरिति ॥ ५४ ॥

प्राप्तविवेकजज्ञानस्याप्राप्तविवेकजज्ञानस्य वा—

[ सूत्रम् ]

सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥ ५५ ॥

इति श्रीमहर्षिपतञ्जलिविरचिते योगसूत्रे

तृतीयो विभूतिपादः ॥

[ भाष्यम् ]

यदा निर्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषान्यताप्रत्ययमात्रं[1] दग्धक्लेशबीजं भवति, तदा पुरुषस्य शुद्धिसारूप्यमिवाऽऽपन्नं भवति, तदा पुरुषस्योपचरितभोगाभावः शुद्धिः। एतस्यामवस्थायां कैवल्यं भवतीश्वरस्यानी-

[ विवरणम् ]

सर्वथाविषयं च सर्वम् अतीतानागतप्रत्युत्पन्नं सर्वपर्यायैः सर्वविशेषणैः सर्वथा सर्वेण प्रकारेण जानाति। अक्रमम् एकक्षणोपारूढम्। एकस्मिन् क्षणे सर्वं सर्वथा गृह्णाति। नास्मदादिवत् क्रमेण ॥

तत् एतद्विवेकजं ज्ञानं परिपूर्णम्, अस्यैवांशो योगप्रदीपः। स एव ज्ञानांशो योगश्च प्रदीपश्च। योगस्य वा प्रदीपो योगप्रदीपः। मधुमतीं भूमिमुपादाय आरभ्य यावदस्य विवेकजस्य ज्ञानस्य परिसमाप्तिः तावत्। विवेकजज्ञानपरिसमाप्तिपर्यन्तानि ज्ञानानि मनोजवत्वादियुक्तानि अस्यैवांशः ॥५४॥

योगजे ज्ञानैश्वर्ये अतिक्रान्ते परिसमापिते च। नातः परं योगज्ञानमैश्वर्यं च। तद(दु)पक्रमणाच्च प्राप्तज्ञानैश्वर्यस्यैव तद्वैराग्यानन्तरं कैवल्यमिति प्राप्तमत आह—प्राप्तविवेकज्ञानस्य [अप्राप्तविवेकज्ञानस्य वा] बाह्यदर्शननिवृत्तौ कैवल्यम्। कथमिति? सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥

यदा निर्धूतरजस्तमोमलं पुरुषान्यताप्रत्ययमात्रम् अन्यतामात्रप्रत्ययवैभवयुक्तं दग्धक्लेशबीजं विनिवृत्ताविद्याप्रत्ययवासनारूपं बुद्धिसत्त्वं भवति, तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नम् ॥

---

1. -प्राधिकारं

[ भाष्यम् ]

श्वरस्य वा विवेकजज्ञानभागिन इतरस्य वा । न हि दग्धक्लेशबीजस्य ज्ञाने पुनरपेक्षा काचिदस्ति । सत्त्वशुद्धिद्वारेणैतत्समाधिजमैश्वर्यं ज्ञानं चोपक्रान्तम् । परमार्थतस्तु ज्ञानाददर्शनं निवर्तते, तस्मिन्निवृत्ते न सन्त्युत्तरे क्लेशाः । क्लेशाभावात् कर्मविपाकाभावः । चरिताधिकाराश्चैतस्यामवस्थायां गुणा न पुरुषस्य पुनर्दृश्यत्वेनातिष्ठन्ते । तत् पुरुषस्य कैवल्यं, तदा पुरुषः स्वरूपमात्रज्योतिरमलः केवलीभवति ॥ ५५ ॥

इति श्रीपातञ्जलयोगसूत्रभाष्ये श्रीमद्वेदव्यासकृते
॥ विभूतिपादस्तृतीयः ॥

[ विवरणम् ]

यद्यपि त्रिगुणं पुरुषविलक्षणं, पुरुषश्च तद्विलक्षणः, तथाऽपि पुरुषान्यताप्रत्ययपरिणामित्वात् शुद्धिसारूप्यमिवापन्नम् इत्युच्यते । एतस्यामवस्थायां कैवल्यं भवतीश्वरस्यानीश्वरस्य वा, विवेकज्ञानभागिनः इतरस्य वा । यस्मादुभयोरविद्यानिवृत्तिरेव कारणं तस्मात् । नहि दग्धक्लेशबीजस्य ज्ञाने काचिदपेक्षा । यतः सम्यग्दर्शी सर्वं त्रिगुणमिति मन्यते, त्रिगुणश्च प्रत्ययो हेय इति, मधुमत्यादिज्ञाने तस्य न कदाचिदप्यपेक्षा ॥

यत्तु योगज्ञानमैश्वर्यं चोक्तं, तत् सम्यग्दर्शनार्थानुक्रान्तसत्त्वशुद्धिपदमार्गेण प्रक्रान्तमानुषङ्गिकम् । परमार्थतस्तु ज्ञानाददर्शनं विनिवर्तते । तस्मिन् विनिवृत्ते न सन्त्युक्तक्लेशाः अस्मितादयः । तेषामविद्याक्षेत्रत्वात् । क्लेशाभावाच्च कर्मविपाकाभावः "क्लेशमूलः[1] कर्माशयः" "सति मूले[2] तद्विपाकः" इति हि प्रतिपादितम् ॥

तस्मात् सम्यग्दर्शनार्थमेवेदं शास्त्रम्, न ज्ञानैश्वर्यविभूतिप्रयोजनम् । चरिताधिकाराश्चैतस्यामवस्थायां गुणाः । न पुरुषस्य पुनर्दृश्यत्वेनातिष्ठन्ते । तत् पुरुषस्य कैवल्यम् । तदा पुरुषः स्वरूपमात्रज्योतिः इति अमलः केवलीभवति इति । इतिशब्दः समाप्त्यर्थः ॥ ५५ ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य
श्रीशङ्करभगवतः कृतौ
पातञ्जलयोगसूत्रभाष्यविवरणे
॥ विभूतिपादस्तृतीयः ॥

---

1. यो. सू. 2-12 2. यो. सू. 2-13

श्रीः

# ॥ पातञ्जलयोगसूत्रभाष्यविवरणम् ॥

## ॥ चतुर्थः कैवल्यपादः ॥

[ पातञ्जलयोगसूत्रम् ]

**जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धयः ॥ १ ॥**

[ व्यासभाष्यम् ]

देहान्तरिता जन्मसिद्धिः। ओषधिभिरसुरभवनेषु रसायनेनेत्येवमादिः।

[ विवरणम् ]

प्रथमे पादे समाधिः प्राधान्येन निर्दिष्टः। द्वितीये तत्साधनानि व्याख्यातानि। तृतीये तु सम्यग्दर्शनार्थयोगाङ्गानुष्ठानानुषङ्गजज्ञानैश्वर्यानुक्रमणं कृतम्। तच्च सर्वं दुःखस्येति जैगीषव्याख्यानेन प्रतिपादितम्। दुःखहानं चात्यन्तिकगुणोपरम इत्युक्तम्। तथैव "तद्वैराग्यादपि[1] दोषबीजक्षये कैवल्यम्" प्राप्तविवेकज्ञानस्याप्राप्तविवेकज्ञानस्य वा "[2]सत्त्वपुरुषयोः शुद्धिसाम्ये कैवल्यम्" इत्यनन्तरमुक्तम्। तच्च कैवल्यं प्रतिपक्षनिवर्तनेन प्रतिपादनीयमितीदं कैवल्यपादानुक्रमणं क्रियते ॥

तथा अनेकजन्मान्तरोपार्जितवासनोच्छेदप्रकाराश्च कैवल्यार्थमेव प्रदर्शनीयाः। तथा कैवल्योपयोगिसमाधिसिद्धिस्तुत्यर्थं पूर्वत्रानुक्तं सिद्ध्यन्तरं प्रक्रियते। तुल्यजातीयानामन्यतमनिन्दनेनान्यतमस्तुतिर्भवति। "तत्र [3]ध्यानजमनाशयम्' 'कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्" इति वक्ष्यमाणेन स्तुत्यर्थता आविष्करिष्यते ॥

जन्मौषधिमन्त्रतपस्समाधिजाः सिद्धयः। देहान्तरिता यथा योगादिना देहान्तरेषु स्वर्गादिषु जन्मसिद्धिः। ओषधिभिरसुरभवनेषु रसायनेन

---

1. यो. सू. पा. 3. सू. 50.
2. यो. सू. पा. 3. सू. 55.
3. यो. सू. पा. 4. सू. 6- 7.

[ भाष्यम् ]

मन्त्रैराकाशगमनाणिमादिलाभः। तपसा संकल्पसिद्धिः, कामरूपी यत्र[1] कामगमन इत्येवमादिः। समाधिजाः सिद्धयो व्याख्याताः॥ १॥

तत्र कायेन्द्रियाणामन्यजाति[2]परिणतानाम्—

[ सूत्रम् ]

**जात्यन्तरपरिणामःप्रकृत्यापूरात् ॥ २ ॥**

[ भाष्यम् ]

पूर्वपरिणामापाये उत्तरपरिणामोपजनस्तेषामपूर्वावयवानुप्रवेशेन[3] भवति। कायेन्द्रियप्रकृतयश्च स्वं स्वं विकारमनुगृह्णन्त्यापूरेण धर्मादि-निमित्तमपेक्षमाणा इति ॥ २ ॥

[ सूत्रम् ]

**निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्॥३॥**

[ विवरणम् ]

सोमामलकादिभक्षणेन पूर्वदेहानपनयेनैव। मन्त्रैः उपजप्यमानैः आकाश-गमनादि। तपसा संकल्पसिद्धिः कामरूपी यत्र कामगमन इत्येवमादिः। समाधिजाः सिद्धयः पूर्वमेव व्याख्याताः॥ १ ॥

तत्र सिद्धिः कार्यकरणानामुत्कर्षः। जन्मसिद्धौ तु पतितपूर्वोपार्जित-कार्यकरणस्य शरीरान्तरमुपादास्यत इति नास्ति तत्र संशयः। अपतित-शरीरस्य तु जात्यन्तरपरिणामे किं तदेव कार्यकरणमुपादानमुतान्यदपीति—तत्र कायेन्द्रियाणामन्यजातिपरिणतानां—जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥

पूर्वपरिणामापाये समवस्थितानामेव पूर्वकार्यकरणानाम् उत्तरपरिणामोप-जनः अपूर्वावयवानुप्रवेशेन भवति। कस्मात्? अल्पपरिमाणस्योपादानस्य महापरिमाणकार्यानुपपत्तेः। न हि दशपलात्तपनीयपिण्डादशीतिपला पत्री जनिष्यते?

कायेन्द्रियप्रकृतयः स्वं स्वं विकारं कायमिन्द्रियं वा अनुगृह्णन्त्या-पूरेण धर्मादिनिमित्तम् आदिग्रहणादधर्ममपि निमित्तम् अपेक्षमाणाः॥

धर्मादिनिमित्तमपेक्षमाणाः स्वं स्वं विकारमनुगृह्णन्ति इत्युक्तम्। तत्र किं धर्मादिनिमित्तं प्रकृतीनां प्रयोजकं, किं वा नेति, तदाह—निमित्तमप्रयोजकं

1. यत्रतत्र 2. जातीय 3. शाद्ध

[ भाष्यम् ]

न हि धर्मादि निमित्तं प्रयोजकं प्रकृतीनां भवति । न कार्येण कारणं प्रवर्त्यत इति । कथं तर्हि? वरणभेदस्तु ततः क्षेत्रिकवत् । यथा क्षेत्रिकः केदारादपां पूर्णात्केदारान्तरं पिप्लावयिषुः समं निम्नं निम्नतरं वा नापः पाणिनाऽपकर्षति, आवरणं [1]तु तासां भिनत्ति । तस्मिन्भिन्ने स्वयमेवाऽऽपः केदारान्तरमाप्लावयन्ति, तथा धर्मः प्रकृतीनामावरणमधर्मं भिनत्ति, तस्मिन्भिन्ने स्वयमेव प्रकृतयः स्वं स्वं विकारमाप्लावयन्ति । यथा वा स एव क्षेत्रिकस्तस्मिन्नेव केदारे न प्रभवत्यौदकान्भौमान्वा रसान्धान्यमूलान्यनुप्रवेशयितुं, किं तर्हि? मुद्गतिन्दुक[2]गवीधुकश्यामाकादींस्ततोऽपकर्षति । अपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलान्यनुप्रविशन्ति,

[ विवरणम् ]

प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् । न हि धर्मादिनिमित्तं प्रयोजकं प्रकृतीनाम् । कस्मात्? न हि कार्येण धर्मादिना निमित्तेन कारणं कार्यकरणप्रातिरूप्यं प्रवर्त्यते ॥

कथं तर्हि? वरणभेदस्तु ततः धर्मादिनिमित्तात् भवति । क्षेत्रिकवत् । यथा क्षेत्रिकः केदारादपां पूर्णात् केदारान्तरं पिप्लावयिषुः नापः पाणिना अपकर्षति । आवरणं तु तासां भिनत्ति । तस्मिन् भिन्ने स्वयमेवाऽऽपः केदारान्तरमाप्लावयन्ति ॥

तथा धर्मः प्रकृतीनामावरणमधर्मं भिनत्ति । धर्ममधर्मोऽपि भिनत्त्यावरणम् । तस्मिन् भिन्ने स्वयमेव प्रकृतयः स्वं स्वं विकारमाप्लावयन्ति पूरयन्ति ॥

यथा वा स एव क्षेत्रिकस्तस्मिन्नेव केदारे न प्रभवत्यौदकान् भौमान् वा रसान् धान्यमूलान्यनुप्रवेशयितुम् । किं तु मुद्गतिन्दुकगवीधुकश्यामाकादीन् तस्मात् धान्यमूलात् अपकर्षति । अपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलान्यनुप्रविशन्ति ॥

---

1. त्वासां  2. गवेधुक

[ भाष्यम् ]

तथा धर्मो निवृत्तिमात्रे कारणमधर्मस्य, शुद्ध्यशुद्ध्योरत्यन्तविरोधात्, न तु प्रकृतिप्रवृत्तौ धर्मो हेतुर्भवतीति । अत्र नन्दीश्वर[1]प्रभृतयः उदाहार्याः । विपर्ययेणाप्यधर्मो धर्मं बाधते । ततश्चाशुद्धिपरिणाम इति । तत्रापि नहुषाजगरादय उदाहार्याः ॥ ३ ॥

यदा तु योगी बहून्कायान्निर्मिमीते, तदा किमेकमनस्कास्ते भवन्त्यथानेकमनस्का इति—

[ सूत्रम् ]

## निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

[ भाष्यम् ]

अस्मितामात्रं चित्तकारणमुपादाय निर्माणचित्तानि करोति, ततः [2]सचित्ताः भवन्तीति ॥ ४ ॥

[ विवरणम् ]

तथा धर्मो निवृत्तिमात्रे कारणमधर्मस्य । अधर्मोऽपि धर्मस्य । शुद्ध्यशुद्ध्योरत्यन्तविरोधात् । न तु प्रकृतिप्रवृत्तौ धर्मो हेतुर्भवतीति ॥

अत्र नन्दीश्वरप्रभृतय उदाहार्याः । विपर्ययेणा[प्य]धर्मो धर्मं बाधते । ततश्चाशुद्धिपरिणाम इति । अत्रापि नहुषादय उदाहार्याः ॥ ३ ॥

यदा तु योगी बहून् कायान्निर्मिमीते, तदा किमेकमनस्कास्ते भवन्ति, अथानेकमनस्का इति समाधिसिद्धौ कश्चिदनुक्तो विशेष उच्यते—निर्माणचित्तान्यस्मितामात्रात् । सोऽहंकारं चित्तकारणमुपादाय निर्माणचित्तानि निर्मितानि चित्तानि अप्राकृतानीश्वरचित्तानि नवानि करोति योगी । चित्तग्रहणमुदाहरणमात्रम् । इन्द्रियाण्यप्यस्मितामात्रादेव । ततः ते सचित्ताः सकरणाश्च भवन्ति ॥

चित्तेन्द्रियाभावे च मृतदेशीयः कायो निरर्थकः स्यात् । एकचित्तत्वे तु गुणप्रधानभावः प्रवृत्तिभेदश्च नोपकल्पते । तत्र विभुत्वादेकक्षेत्रज्ञत्वेऽपि बहुकायारम्भित्वमुपपद्यते । गुणप्रधानानेकप्रवृत्तिभेदार्थं तु करणभेद एषितव्यः ॥

केचित्तु क्षेत्रज्ञा अप्यन्ये प्रतिकायभेदं भवन्तीति मन्वते । केचिदत्र चोदयन्ति अकृताभ्यागमम् । अन्ये तु तदनुरूपोपार्जितकर्माणः क्षेत्रज्ञा भवन्तीति परिहारमाहुः ॥ ४ ॥

---

1. रादयः 2. सचित्तानि

[ सूत्रम् ]

प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥ ५ ॥

[ भाष्यम् ]

बहूनां चित्तानां कथमेकचित्ताभिप्रायपुरःसरा प्रवृत्तिरिति सर्वचित्तानां प्रयोजकं चित्तमेकं निर्मिमीते, ततः प्रवृत्तिभेदः ॥ ५ ॥

[ सूत्रम् ]

तत्र ध्यानजमनाशयम् ॥ ६ ॥

[ भाष्यम् ]

पञ्चविधं निर्माणचित्तं जन्मौषधिमन्त्रतपःसमाधिजाः सिद्धय इति। तत्र यदेव ध्यानजं चित्तं तदेवानाशयं, तस्यैव नास्त्याशयो रागादिप्रवृत्तिः, नातः पुण्यपापाभिसंबन्धः, क्षीणक्लेशत्वाद्योगिन इति। इतरेषां तु विद्यते कर्माशयः। ६ ॥

[ विवरणम् ]

यद्येवं कथं बहूनां चित्तानाम् एकचित्ताभिप्रायपुरस्सरा प्रवृत्तिरिति। तत्रोच्यते—प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम्। प्रवृत्तिभेदे सत्यपि सर्वचित्तानां प्रयोजकं चित्तमेकं फलाधिकृतदेशीयं शरीरान्तरे निर्मिमीते ॥

तच्च योगिबुद्धिमनुवर्तते। अन्यानि च निर्माणचित्तानि भिन्नानेकप्रवृत्तीनि तन्नायकचित्तानुवर्तीनि भवन्ति। ततश्च तेषां प्रवृत्तिः निवृत्तिः उपेक्षा इत्येवमादिप्रवृत्तिभेदः उपपद्यते। राजप्रकृतिप्रवृत्तिभेदवत्। एवमेकचित्ताभिप्रायपुरःसरा च प्रवृत्तिरवकल्पते ॥ ५ ॥

तत्र ध्यानजमनाशयम्। पञ्चविधं निर्माणचित्तं जन्मौषधिमन्त्रतपस्समाधिसामर्थ्यनिर्मितम्। तत्र तेषु यदेव ध्यानजं चित्तं तदेव [1]अनाशयं क्लेशकर्माशयापवर्जितम्। तस्यैव नास्त्याशयः रागादिप्रवृत्तिः, अतो न पुण्यपापाभिसंबन्धः क्षीणक्लेशत्वाद्योगिनः। 'क्लेशमूलो हि कर्माशयः' इत्युक्तम्। तदभावाच्च कर्माशयानुपपत्तिः। अपरेषां तु जन्मादिसिद्धानां कर्माशयः अक्षीणक्लेशत्वाद्विद्यते एव ॥ ६ ॥

1. अत्र आदर्शकोशे इत उपरि "वायुस्तया" इत्यादिवाक्यं लिखितम्। तस्यानन्वयात्, 2. पुटाभ्यां पश्चात् लिखितं "अनाशयं" इत्यादि वाक्यं योजितम् ॥

[ भाष्यम् ]

यतः—

[ सूत्रम् ]

**कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥**

[ भाष्यम् ]

**चतुष्पदी खल्वियं कर्मजातिः । कृष्णा, शुक्लकृष्णा, शुक्ला, अशुक्लाकृष्णा**

[ विवरणम् ]

कुत एतद्योगिन एव न कर्माशयः? इतरेषां त्वस्तीति। यतः **कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्** । सिद्धासिद्धसामान्यविषयमिदं सूत्रम् ॥

ननु च पूर्वसूत्रमपि सामान्यविषयमेव । न । समाधिसिद्धिस्तुत्यर्थत्वात् । सामान्यविषयत्वे तु समाधिसिद्धिस्तुतिरनुपपन्ना स्यात् । सिद्धिपरिसंख्यानेन तु विशेषविषयत्वे, तुल्यजातीयजन्मादिसिद्धिचतुष्टयसावद्यत्वसंकीर्तनात् समाधिसिद्धेः स्तुतिरुपपद्यते ॥

किं च, जन्मादिसिद्धिसाधनानां कैवल्यार्थताप्रतिषेधश्चार्थादिति विशिष्टविषयमेव पूर्वसूत्रम्। इदं तु सामान्यविषयमेव पूर्वसूत्रहेतुत्वेनोपादानात् ॥

**चतुष्पदी खल्वियं कर्मजातिः । कृष्णा** दुरात्मनां शास्त्रमार्गातिवर्तिदुष्टचेतसामशुद्धतरा । या तु बहिस्साधनसाध्या जायापुत्रपशुयाजकादिनिष्पाद्या सा **शुक्लकृष्णा**। काऽसौ? यत्र [पर]पीडाऽनुग्रहद्वारेण कर्माशयप्रचयः, सा क्लेशबाहुलकनिष्पादनीयत्वात् कृष्णा च शुक्ला च ॥

ननु ज्योतिष्टोमादिकर्मशास्त्रसमधिगतत्वान्न कृष्णं, शुक्लमेव तु तत् । अत्रोच्यते—न—काम्यैरनैकान्तिकत्वात् । तान्येव चार्थानर्थोभयकारणानि । अथ तत्फलस्य स्वर्गादेरभिमतत्वादर्थत्वमेवेति चेन्न—परदाराभिमर्शनस्यापि वाञ्छितत्वादर्थत्वप्रसङ्गात् ॥

अथ परदाराभिसरणादावभ्युप्रदोषसम्पातात्, प्रतिषिद्धत्वाच्च रागादिनियोगप्रवृत्तेश्चासमानमिति चेन्न—तत्रापि समानत्वात् । कामात्मतानिषेधादनिष्टयोगश्च । जन्ममरणयोरभ्युप्रदोषभूतयोरवश्यंभावित्वादिष्टानिष्टद्वयहेतुत्वमेव । स चानिष्टयोगः परपीडादेरित्यवसीयते । तत्प्रतिषेधोपपत्तेः ॥

अवश्यं हि जन्ममरणद्वयेन विना स्वर्गादिफलमुपभोक्तुं न शक्यम्। तच्चेदस्ति तस्य दुःखरूपत्वादायातं तर्हि ज्योतिष्टोमादीनामुभयात्मकत्वम् । अथ कर्मान्तरमेव प्रतिषिद्धं जन्ममरणारम्भकारणमिति चेन्न—तद्भावभावित्वात् । तस्मिन् हि सति जन्ममरणभावात् ॥

अथ तु भवत्पक्षे नित्यमेव कुर्वीत, न जन्ममरणे प्रवर्तेयाताम् । कुर्वत एव ते भवतो नाकुर्वतः । तस्मान्निमित्तत्वमवगम्यते । किं च—येन जन्ममरणमारप्स्यते स्वर्गादौ तत् कर्म यदि जन्मान्तरगतं, तत्रानिर्मोक्षप्रसङ्गः । काम्यप्रतिषिद्धाक्रियायामपि पूर्वजन्मकृतफलस्यावश्यप्रापणीयत्वात् ॥

अथ प्राक्तनजन्मकर्मक्षयार्थानि नित्यानीति चेत्—तन्न—नियमानुपपत्तेः । अनिष्टफलान्येवारब्धकार्याणि पूर्वकर्माणि, न त्विष्टफलानीति [न]-नियन्तुं शक्यते । अदृष्टफलेषु हि सत्सु नित्यान्येव कुर्वतोऽपि मोक्षानुपपत्ति-र्जन्मारम्भित्वं च ॥

तत इष्टानामप्युभयहेतुत्वं सिद्धम् । बाह्यसाधनानां कर्मणां पीडानुग्रह-रूपत्वात् । न वै खल्वपि नित्येन पूर्वकृतकर्मणामिष्टानां ज्योतिष्टोमादीनां निवृत्तिरुपकल्पते । विरोधाभावात् । अविरोधश्चोभयेषां शुद्धिरूपत्वात् । तन्त्रसिद्धेश्च ॥

अथापि ब्रूयादे[दने]कजन्मारब्धानि कर्माणि जन्मै(कै)कमारभन्ते, नानारब्धकार्यमवशिष्यत इति । तथाऽपि पूर्वजन्मकर्मण इदानीन्तनजन्मफलदानेन क्षयङ्गतत्वादधुनातनजन्मनिष्पादितानामभिनवानामेव काम्यानां स्वर्गफलजन्म-मरणदुःखारम्भित्वमिति शुक्लकृष्णरूपापत्तिः ॥

ततश्च जन्ममरणदुःखस्य स्वर्गाभिधानायाः प्रीतेश्च दर्शनात् तत्कारणस्य द्विरूपत्वमनुमास्यामहे । तथा च सिद्धे प्रतिषिद्धभूतहिंसाचरणं क्रत्वर्थमप्यग्नीषोमीयादौ प्रवर्तमानं कृष्णरूपमित्यनुमास्यामहे । क्रत्वर्थापि सती हिंसा अनिष्टभूतैव तदर्थतां प्रतिपद्यते ॥

यदुक्तम्—अविशेषेण यच्छास्त्रं शिरोवदिति चोत्तरमिति, तत्र शिरोवदि-त्येवंजातीयकदृष्टन्तासिद्धत्वम् । अविशेषेण यच्छास्त्रमिति तु होमस्वरूपस्य विरोधाद्बाध्यबाधकत्वमुपपद्यते । हिंसायास्तु विरोधाभावादुभयोर्हेतुत्वं भोजन-स्येव सुखशरीरस्थितिद्वयहेतुत्वम् । यथा च तीर्थस्नानस्य ह्लादादृष्टार्थत्वं तथा हिंसाऽप्यनिष्टफलत्वमपरित्यजन्ती महाफलं क्रतुं नैव नाभिनिर्वर्तयति ॥

अथ बाह्यसाधनसाध्यमपि नित्यं केवलं कामसंयोगाभावाच्छुक्लमेवेति चेदेवमुच्यते—न—दोषवत्त्वेन नित्यकाम्यानामविशेषात् । यथा कामिनः काम्यानीति कामसंयोगेन काम्यानां दोषवत्वमेवं कामादिहेतुभूताविद्यादोषवत्त्वमविशिष्टमिति नित्यानामप्युभयात्मकत्वमेव । अविद्यावत्त्वं च नित्येषु प्रवृत्तस्य प्रायश्चित्तनिमि-त्तोत्पत्तेरवश्यंभावित्वात् ॥

[ भाष्यम् ]

चेति । तत्र कृष्णा दुरात्मनाम् । शुक्लकृष्णा बहिःसाधनसाध्या । तत्र परपीडानुग्रहद्वारेणैव कर्माशयप्रचयः । शुक्ला तपःस्वाध्यायध्यानवताम् । सा हि केवले मनस्यायत्तत्वादबहिःसाधना[1]न परान्पीडयित्वा भवति । अशुक्लाकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति । तत्राशुक्लं योगिन एव फलसंन्यासादकृष्णं चानुपादानात् । इतरेषां तु भूतानां पूर्वमिव त्रिविधमिति ॥ ७ ॥

[ सूत्रम् ]

## ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥

[ विवरणम् ]

अपि चाविदुष एव सर्वं कर्म । विदुषः कर्मानुत्पत्तेः । विद्वान् हि पुरुषः स्वरूपावस्थानव्यतिरेकेण फलं नाभिमन्यते । स्वरूपमात्रावस्थानं च समस्तव्यापारविरामेण प्रवर्तते । न चैवं विदुषः क्रियाऽनुष्ठानं घटते । न हि स्थलपथेनाभिप्रतिष्ठासमानो जलमार्गाभिप्रस्थानसाधनं नावादिकमनुतिष्ठति ॥

ननु (न च)नित्यकाम्ययोरेवं सत्यविशेषः स्यात् । अत्रोच्यते—कामितफल-(तन्मात्रं नि)कर्ममात्रनिवृत्तिप्रयोजनत्वान्नित्यानामदोषः । यो हि काम्यादिनिवृत्तस्तस्य बहुलं कर्मणां कामरहितेन शुद्धेन कर्त्रा कृतत्वादतिशुद्धफलत्वं शुक्लत्वबहुत्वाच्च संस्कारार्थत्वम् । अपि च कामनिवृत्तिरेव महत् फलम् ॥

किं च, नित्यं कुर्वतः किमर्थं करोमि, किं वाऽस्य फलं, के वास्यानुष्ठाने दोषाः, इति सम्यग्दर्शनरूपः परामर्शो जायत इति नित्यस्यास्ति विशेषः । शुक्लकृष्णात्मकत्वं त्वविशिष्टमुभयेषामपि कर्मणाम् । बाह्यसाधनसाधनीयत्वेन परपीडोपपत्तेः । [इति] तस्मादुच्यते ॥

शुक्ला कर्मजातिः तपस्स्वाध्यायध्यानवताम् । सा हि केवले मनस्यायत्तत्वादबहिस्साधना बाह्यसाधानानपेक्षा न परान् पीडयित्वा भवति ॥

अशुक्लाकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानाम् । एषाम् आरब्धैकशरीराणाम् अशुक्ला संन्यासात् अकृष्णा च अनुपादानात् अकरणात् । नापि शुक्लकृष्णविमिश्रा, बाह्यसंन्यासानुपादानाभ्यां हेतुभ्याम् । तथा चोक्तम्—

---

1. नाधीना

[ भाष्यम् ]

तत इति त्रिविधात्कर्मणः, तद्विपाकानुगुणानामेवेति यज्जातीयस्य कर्मणो [1]यादृशो विपाकस्तस्यानुगुणा या वासनाः कर्मविपाकमनुशेरते तासामेवाभिव्यक्तिः । न हि दैवं कर्म विपच्यमानं नारकतिर्यङ्मनुष्य-वासनाभिव्यक्तिनिमित्तं संभवति । किंतु दैवानुगुणा एवास्य वासना [2]अभिव्यज्यन्ते । नारकतिर्यङ्मनुष्येषु चैवं समानश्चर्चः ॥ ८ ॥

[ विवरणम् ]

अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ॥
भवत्य[त्यागिनां]योगिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ इति ॥

इतरेषां तु भूतानां जन्मौषधिमन्त्रतपस्सिद्धानामन्येषां च त्रिविधं शुक्लं कृष्णं मिश्रं च पूर्वमिव यथा द्वितीये पादे 'क्लेशमूलः'[3] इत्यादौ ॥ ७ ॥

कैवल्यस्य प्रस्तुतत्वात् तस्य च प्रतिबन्धहेतवः क्लेशाः, कर्माणि, वासानाश्च, [व्याख्याताः] । क्लेशानां तु व्यापारः, प्रतिपक्षः, निवृत्तिश्च तेषां, विस्तरेण व्याख्याताः । एवं कर्मणामपि वासनानां तुल्यव्यापारावस्थान-प्रतिपक्षनिवृत्तयो निर्वर्णनीया इत्यत उत्तराणि सूत्राण्यारभ्यन्ते—यतस्तन्निवृत्तौ कैवल्यमुपपद्यते नान्यथा । ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥

ततः तस्मात् त्रिविधात् उक्तलक्षणात् कृष्णशुक्लविमिश्ररूपात् कर्मणः प्रविपच्यमानाद्धेतुभूतात् तद्विपाकानुगुणानां तस्यैव कर्मणो विपाकः फलं तदनुगुणानां तदनुरूपाणां तादृशीनाम् एव वासनानामभिव्यक्तिः ॥

एतदुक्तं भवति—देवतिर्यङ्मनुष्यविपाकहेतुषु कर्मसु मध्ये यज्जाती-यस्य कर्मणो यादृशो विपाकः तस्य विपाकस्य अनुगुणा वासनाः तत् कर्मविपाकमनुशेरते अनूत्पद्यन्ते, तासामेवाभिव्यक्तिः । तत्सदृशेन कर्मवि-पाकेन संस्कृतत्वात् । यथा मातृसदृशीं प्रविलोक्य वत्सोऽनुधावति । नान्या-सामतदनुगुणानामभिव्यक्तिः ॥

न हि दैवं कर्म विपच्यमानं फलाभिमुखीभावमापद्यमानं नारक-तिर्यङ्मनुषवासनाभिव्यक्तिनिमित्तं[सं]भवति । निमित्तनैमित्तिकयोः प्रतिनि-यतानुगुणत्वात् । किं तु दैवानुगुणा एवास्याभिव्यज्यन्ते । नारक-तिर्यङ्मनुषेष्वेवं समानश्चर्चः समाधिः ॥

---

1. यो वि- 2. व्यज्य- 3. यो. सू. पा. 2. सू. 12

[ सूत्रम् ]

**जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कार-योरेकरूपत्वात् ॥ ९ ॥**

[ भाष्यम् ]

**वृषदंशविपा[1]कादयः [2]स्वकर्मव्यञ्जकाञ्जनाः[3] । [4]यदि जातिशतेन वा दूरदेशतया वा कल्पशतेन वा व्यवहिताः[5] पुनश्च स्वव्यञ्जकाञ्ज[6]नोदयाः**

[ विवरणम् ]

नारके कर्मणि विपच्यमाने तत्कर्मानुगुणा वासनाः प्रादुर्भवन्ति । तथा तैर्यग्योनकर्मणि विपच्यमाने तद्विपाकानुरूपा वासना व्यज्यन्ते । तथा मानुषेऽपि समानो न्यायः । न हि स्वविपाकसदृशीरनुपादाय वासनास्तस्य तस्य कर्मणो विपाकः संभवति । नापि वासनानामात्मनिष्पादकविपाकारम्भिकर्मतुल्यरूपाणि कर्मान्तराणि विपाकाभिमुखान्यन्तरेणाभिव्यक्तिः । एवं कर्मणां वासनानां च परस्परहेतुहेतुमद्भावोऽनादिभूतः ॥ ८ ॥

तत्र वासनानामनेकजातिकालदेशव्यवधानेन दवीयसीनामानन्तर्यं विपच्यमानेन कर्मणा सह नास्ति । यथा दवीयसां मित्रस्वजनादीनाम् । यथैव च नेदीयसी वासना पटीयसी, न तथा दवीयसी पटीयमानमासीदति । तस्मान्नास्ति दवीयसीनामानन्तर्यं वासनानाम् ॥

तदभावे चायं दोषः प्राप्नोति—यथा कल्पशतान्तरितः वृषदंशविपाकः भविष्यतः वृषदंशविपाकस्यानन्तरातीतो दैवविपाकः । तत्र नेदीयसी दैववासना विरुद्धत्वात् वृषदंशविपाकाभिव्यक्तिहेतुतां न प्रतिपद्यते । कल्पशतव्यवहितानामपि वृषदंशवासनानां विप्रकर्षादनुपादाने वृषदंशविपाकहेतोः कर्मणो विपाको नावकल्पेत । ततश्च कर्मणां वासनानां चानर्थक्यं प्रसज्येतेति ॥

अत्रोच्यते—जातिदेशकालव्यवहितानामप्यानन्तर्यं स्मृतिसंस्कार-योरेकरूपत्वात् । वृषदंशविपाकादयः स्वकर्मव्यञ्जकाञ्जनाः व्यञ्जकेन स्वेन कर्मणा व्यज्यमानाः यदि जातिशतेन वा दूरदेशतया वा कल्पसहस्रेण वा व्यवहिताः ॥

---

1. कोद-
2. स्वव्य-
3. -ञ्जनाभिव्यक्तः
4. -स यदि
5. -हिताः
6. -न एवोदियाद्

[ भाष्यम् ]

द्रागित्येव पूर्वानुभूतवृषदंशविपाकाभिसंस्कृता वासना उपादाय [1]अभिव्यज्यन्ते । कस्मात्? यतो व्यवहितानामप्यासां सदृशं कर्माभिव्यञ्जकं निमित्तीभूतमित्यानन्तर्यमेव । कुतश्च? स्मृतिसंस्कारयोरेकरूपत्वात् । यथाऽनुभवास्तथा संस्काराः । ते च [2]वासनानुरूपाः । [3]यथावासनाः [4]स्मृतयः इति जातिदेशकालव्यवहितेभ्यः संस्कारेभ्यः स्मृतयः[5] ।

[ विवरणम् ]

ननु च जातिव्यवधानेनैव कालविप्रकर्ष उक्तः । किं कालग्रहणेन? उच्यते—भूयांसि जन्मानि दिवसे एकस्मिन्नपि क्षुद्रजन्तुप्रभृतीनां केषांचिद्भवन्ति । न तत्रातीतकालविप्रकर्ष इति कालग्रहणम् ॥

तेषु वृषदंशविपाकादयः पूर्वमपि स्वव्यञ्जकनिर्वर्तिताः सन्तः पुनश्च स्वव्यञ्जकाञ्जनोदयाः द्रागित्येव क्षिप्रमेव वृषदंशविपाकाभिसंस्कृता वासना उपादायाभिव्यज्यन्ते । कस्मात् एवम्? यतो व्यवहितानामप्यासां सदृशं कर्माभिव्यञ्जकं निमित्तीभूतमिति ॥

न हि बलीवर्दविपाकाभिव्यक्तिकारणं कर्म वृषदंशवासनाभिव्यक्तिनिमित्तं भवति । विसदृशत्वात् । अनुरूपं हि निमित्तमभिव्यञ्जकम् । आम्लादिभक्षणदर्शने जिह्वा स्रवति । तस्मात् आनन्तर्यमेव वासनानाम् । यतस्तासां व्यञ्जकं तुल्यम् । तथा च सति न वासनानां नेदीयस्ता दवीयस्ता वा । समानचित्ताश्रयत्वात् । कुतश्च? अयमप्यपरो हेतुरानन्तर्यस्य । स्मृतिसंस्कारयोरेकरूपत्वादिति ॥

पूर्वं तुल्यजातीयं कर्माभिव्यञ्जकं वासनानन्तर्यहेतुरुक्तः । इदानीमयमन्य उच्यते—यथा अनुभवास्तथा संस्काराः । यादृशाः प्रत्ययाः तथा वासनाः । ते च संस्कारा वासनारूपाः । यथावासनाः स्मृतय इति ।

---

1. व्यज्येत
2. कर्मवा-
3. यथा च
4. -स्तथा स्मतिरि
5. स्मृतिः

[ भाष्यम् ]

[1]स्मृतिभ्यश्च पुनः संस्कारा इत्येवमेते स्मृतिसंस्काराः कर्माशयवृत्तिलाभ-[2]वशावेशादभिव्यज्यन्ते ।

अतश्च व्यवहितानामपि निमित्तनैमित्तिकभावानुच्छेदादानन्तर्यमेव सिद्धमिति ॥ ९ ॥

[ सूत्रम् ]

**तासामनादित्वं चाऽऽशिषो नित्यत्वात् ॥ १० ॥**

[ भाष्यम् ]

तासां वासनानामाशिषो नित्यत्वादनादित्वम् । येयमात्माशीः [3]मरणं मा नु भूत्, भूयासमिति सर्वस्य दृश्यते, सा न स्वाभाविकी ।

[ विवरणम् ]

तथा चोक्तम्[4] "ग्राह्योपरक्तः प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासः" इत्यादि । जातिदेशकालव्यवहितेभ्यः संस्कारेभ्यः स्मृतयः । स्मृतिभ्यश्च पुनः संस्कारा इत्येवमेते स्मृतिसंस्काराः कर्माशयवृत्तिलाभवशावेशाद-भिव्यज्यन्ते । कर्माशयस्यापि वृत्तिलाभो देशादिनिमित्तापेक्षयेति प्रतिपादितम् ॥

अतश्च व्यवहितानामपि निमित्तनैमित्तिकभावानुच्छेदादानन्तर्यमेव । यादृशः संस्कारस्तादृशी स्मृतिः । प्रतिनियतव्यञ्जकत्वाच्च तयोर्न विप्रकर्षः कारणम् । यतः कल्पशतव्यवहितादपि संस्कारादेव तुल्यजातीया स्मृतिरिति आनन्तर्यमेव सिद्धम् ॥ ९ ॥

इदानीं वासनानामनादित्वेन विपाकनिर्वर्तकत्वमभिदर्शयति—संस्कारस्य चानादित्वमेकैकस्य चासङ्ख्ययोनिगमनं वैराग्यप्रतिपत्त्यर्थं प्रतिपादयति—**तासामनादित्वं चाऽऽशिषो नित्यत्वात् । तासां वासनानामाशिषो नित्यत्वादनादित्वम् । येयमात्माशीः 'मरणं मा नु भूत्' इति,** एवमाशीर्वा '**भूयासम्' इति सर्वस्य दृश्यते । सा न स्वाभाविकी** स्वरस-प्रवृत्ताऽपि निरूढाऽपि ॥

---

1. स्मृतेश्च 2. वशाद्व्य 3. मा न भूवं

4. अत्र आदर्शकोशे इत उपरि "सर्वथाप्यस्ति" इत्यादिवाक्यं लिखितम् । तस्यानन्वयात्, 13. पुटेभ्यः पश्चात् लिखितं "ग्राह्योपरक्तः" इत्यादिवाक्यं योजितम् ॥

[ भाष्यम् ]

कस्मात्? जातमात्रस्य जन्तोरननुभूत[1]जननमरणधर्मकस्य द्वेषदुःखानुस्मृतिनिमित्तो मरणत्रासः कथं भवेत्? न च स्वाभाविकं वस्तु निमित्तमुपादत्ते। [2]यस्मादनादिवासनानुविद्धमिदं चित्तं निमित्तवशात् काश्चिदेव वासनाः प्रतिलभ्य पुरुषस्य भोगायोपावर्तत इति ॥

घटप्रासादप्रदीपकल्पं संकोचविकासि चित्तं शरीरपरिमाणाकार-

[ विवरणम् ]

कस्मात्? जातमात्रस्य अननुभूतजननमरणधर्मकस्य द्वेषानुस्मृतिनिमित्तो दुःखानुस्मृतिहेतुको वा मरणत्रासः कथं भवेत्? न हि कथञ्चन दुःखस्मरणादिनिमित्तोपादानं स्वाभाविकस्योपपद्यते। न च स्वाभाविकं वस्तु निमित्तमुपादत्ते। न हि ज्वलनस्योष्णत्वं स्वाभाविकं सदात्मीयकार्ये निमित्तमीक्षेत ॥

न चाननुभूते विषये स्मृतिरिष्टेऽनिष्टे वा कस्यचिदुपप्लोप्यते। अनुभूतप्रियाननुस्मरणे, न च तद्विषयवाञ्छा। तथा अनुभूताप्रियाननुस्मरणे, न तद्विषयो द्वेषस्त्रासश्च लोके परिदृश्यते। तथा च यो यो जातस्तस्य तस्येह जन्मन्यननुभूतजन्ममरणस्य जन्मानन्तरमेवात्माशीरभिदृश्यते। तस्मात् तदाशीर्नित्यत्वात् पूर्वजन्ममरणानुभवोऽनुमीयते। ततः पूर्वस्ततोऽपि पूर्व इति, स्मृतिसंस्काराणां तत्कारणानां च जन्ममरणानुभवानामनादित्वमनुमिमीमहे ॥

तथैव एकैकस्य प्राणभृतोऽनेकयोनिगमनसिद्धिः। एवमेता वासना दुरवहाना अविहानीयाः। कुत एवम्? यस्मादनादिवासनानुविद्धं चित्तमिदं निमित्तवशात् कर्मनिमित्तवशात् काश्चिदेव वासनाः प्रविपच्यमानकर्मतुल्यजातीयक्रियाविपाकाभि(न्न)निष्पादिताः प्रतिलभ्य पुरुषस्य भोगायोपावर्तते यावदवसिताधिकारमिति ॥

तदेतच्चित्तं घटप्रासादप्रदीपकल्पं संकोचविकासि हस्तिमशकादिशरीरपरिमाणाकारं यथा दीपो घटप्रासादादिषु। तदेवम् अपरे प्रतिपन्नाः। तत्र च युक्तिमाह—[3]तथा चेति। तथा च संकोचविकासित्वे च अन्तराभावः

---

1. तमरण- 2. तस्मा

3. अत्र आदर्शकोशे इत उपरि "अभावाविशेषात्" इत्यादि वाक्यं लिखितम्। तस्यानन्वयात्, 13. पुटेभ्यः पूर्वं लिखितं "तथा चेति। तथा च संकोचविकासित्वे च" इत्यादिवाक्यं योजितम् ॥

[ भाष्यम् ]

मात्रमित्यपरे प्रतिपन्नाः । तथा चान्तराभावः [1]संसरणञ्च युक्तं इति ॥

वृत्तिरेवास्य विभुनश्चित्तस्य संकोचविकासिनीत्याचार्याः ॥

तच्च धर्मादिनिमित्तापेक्षम् । निमित्तं च द्विविधम्—बाह्यमाध्यात्मिकं च । शरीरादिसाधनापेक्षं बाह्यं [2]स्तुत्यभिवादनादि, चित्तमात्राधीनं श्रद्धाद्याध्यात्मिकम् । तथा चोक्तम्—ये चैते मैत्र्यादयो ध्यायिनां विहारास्ते बाह्यसाधननिरनुग्रहाः[3] प्रकृष्टं धर्ममभिनिर्वर्तयन्ति । तयोर्मानसं बलीयः । कथं? ज्ञानवैराग्ये केनातिशय्येते? दण्डकारण्यं च

[ विवरणम् ]

मरणादुत्तरकालं जन्मनश्च प्रागेतस्मिन् अन्तराले भवतीत्यन्तराभावः संसरणं सञ्चरणं येन सञ्चरति तदपि शरीरमातिवाहिकं चित्तस्याविभुत्वे युक्तमिति ब्रुवन्ति। वृत्तिरेवास्य विभुनश्चित्तस्य सङ्कोचविकासिनीत्याचार्याः । आचार्यग्रहणम् उपपत्तिमत्त्वात् पूजार्थम् । चित्तस्य स्थितिर्गतिश्च परिणामित्वाद्विभुत्वेऽपीन्द्रियाणां चोपपद्यते योगिनां च विकरणभावः सर्वज्ञत्वं विभुत्वे घटते ॥

न चोपभोगशून्यस्यातिवाहिकशरीरस्य कल्पनायामस्ति प्रमाणम् । शशविषाणवदनुपलभ्यमानत्वात् । "न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति" इति श्रुतेः । तथा "अथ यो हैताननन्तानुपास्ते" इति श्रुतिः करणव्यापित्वं ख्यापयति ॥

तच्च संकोचविकासित्वं वृत्तेः धर्मादिनिमित्तापेक्षम् । निमित्तं च द्विधा बाह्यमाध्यात्मिकं च । शरीरादिसाधनापेक्षं बाह्यं स्तुत्यभिवादनादि कर्म । किं पुनराध्यात्मिकम्? आह—केवलचित्तमात्राधीनं श्रद्धादि ॥

तथा चोक्तम्—ये चैते मैत्र्यादयो ध्यायिनां विहाराः चित्तव्यापाराः चेष्टितानि ते बाह्यसाधननिरनुग्रहाः बाह्यसाधननिरपेक्षाः केवलचित्तमात्रनिर्वृत्ताः प्रकृष्टं धर्ममभिनिर्वर्तयन्ति ॥

तयोः बाह्याध्यात्मिकयोर्निमित्तयोः मानसम् आध्यात्मिकं मैत्र्यादिचित्ताभिनिष्पन्नं निमित्तं बलीयः। कथम् इति? ज्ञानवैराग्ये केनातिशय्येते? न केनापीत्यर्थः । यतस्तृतीयपादानुक्रान्तविभूतिजातं ज्ञानवैराग्यसाध्यम् । दण्डकारण्यं

1. संसारश्च युक्त 2. स्तुतिदानाभि- 3. -ह्यात्मानः

[ भाष्यम् ]

चित्तबलव्यतिरेकेण शारीरेण कर्मणा शून्यं कः कर्तुमुत्सहेत ? समुद्रमगस्त्यवद्वा पिबेत् ॥ १० ॥

[ सूत्रम् ]

## हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः ॥११॥

[ भाष्यम् ]

हेतुर्धर्मात्सुखमधर्माद्दुःखं, सुखानुशयी [1]रागो दुःखानुशयी[2] द्वेषस्ततश्च प्रयत्नस्तेन मनसा वाचा कायेन वा परिस्पन्दमानः परमनुगृह्णात्युपहन्ति वा । ततः पुनर्धर्माधर्मौ सुखदुःखे रागद्वेषाविति प्रवृत्तमिदं षडरं संसारचक्रम् ।

[ विवरणम् ]

चित्तबलव्यतिरेकेण कः कर्तुं शक्नोति । कश्च पिबेत् समुद्रमगस्त्यवत् इति । अतो मानसबलमेव बलम् । न शारीरम् । "तस्मात् मानसं परमं वदन्ति" इति श्रुतेः । तथा च भगवानावभाषे—

"श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप ।"

"सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते" इति ॥ १० ॥

कथं पुनस्तासां वासनानां निवृत्तिः । अनादिरूढत्वात् न निवृत्तिरासां घटामाढौकते । न च तन्निवृत्तिमन्तरेण कैवल्योपपत्तिरित्यत उच्यते— हेतुफलाश्रयालम्बनैः संगृहीतत्वादेषामभावे तदभावः । हेतुश्च फलं चाश्रयश्चालम्बनं च हेतुफलाश्रयालम्बनानि । तैः संगृहीतत्वादुपग्रथितत्वादेषां हेत्वादीनामभावे तदभावे वासनानामभावः । तस्मादुपपद्यते वासनानां निवृतिः ॥

कोऽसौ हेतुः? इत्याह—धर्मस्तावदविद्याविनमितचेतसाम् । ततो धर्मात् सुखम् । सुखानुशयी रागः । एवमविद्यात एव निषिद्धाचरणत् अधर्मः । ततो दुःखम् । दुःखानुशयी द्वेषः । ततः सुखोपार्जन दुःखपरिहारे च पूर्ववदेव प्रयत्नः । तेन प्रयत्नेन वाचा कायेन परिस्पन्दमानः परमनुगृह्णात्युपहन्ति च । पुनश्च ततः परानुग्रहपरपीडनाभ्यां धर्माधर्मौ । ताभ्यां सुखदुःखे । ताभ्यां च रागद्वेषौ पूर्ववदेव । ततः प्रयत्नः ॥

---

1. सुखाद्वा
2. दुःखाद्-

[ भाष्यम् ]

अस्य च प्रतिक्षणमावर्तमानस्याविद्या नेत्री मूलं सर्वक्लेशानामित्येष हेतुः। फलं तु यमाश्रित्य यस्य प्रत्युत्पन्नता धर्मादेः, न ह्यपूर्वोपजनः। मनस्तु साधिकारमाश्रयो वासनानाम्। न ह्यवसिताधिकारे मनसि निराश्रया वासनाः स्थातुमुत्सहन्ते। यदभिमुखीभूतं वस्तु यां वासनां व्यनक्ति तस्यास्तदालम्बनम्। एवं हेतुफलाश्रयालम्बनैरेतैः संगृहीताः सर्वा वासनाः। एषामभावे तत्संश्रयाणामपि वासनानामभावः॥ ११॥

[ विवरणम् ]

इत्येवमनवरतप्रारब्धपरिभ्रमणं प्रवृत्तमिदं षडरं संसारचक्रम्। अस्य च प्रतिक्षणमावर्तमानस्याविद्या नेत्री रथचक्रस्य तुरङ्गयुवतिरिव॥

सा मूलं सर्वक्लेशानामिति यदेतदविद्यानेतृकं षडरं चक्रम् एष हेतुः वासनानाम्। एतच्चक्रावृत्तिकृता हि ताः। अविद्यायास्त्वभावे विशीर्णनाभिबन्धनमिव चक्रं धर्मादिहेतुचक्रमपि विशीर्यते। तद्विशरणे च चक्रावृत्तिकृतजन्मनां वासनानामकार्यक्षमत्वम्॥

फलं तु यम् अर्थम् आश्रित्य यस्य प्रत्युत्पन्नता तत् तस्य फलम्। तदपि वासनानां संग्राहकम्। तदभावे वासनाभिव्यक्त्यभावात्। सुखादिफलस्य वासनाधायित्वात्। न ह्यपूर्वोपजनः। नात्यन्तमसदुत्पद्यते॥

मनः साधिकारं कर्तव्यतावत् न पुरुषार्थशून्यम्। कृतपुरुषार्थस्वरूपज्ञानं विनिवृत्ताविद्याकमिति साधिकारमाश्रयो वासनानाम्। तदाश्रित्य हि हेतुचक्रपरिभ्रमणम्। न ह्यवसिताधिकारे करणीयपुरुषार्थशून्ये मनसि निराश्राया वासनाः स्थातुमुत्सहन्ते।

यदभिमुखीभूतं वस्तु यां वासनां व्यनक्ति तस्यास्तदालम्बनम्। एवं हेतुफलाश्रयालम्बनैरेतैः संगृहीताः सर्वा वासनाः। तेषां हेत्वादीनाम् अभावे तत्संश्रयाणामपि वासनानामभावः छत्राभावे छायानिवृत्तिवत्॥

एषां चाभावोपायो द्वितीयपादे व्याख्यातः। तस्मात् न वासना सम्यग्दर्शने सति कैवल्यप्रतिबन्धिनी। भवत्येवाविद्यानिवृत्तौ कैवल्यमिति॥ ११॥

[ भाष्यम् ]

नास्त्यसतः संभवः, न चास्ति सतो विनाश इति द्रव्यत्वेन संभवन्त्यः कथं निवर्तिष्यते वासना इति--

[ सूत्रम् ]

**अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ॥ १२**

[ भाष्यम् ]

भविष्यद्व्यक्तिकमनागतं,[1] भूतव्यक्तिकमतीतं, स्वव्यापारोपारूढं वर्तमानं, त्रयं चैतद्वस्तु ज्ञानस्य ज्ञेयम् । यदि चैतत्स्वरूपतो नाभविष्यन्नेदं निर्विषयं ज्ञानमुदपत्स्यत । तस्मादतीतानागतं स्वरूपतोऽस्तीति । किंच

[ विवरणम् ]

ननु चैषामभावे तदभाव इत्युक्तम् । तथा च सिद्धान्तहानिः । कथम्? एवं हि सिद्धान्तः नास्त्यसतः सम्भवः उत्पत्तिः । न चास्ति सतो विनाश इति । अथ पुनः सन्ति वासनास्तदा, द्रव्यत्वेन (वस्तुसत्यः) [सम्भवन्त्यः] कथं निवर्तिष्यन्ते । नैव निवर्तिष्यन्त इत्यर्थः । तत्र कथमुक्तमेषामभावे तदभाव इति । कथं वा कैवल्यमनिवृत्तासु हेतुकृतजन्मसु वासनास्वित्यत उत्तरं पठति—अतीतानागतं स्वरूपतोऽस्त्यध्वभेदाद्धर्माणाम् ॥

एवं वैतत् । अथ वा सिद्धान्तपक्षेणैव नेयं भाष्यम् । कथम्? एषामभावे तदभावः इति हेत्वादीनां वासनानां च नात्यन्ताभाव उच्यते । कस्मात्? नास्त्यसतः सम्भवो न चास्ति सतो विनाश इति द्रव्यत्वेन वस्तुतया सम्भवन्त्यः कथं निवर्तिष्यन्ते वासनाः । शब्दविकल्पितत्वे वासना नात्यन्तं निवर्तिष्यन्ते । सन्त्येवातीतस्वरूपेणेत्यर्थः ॥

भविष्यद्व्यक्तिकं भविष्यति व्यक्तिः यस्य तत् भविष्यद्व्यक्तिकम् । यथा पिण्डावस्थायां घटरूपम् । प्रवृत्तेतिकर्तव्यतासाधनं तत् अनागतम् । भूतव्यक्तिकमतीतं भूता अतिक्रान्ता व्यक्तिरुपलब्धिविषयत्वापत्तिर्यस्य । यथा प्रभग्नो घटः तदतीतमित्युच्यते । अव्यङ्ग्यमभविष्यत् यस्य व्यञ्जने साधनमुपादेयम् । अनतीतव्यक्तिकमभूतम् ! किं तर्हि? व्यापारोपारूढं तत् वर्तमानम् । यथा घटः स्वक्रियायाः ॥

---

1. तमनुभूत-

[ भाष्यम् ]

भोगभागीयस्य वाऽपवर्गभागीयस्य वा कर्मणः फलमुत्पित्सु यदि निरुपाख्यमिति तदुद्देशेन तेन निमित्तेन कुशला[1]नुज्ञानं न युज्येत । सतश्च

[ विवरणम् ]

त्रयं चैतत् अतीतानागतवर्तमानलक्षणकं वर्तमाने धर्मिणि वर्तमानं धर्मरूपं वस्तु समस्तलोकविनिश्चितरूपस्याव्यभिचारिणो ज्ञानस्य प्रमाणभूतस्य ज्ञेयम् इति सङ्गिरामहे । कस्मात्? निश्चितज्ञानोत्पत्तिविषयत्वात् ॥

यदि चैतद्वस्तु स्वरूपतो नाभविष्यत् नेदं निर्विषयं ज्ञानमुदपत्स्यत । यथा शशविषाणादि निश्चितज्ञानोत्पत्तिकारणं न भवति । न च तथेह निश्चितवस्तुज्ञानोत्पत्तिहेतुविषयत्वं न विद्यते । सकलजनानुभवविषयमिदं ज्ञानं वर्तते । घटो भविष्यति घटो भूत इति च । तस्माद्वस्त्वेव कालत्रयसम्बन्धि । परिनिश्चितज्ञानोत्पत्तिविषयत्वात् ॥

अथ वा नावस्तुविषयमतीते भविष्यति च घटादौ ज्ञानम् । शब्दविकल्पितत्वे सति निश्चितरूपेण उत्पद्यमानत्वात्, वर्तमानघटादिविषयज्ञानवत् । अव्यभिचाराच्च । लिङ्गानुमेयत्वाच्च, धूमेन अग्न्यादिज्ञानवत् । लिङ्गदर्शनानन्तरोत्पत्तेर्वा ॥

यद्वा, अतीतमनागतं च वस्तु सत् स्वरूपेण, लिङ्गदर्शनानन्तरबुद्धिविषयत्वात्, प्रसिद्धानुमेयवत् । तस्मादतीतानागतं स्वरूपतोऽस्ति ॥

किं च—भोगभागीयस्य भोगहितस्य यागादेः, अपवर्गभागीयस्य वा अपवर्गहितस्य समाध्यादेः कर्मणः फलमुत्पित्सु यस्य नास्ति तस्य वादिनः तत् निरुपाख्यं प्राप्नोति शशविषाणवत् । न हि शशविषाणं भविष्यतीत्युपाख्यायते । न तथेह । किं तर्हि? यागेन स्वर्गो भविष्यति, समाध्यादिना मोक्षो भविष्यति इति च कुशलैः अतिकठोरमतिभिरुपाख्यायते ॥

तस्मात् निरुपाख्यत्वात् तदुद्देशेन फलोद्देशेन । निरुपाख्यत्वात् तेन फलेन निमित्तेन कुशलानुज्ञानम् इदं कुरु भविष्यति त्वानेनादः इति स्वयमप्रतिपद्यमानाः कुशलाः कथमनुजानीयुः उपदिशेयुर्वा । किं च, दृष्टमात्रप्रतिपत्तौ कुशलाकुशलाविशेषश्च प्राप्नोति । कुशलानां वा मिथ्याप्रतिपत्तिः 'अकुशलाः समीचीनदर्शनाः' इति ॥

---

1. नुज्ञानं

[ भाष्यम् ]

फलस्य निमित्तं वर्तमानीकरणे समर्थं नापूर्वोपजनने । सिद्धं निमित्तं नैमित्तिकस्य विशेषानुग्रहं[1] कुरुते नापूर्वमुत्पादयतीति ॥

धर्मी चानेकधर्मस्वभावस्तस्य चाध्वभेदेन धर्माः प्रत्यवस्थिताः । न च यथा वर्तमानं व्यक्तिविशेषापन्नं द्रव्यतोऽस्त्येवमतीतमनागतञ्च । किं[2] तर्हि ? स्वेनैव व्यङ्ग्येन स्वरूपेणानागतमस्ति । स्वेन चानुभूतव्यक्तिकेन

[ विवरणम् ]

किं च, अभावज्ञानात् कुशला अपि फलाय नाभिसमीहेरन्[3] । अभावाविशेषाच्च कारणनियमो नाकल्पिष्यत । (न) सर्वतो वा सर्वमुदपत्स्यत । नापि कारणमुपादास्यत । उपादाने वा तैलार्थी सैकतमप्युपादास्यत किं तिलैरनेकायासनिष्पाद्यैः । अत्यन्तासदपूर्वं चेदमजनिष्यत । न चैतद् दृष्टम् ॥

तस्मात्तद्भोगभागीयमपवर्गभागीयं वा कर्म निमित्तं कारणं विद्यमानस्यैव तस्य फलस्य वर्तमानीकरणे समर्थं नापूर्वोपजने । सिद्धं हि स्वेनात्मना निमित्तं स्थाली क्षीरघर्मातञ्चनादि दध्यादिकस्य नैमित्तिकस्य कर्कशतरमाधाद्यभिव्यक्तिद्वारेण विशेषानुग्रहं कुरुते—नापूर्वमेव दधि उत्पादयति तथेह भोगभागीयादिकर्म ॥

किं च, धर्मी चानेकधर्मस्वभावोऽनेकधर्मात्मा । यथा कनकपिण्डः शान्तोदिताव्यपदेश्यरुचककुण्डलादिधर्मात्मकः । तस्य धर्मिणः अध्वभेदेन अतीतादिलक्षणभेदेन धर्माः प्रत्यवस्थिताः ॥

यथा वर्तमानं वस्तु व्यक्तिविशेषापन्नं कुण्डलादिव्यक्तिप्राप्तं द्रव्यतः कार्यरूपतः अस्ति व्यापाराधिरूढतया, नैवमतीतमनागतं च । किं तर्हि ? स्वेनैव व्यङ्ग्येन स्वरूपेण भविष्यता अनागतमस्ति । स्वेन चानुभूतव्यक्तिकेन अतिक्रान्तोपलब्धिकेन अतीतमस्ति ॥

---

1. हणं
2. कथं
3. अत्र आदर्शकोशे इत उपरि "बहिर्देशान्तरे" इत्यादि वाक्यं लिखितम्। तस्यानन्वयात्, 9. पुटेभ्यः पश्चात् लिखितं "अभावाविशेषाच्च" इत्यादि वाक्यं योजितम् ॥

[ भाष्यम् ]

स्वरूपेणातीतमिति । वर्तमानस्यैवाध्वनः स्वरूपव्यक्तिरिति न सा भवत्यतीतानागतयोरध्वनोः । एकस्य चाध्वनः समये द्वावध्वानौ धर्मिसमन्वागतौ [न] भवत एवेति नाभूत्वा भावस्त्रयाणामध्वनामिति ॥ १२ ॥

[ विवरणम् ]

वर्तमानस्यैव त्वध्वनः स्वरूपतो व्यक्तिरिति न सा व्यक्तिः भवत्यतीतानागतयोरध्वनोः । एकस्य चाध्वनः समये काले द्वावध्वानौ धर्मिसमन्वागतौ विरोधात् न भवत एवेति । तथा चोक्तोऽध्वसंकरपरिहारः ॥

यस्य पुनरतीतमनागतं च लक्षणं स्वरूपेण नास्ति, तस्य धर्माणामध्वभेदो न प्राप्नोति । कथम्? न हि तस्य घटो भविष्यन्नतीतो वा विद्यते । न हि कपालानि पिण्डो वा घटः । इत्येकस्य वर्तमानस्यैवाध्वनः समये त्रयाणामध्वनां धर्मत्वेन समागमः स्यात् । अतश्च वर्तमान एव घटोऽतीतोऽनागत इति चोच्येत पिण्डकपालयोरघटत्वात् मृदि च घटस्याभावाद्भविष्यति घटोऽतीतो घट इति च पिण्डकपाले निरुच्येयाताम् । तथा च विवक्षतो गौरप्यश्व इति स्यादश्वोऽपि गौरिति ॥

अथोच्येत, घटस्य प्रागभावप्रध्वंसाभावावतीतानागतत्वेनाभिधीयेते इति । ततोऽप्येष पापीयानभ्युपगमः । तत्र युक्तमपि गौरश्व इति वस्तुत्वादेतयोः । न त्विह वस्तुवाचिना शब्देन घटोऽतीतोऽनागत इति चाभावस्याभिधानं युज्यते स[त्य]त्ववादिनाम् ॥

नापि नियम उपपद्यते । घटेनैव व्यपदिश्यते, घटोऽतीतो घटो भविष्यतीति च । न पुनः कुलालादिभिरपदिश्यते कुलालादयोऽतीता भविष्यन्ति वेति ॥

अथ घटस्यैव तत्रानुपलभ्यमानत्वादिति चेत्—न—हस्तिशार्दूलादीनामपि तत्रानुपलम्भे व्यपदेशप्रसङ्गात् । अथोपलब्धपूर्वस्यैव व्यपदेश इति चेत्—न—घटक्रियादिष्वपि प्रसङ्गात् ॥

अथ घटस्य तेन क्रियाद्यभाव इति चेत्—न—अभावस्य सम्बन्धविशेषानुपपत्तेः । न हि समवायलक्षणः प्राप्तिलक्षणो वा सम्बन्धो भावाभावयोरवकल्पते । येनासौ घटस्य अभावो न पुनः क्रियादीनाम् । अन्यतरसम्बन्धे च अभावस्य वस्तुत्वप्रसङ्गः । अथ वस्त्वेवेति चेत्, सिद्धस्तर्हि भविष्यन्नतीतश्च पदार्थः ॥

[ सूत्रम् ]

## ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥

[ भाष्यम् ]

ते खल्वमी त्र्यध्वानो धर्मा वर्तमाना व्यक्तात्मानोऽतीतानागताः सूक्ष्मात्मानः षडविशेषरूपाः ।

[ विवरणम् ]

अथोपचारात् सिद्धकपालावस्था अवयवा भविष्यति घटो भूतो घट इति चापदिश्येरन् सम्बन्धात्, तद्यथा—अन्नं प्राणा इति, अत्रापि यथा कुलालचक्रदण्डसूत्रादिषु घटो नास्ति, तथा पिण्डकपालेष्वपीति तदभावाविशेषे च कपालेषु घटोऽतीत इति व्यपदेशो न कुलालादिष्विति नियमानुपपत्तिः ॥

न चापि विद्यमानानां साधनानां घटादिनिष्पादिनामप्यविद्यमानैरुत्पाद्यैर्घटादिभिः सम्बन्ध उपपद्यते । न चासति सम्बन्धे घटोत्पादनाभिप्रायेण कारकप्रवृत्तिः ॥

अथायुतसिद्धः समवायलक्षणः सम्बन्धो जन्यानां कारणानां च न प्रतिषिध्यत इति चेत्—न—युतसिद्धायुतसिद्धत्वस्य समानकालभाविनां वस्तूनां दर्शनात् । न भावाभावयोः क्वचिदपि युतसिद्धत्वमयुतसिद्धत्वं वा दृश्यते ॥

तस्माज्जन्यजनकानामपि सम्बन्धाभ्युपगमाद्विद्यमानत्वमेवेति, उत्पत्तेः प्रागूर्ध्वं च विद्यते कार्यम्, वस्त्वन्तरसम्बन्धात्, प्रसिद्धघटादिवत् । उपलप्स्यमानत्वादुपलब्धत्वाच्च, अपवरकस्थघटादिवत् । उद्दिश्य कर्त्रा प्राप्यत्वात्, देशान्तरवत् । तथा कर्तृव्यापारप्राप्यत्वाच्चेति ॥

किं च, न लौकिका अतीतानागतशब्दाभ्यां गगनकमलिनीवदविद्यमानमर्थं प्रतियन्ति प्रतिपादयन्ति वा । तस्मादतीतमनागतं च स्वरूपतो विद्यत एव । नाभूत्वा भावस्त्रयाणामध्वनाम् । किं तर्हि? विद्यमानानामेवाभिव्यक्तिः ॥

तस्माद्व्यक्तिरूपेण वासनानामत्यन्तविनिवृत्तिः । गुणरूपेण तु सतीनामपि कार्यासमर्थत्वान्न कैवल्याभावदोषः । नापि सिद्धान्तविरोधः ॥ १२ ॥

अतीतानागतवर्तमानधर्माः केन पुना रूपेण सन्तीति तत्प्रतिपादनार्थमाह—ते व्यक्तसूक्ष्मा गुणात्मानः । ते खल्वमी त्र्यध्वानः अतीतानागतवर्तमानाध्वत्रयोपारूढाः धर्माः वर्तमानाः वर्तमानलक्षणोपारूढाः व्यक्तात्मानः

[ भाष्यम् ]

सर्वमिदं गुणानां संनिवेशविशेषमात्रमिति परमार्थतो गुणात्मानः । तथा च शास्त्रानुशासनम्—

"गुणानां परमं रूपं न दृष्टिपथमृच्छति ।
यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम्" इति ॥ १३ ॥

यदा तु सर्वे गुणाः, कथमेकः शब्द एकमिन्द्रियमिति—

[ सूत्रम् ]

**परिणामैकत्वाद्वस्तुतत्त्वम् ॥ १४ ॥**

[ विवरणम् ]

लोकप्रत्ययविषयीभूतस्वभावाः । अतीतानागताः सूक्ष्मात्मानः लोकप्रत्ययविषयभावमप्राप्ताः षडविशेषस्वरूपाः अस्मितादिस्वभावाः । ततश्च व्यक्तात्मानः षोडशविकाराः कार्यकारणलक्षणाः ॥

सर्वमिदम् आध्यात्मिकं कार्यकारणरूपं व्यक्तात्मकं, यच्च सूक्ष्ममविशेषलक्षणमस्मितादि, यच्च लिङ्गमात्रं सूक्ष्मत्वाविशेषात्, सर्वमिदं जगत् गुणानां सत्त्वरजस्तमसां प्रख्याप्रवृत्तिस्थितिशीलानां सन्निवेशविशेषमात्रमिति परमार्थतो गुणात्मानः गुणस्वभावाः ॥

तथा च शास्त्रानुशासनम्–गुणानां परमं रूपं स्वं परमार्थरूपमनपायोपजनात्मकमेकैकस्य । तच्च न दृष्टिपथमृच्छति । न दृष्टिगोचरीभवति । यत्तु दृष्टिपथं प्राप्तं गुणापरिमर्देन विषमभावकृतसन्निवेशलक्षणं, तन्मायेव न तु मायैव, असारत्वात्तु मायावदिति । सुतुच्छकम् अत्यल्पमेकदेशमात्रपरिणामत्वात् साम्यावस्थानां गुणानाम् ॥ १३ ॥

यदा सर्वे गुणाः पृथिव्यादयः, तदा कथमेकः शब्दः शङ्खादिजनितः । एकमिन्द्रियं श्रोत्रादिकमित्येकबुद्ध्यालम्बनत्वं भवेत् । न खलु भवितव्यम् । त्रिगुणत्वेन हि कारणेन त्रय इति प्रत्ययः स्यात् । एवमिन्द्रियाणां च प्रत्येकं त्रित्वम् । तथा च नियमो न प्राप्नोति । न हि ग्राह्यत्वमेकस्यैव शब्दस्य, ग्राहकत्वं चैकस्य श्रोत्रस्य, इति नियम उपकल्पते । तथा स्पर्शादिषु, त्वगिन्द्रियादिषु च योज्यम् । नियमश्च दृश्यते । कारणं तत्र वचनीयमित्याह—परिणामैकत्वाद्वस्तुतत्त्वम् ॥

[ भाष्यम् ]

प्रख्या[1]प्रवृत्तिस्थितिशीलानां गुणानां ग्रहणात्मकानां करणभावेनैकः परिणामः श्रोत्रे[2]न्द्रियं, ग्राह्यात्मकानां [3]शब्दभावेनैकः परिणामः शब्दो विषय इति। शब्दादीनां मूर्तिसमानजातीयानामेकः परिणामः पृथिवीपरमाणुस्तन्मात्रावयवस्तेषां चैकः परिणामः पृथिवी गौर्वृक्षः पर्वत इत्येवमादिर्भूतान्तरेष्वपि स्नेहौष्ण्यप्रणामित्वावकाशदानान्युपादाय सामान्यमेकविकारारम्भः समाधेयः ॥

[ विवरणम् ]

प्रख्याप्रवृत्तिस्थितिशीलानां गुणानां ग्रहणात्मकानां सत्त्वप्राधान्यात् बोधात्मनामस्मितासंस्थानानां करणभावेनैकः परिणामः श्रोत्रेन्द्रियम्। यथा विरुद्धानां तैलवर्तितेजसां प्रदीपः। तथा त्वगादीन्द्रियेषु पुरुषार्थेतिकरणीये प्रयुक्तानामेकैकमिन्द्रियं परिणाम इति योज्यम् ॥

तथा ग्राह्यात्मकानां गुणानां तमःप्रधानानां शब्दभावेनैकः परिणामः शब्दो विषयः। तथा शब्दादीनां मूर्तिसमानजातीयानां समानाम् एकः गन्धतन्मात्रावयवः परिणामः पृथिवीपरमाणुः। तेषां परमाणूनाम् एकः परिणामः पृथिवी गौर्वृक्षः पर्वत इत्येवमादिः ॥

भूतान्तरेष्वपि योज्यम्। शब्दस्पर्शरूपरसानां स्नेहसमानजातीयानाम् [एकः परिणामः रसतन्मात्रावयवः जलपरमाणुः। तेषां परमाणूनामेकः परिणामो जलम्] ॥

शब्दस्पर्शरूपाणामुष्णत्वसमानजातीयानामेकः परिणामो रूपतन्मात्रावयवः तेजःपरमाणुः। तेषां परमाणूनामेकः परिणामो वह्निः सलिलेन्धनो दारुशकलदीपनश्च ॥

तथा शब्दस्पर्शयोः प्रणामित्वसमानजातीययोः स्पर्शतन्मात्रावयवः वायुपरमाणुरेकः परिणामः। तेषां परमाणूनामेकः परिणामः वायुः सप्त मरुद्गणाश्च ॥

तथा शब्दतन्मात्रावयवानामनावृतत्वसमानजातीयानामेकः परिणाम आकाशः। इत्येवमुक्तेन मार्गेण स्नेहौष्ण्यप्रणामित्वाद्युपादाय सामान्यमेकविकारारम्भः समाधेयः योज्यः। तस्माद्बहूनामप्येकपरिणामित्वादेकविषयत्वं, ग्राह्यग्रहणनियमश्च सर्वमुपपद्यते ॥

1. क्रियास्थि- 2. -त्रमि- 3. शब्दतन्मात्र

[ भाष्यम् ]

नास्त्यर्थो विज्ञानविसहचरः, अस्ति तु विज्ञानमर्थविसहचरं स्वप्नादौ कल्पितमित्य[1]मुया दिशा ये वस्तुस्वरूपमपह्नुवते ज्ञानपरिकल्पनामात्रं वस्तु स्वप्नविषयोपमं न परमार्थतोऽस्तीति य आहुस्ते तथेति प्रत्युपस्थित-

[ विवरणम् ]

ननु च नास्त्येवासौ एकप्रत्ययविषयः शब्दादिः । एतत्तु सर्वं विज्ञान-परिजृम्भितमेव, विज्ञानभावभावित्वात् । कथं तद्भावभावित्वमित्याह—**नास्त्यर्थो विज्ञानविसहचरः** पृथग्विज्ञानादुपलब्धः पृथग्भावी वा । **विज्ञानमर्थविसहचरं** पृथक्त्वेनोपलब्धं पृथग्भावि वा **अस्ति** । तस्मादर्थो विज्ञानव्यतिरेकेण नास्तीति प्रतिजानीमहे ॥

प्रमाणमप्यत्र भवति—विज्ञानव्यतिरेकेण नास्ति ग्राह्यं वस्तु, विज्ञान-व्यतिरेकेणानुपलभ्यमानत्वात्, विज्ञानस्वरूपवत् । बाह्यार्थशून्यानि जाग्रद्वि-ज्ञानानि, विज्ञानत्वात्, स्वप्नसमयविज्ञानवत् । विज्ञानपरिकल्पिता वा जाग्र-द्विषयाः, विषयत्वात्, स्वप्नविषयवत् । विज्ञानं वा विषयाव्यतिरेकि, विज्ञानत्वात्, स्वप्नविज्ञानवदिति ॥

यद्येवं स्यात् किं नश्छिन्नं स्यात् ? पुरुषस्य दृश्यवियोगात् कैवल्यं प्रस्तुतं न सिद्धं स्यात् ॥

यथा उपलभ्यमानस्य स्तम्भादेरभावः एवमुपलभ्यमानत्वाद्विज्ञानस्याप्य-भावः । तदभावे च लिङ्गाभावादुपलब्धुरप्यभावः प्राप्नुयादिति, कस्य कैवल्यम् ? केन दृश्येन वियोगः स्यात् ? केन सम्प्रयोगे वा बन्धः प्रतिज्ञायेत ? बन्धाभावे चाभ्युदयनिःश्रेयसार्थप्रवृत्तिफलता न प्रसज्येत ॥

किं चान्यत्—विज्ञानव्यतिरेकेणार्थो नास्तीति ब्रुवता विज्ञानमर्थ इति चैकः पदार्थोऽभ्युपगतो भवति, यथा—अग्निरनल इति । एवं च सति विज्ञानं ग्राह्यं ग्राहकम्, अर्थः ग्राह्यो ग्राहकश्चेति नाममात्रे विप्रतिपत्तिः, न पुनरेकस्य ग्राह्यग्राहकभावः प्रत्याख्यायते । तथा च सति पुरुषस्यापि ग्राह्यग्राहकभावः प्राप्तः । तथाऽपि विप्रमोक्षानवक्लृप्तिः, इत्येवमादयो भूयांसो दोषाः प्राप्नुवन्ति ॥

तस्मात् अमुया दिशा अनेन न्यायाभासबलेन **ये वस्तुस्वरूपमपह्नुवते ज्ञानपरिकल्पनामात्रं वस्तु स्वप्नविषयोपमम्, न तु परमार्थतोऽस्तीति,**

---

1. -नया

[ भाष्यम् ]

मिदं स्वमाहात्म्येन वस्तु कथमप्रमाणात्मकेन विकल्पज्ञानबलेन वस्तु [1]स्वयमुपगृह्य तदेवापलपन्तः श्रद्धेयवचनाः स्युः ॥ १४ ॥

कुतश्चैतदन्याय्यम्—

[ सूत्रम् ]

**वस्तुसाम्ये चित्तभेदात्तयो[2]र्विविक्तः पन्थाः ॥ १५ ॥**

[ विवरणम् ]

ते स्वयं तथेति अभ्युपगम्य स्वमाहात्म्येन प्रत्युपस्थितं वस्तु कथमप्रमाणात्मकेन विकल्पज्ञानबलेन वस्तु स्वयमुपगृह्य अभ्युपगम्य तदेव अभ्युपगतं अपलपन्तः इदमित्यभ्युपेत्य इदं नास्तीत्यपह्नुवानाः श्रद्धेयवचनाः स्युः । न हि स्वानुभवप्रत्याख्यायिनः श्रद्धानीयवचनविस्तारा भवितुमर्हन्ति ॥

तत्र विज्ञानव्यतिरेकेणार्थो नास्तीति प्रत्यक्षविरोधिनी प्रतिज्ञा । संवेदनीकारकं विज्ञानं प्रतीयामः । पृथुबुध्नाद्याकारमर्थं प्रतिपद्येमहि । ग्राहकं च विज्ञानमवभासकं, अवभासनीयश्चार्थः । स्वलक्षणभेदेनार्थज्ञानयोरुपलभ्यमानत्वान्नाव्यतिरेकगन्धोऽपि । ततश्च व्यतिरेकेणानुपलभ्यमानत्वादित्यसिद्धो हेतुस्तव ॥

न च ज्ञानस्यैव पृथुबुध्नाद्याकारता । ज्ञानस्यैकस्यावभास्यावभासकत्वानुपपत्तेः प्रदीपस्येव केवलस्य । भिन्नयोः प्रदीपयोः प्रकाश्यप्रकाशकत्वानुपलम्भादेकस्य च स्वात्मनि प्राप्त्यसम्भवात्, एवं ज्ञानस्य ॥

अपिचानैकान्तिकश्च बुद्धेन प्रतिपक्षवादिना च । न चासौ नास्तीति शक्यं प्रतिज्ञातुं, यं प्रति सिसाधयिषसि, स चेत्तद्विज्ञानव्यतिरिक्तः, तथा घटादिरपि सिध्यति ॥

स्वप्नज्ञानमपि उपलब्धार्थविषयत्वात् न निरालंबनम् । प्रतिज्ञायाः प्रत्यक्षविरोधो लोकविरोधश्च । सर्वं ज्ञानं सालम्बनं, ज्ञानत्वात्, प्रतिवादिदुष्टवाक्यज्ञानवत्, स्ववाक्यगुणज्ञानवच्च । ततश्च ज्ञानत्वादीनां निरालंबनत्वहेतूनामेवमादिभिरनैकान्तिकता ॥ १४ ॥

कुतश्चैतदन्याय्यं गृह्यमाणं वस्तु नास्तीति? वस्तुसाम्ये चित्तभेदात्तयोर्विविक्तः पन्थाः । बहुचित्तालम्बनीभूतं अनेकचित्तविषयीभूतं एकं वस्तु

1. स्वरूपमुत्सृज्य 2. -र्विभक्तः

[ भाष्यम् ]

बहुचित्तालम्बनीभूतमेकं वस्तु साधारणं, तत्खलु नैकचित्तपरिकल्पितं, नाप्यनेकचित्तपरिकल्पितं, किं तु [1]स्वरूपप्रतिष्ठम् । कथम्? वस्तुसाम्ये चित्तभेदात् ।

धर्मापेक्षं चित्तस्य वस्तुसाम्येऽपि सुखज्ञानं भवति । अधर्मापेक्षं तत एव दुःखज्ञानम् । अविद्यापेक्षं तत एव मूढज्ञानम् । सम्यग्दर्शनापेक्षं तत एव माध्यस्थ्यज्ञानमिति । कस्य तच्चित्तेन परिकल्पितम् । न चान्यचित्तपरिकल्पितेनार्थेनान्यस्य चित्तोपरागो युक्तः । तस्माद्वस्तुज्ञानयोर्ग्राह्यग्रहणभेदभिन्नयोर्विभक्तः पन्थाः । नानयोः संकरगन्धोऽप्यस्तीति ॥

[ विवरणम् ]

पुत्रादिकं साधारणं समानम् । तत् खलु नैकचित्ततन्त्रं भवति । एकचित्ततन्त्रत्वाभावादनेकचित्तपरिकल्पितमपि न भवति ॥

किन्तु स्वरूपप्रतिष्ठं चित्तनिरपेक्षं स्वतन्त्रतया व्यवस्थितम् । कथम्? वस्तुसाम्ये वस्तुनः पुत्रादेरेकत्वे चित्तभेदात् एकस्मिन् पुत्रादिविषये विषयिणां ज्ञानानामनेकत्वात् ॥

कथं चित्तभेद इत्याह—धर्मापेक्षं चित्तस्य वस्तुसाम्येऽपि यथा पुत्रत एव मातापित्रोः सुखज्ञानं भवति । तत एव पुत्रादेः अधर्मापेक्षं अहितानां दुःखज्ञानं उपजनिष्यते ॥

तस्मादेवाविद्यापेक्षं कामुकानां मूढज्ञानम् । तत एव पुत्रादेः सम्यग्ज्ञानापेक्षं योगिनां माध्यस्थ्यज्ञानं हेयोपादेयशून्यमुत्पद्यते । कौलेयादीनां तत एव लोभापेक्षया भक्ष्यज्ञानम् । तत एव पुत्रादेर्विरक्तस्य कुणपादिज्ञानम् ॥

यदि कस्यचिच्चित्तेन परिकल्पितमभविष्यत् (न) अन्यचित्तपरिकल्पितेनान्येषां चित्तमुपारंक्ष्यत । नैतद्युक्तं, अत्यन्तासम्बद्धानामदर्शनात् । यदि चान्यपरिकल्पितेनाप्यन्यचित्तोपरागोऽभविष्यत्, तदा सर्वेऽपि सर्वं समज्ञास्यन्त । न चेदं दृष्टम् । तस्मात् न चित्तपरिकल्पितं वस्त्विति, वस्तुज्ञानयोः ग्राह्यग्रहणभेदाद्भिन्नयोर्विविक्तः पन्थाः । नानयोः सङ्करगन्धोऽप्यस्ति ॥

1. स्वप्र-

[ भाष्यम् ]

साङ्ख्यपक्षे पुनर्वस्तु त्रिगुणं चलं च गुणवृत्तमिति धर्मादिनिमित्तापेक्षं चित्तैरभिसंबध्यते। निमित्तानुरूपस्य च प्रत्ययस्योत्पद्यमानस्य तेन तेनाऽऽत्मना हेतुर्भवति । केचिदाहुः—ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवदिति । त एतया द्वारा साधारणत्वं बाधमानाः पूर्वोत्तरक्षणेषु वस्तुरूपमेवापह्नुवते ॥ १५ ॥

[ विवरणम् ]

सुखज्ञानालम्बनीभूतं पुत्रादिवस्तु न तज्ज्ञानपरिकल्पितम्, तद्विरुद्धानेकचित्तोपरञ्जकत्वात्, वादिप्रतिवादिप्रतिज्ञागुणदोषतदाभासवत् । वादिप्रतिवादिप्रभृतीनामपि विज्ञानमात्रत्वे साध्यसाधनादिव्यवहारविलोपः स्यात् ॥

अथ स्वविज्ञानव्यतिरेकेण तेषां ज्ञानरूपाणामेव पृथक्त्वमिति चेत्—अस्तु । तदेव वस्तु ज्ञानान्तरविषयत्वादर्थान्तरं सिद्धम् । संज्ञामात्रे विप्रतिपत्तिः । विषयिविषयभेदस्तु न साध्यः । तस्मान्नानयोः संकरगन्धोऽपीति ॥

अथ वस्तुनि स्वरूपप्रतिष्ठेऽपि सुखादिभिन्नप्रत्ययालम्बनता न समीचीनरूपेति चेत्—अत्रोच्यते—वस्तु पुनस्त्रिगुणं चलं गुणवृत्तमिति धर्मादिनिमित्तं चापेक्ष्य चित्तैः सुखदुःखादिभेदरूपेण अभिसंबध्यते परिणामित्वादनेकशक्तित्वाच्च ॥

धर्मादिनिमित्तानुरूपस्य चोत्पद्यमानस्य प्रत्ययस्य तेन तेन निमित्तेन आत्मना हेतुर्भवति। सत्त्वात्मना धर्मादिनिमित्तापेक्षं पुत्रादिवस्तु सुखहेतुर्भवति । रजआत्मना त्वधर्मनिमित्तापेक्षं दुःखहेतुर्भवति । तमआत्मना त्वविद्यापेक्षं तदेव वस्तु मोहहेतुर्भवति । सत्तामात्रात्मना सम्यग्दर्शनापेक्षं तदेव माध्यस्थ्यज्ञानहेतुर्भवति ॥

केचिदाहुः एषामेव बौद्धानामन्यतमे बाह्यमर्थमभ्युपगच्छन्त आहुः—ज्ञानसहभूरेवार्थः, यथा विज्ञानं प्रतिक्षणं धर्मिशून्यं उत्पद्यते विनश्यति च, तथा सहैव ज्ञानेनार्थो विज्ञायते विनश्यति च, भोग्यत्वात्, सुखादिवत् । तद्यथा—सुखदुःखादिरूपं भोग्यं विज्ञानसहोत्पत्तिविनाशमसाधारणम्, एवं घटादिरर्थोऽपि विज्ञानसमानसमयजन्मविनाश एव, भोग्यत्वादिति ॥

तेऽपि तथैव विज्ञानवादिवत् साधारणत्वं अनेकसुखादिचित्तालम्बनत्वं बाधमानाः पूर्वोत्तरक्षणेषु स्वकीयविज्ञानोत्पत्तेः पौरस्त्येषु क्षणेषु पाश्चात्त्येषु च वस्तु नास्तीति वस्तुस्वरूपमेवापह्नुवते ॥

[ सूत्रम् ]

**न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात् ॥ १६ ॥**

[ भाष्यम् ]

एकचित्ततन्त्रं चेद्वस्तु स्यात्तदा [1]तच्चित्ते व्यग्रे निरुद्धे वाऽस्वरूप-

[ विवरणम् ]

तस्मात् न हि वस्तुनः स्वरूपं विज्ञानसहभावि, तदेवेदमिति प्रत्यभिज्ञानात् । नाचिरजन्मप्रलयं तदेवेदमिति प्रत्यभिज्ञायेत, यथा विज्ञानम् । न हि तदेवादो मे विज्ञानमिति भवति । वस्तु पुनस्तदेवेदमिति प्रत्यभिज्ञायते । अर्थज्ञानयोरेकसमयभवित्वेऽप्येक[परिशेषः]विशेषः स्यात् ॥

नापि सादृश्यात् प्रत्यभिज्ञानम् । ग्राह्यग्राहकयोर्युगपदुत्पत्तिविनाशवत्त्वात् । व्यवस्थिते हि वस्त्वन्तरदृश्ये अन्यतत्सदृशवस्तुदर्शनेन सादृश्यप्रत्ययः । एवं तत्सदृशं वा द्रक्ष्यामीत्युत्तराभिलाषः । न हि तदहर्निश्चितमरणस्यापरेद्युरर्थदर्शनाकांक्षा जायते । नापि मत्सदृश ईक्षिष्यत इत्यभिलषति । न चैवं दृष्टम् । सर्वो हि स्वार्थमीहते । भिन्नसन्ततिष्वदर्शनात् ॥

तस्मादिदानींतनोऽर्थः नेदानीन्तनज्ञानसहभूरेवेति, ग्राह्यत्वात् , अतीतार्थवत् । अतीतो वा नातीतज्ञानसहनाशजन्मा, ग्राह्यत्वात् , इदानीन्तनार्थवत् । भूतभविष्यज्ज्ञानग्राह्या अर्था अधुनाऽपि सन्ति, ग्राह्यत्वात् , अधुनातनप्रत्ययग्राह्यवत् । इदानीन्तनमपि वस्तु पूर्वोत्तरक्षणेषु तथैव ॥

अथ सुखदुःखज्ञानादिभिरनैकान्तिकमिति चेत्—न—अतीतानागतं स्वरूपतोऽस्तीति साधितत्वात् । एवं च सति सुखादीनां च स्वरूपेण सद्भावात् सुखादिवदिति साध्यसमानो दृष्टान्तः ॥

अथ वर्तमानरूपविशेषेणातीतानागतलक्षणयोरर्थस्य सुखादिवदभाव इति चेत् , सिद्धसाध्यता । न हि कुमारभाव एव वृद्धत्वं विद्यते ॥ १५ ॥

इतश्च चित्ततन्त्रता वस्तुनो नावकल्पते । एकचित्ततन्त्रं वा वस्तु भवेदनेकचित्ततन्त्रं वा? एकचित्ततन्त्रत्वे ब्रूमः—**न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात्** ? न तावदेकचित्ततन्त्रं, **एकचित्ततन्त्रं चेद्वस्तु स्यात्** यदिचेदमुच्यते, तच्चित्ते यच्चित्ततन्त्रं वस्तु तस्मिंश्चित्ते व्यग्रे परासक्ते

1. चित्ते

[ भाष्यम् ]

मेव तेनापरामृष्टमन्यस्याविषयभूतमप्रमाणकमगृहीतस्वभावकं केनचित्तदानीं किं तत्स्यात् । संबध्यमानं[1] वा पुनश्चित्तेन कुत उत्पद्येत । ये चास्यानुपस्थिता भागास्ते चास्य न स्युः । एवं नास्ति पृष्ठमित्युदरमपि [2]न स्यादेव ।

[ विवरणम् ]

निरुद्धे वा विनष्टे वा तेन प्रमाणचित्तेन अपरामृष्टं च अन्यस्य चाविषयीभूतं एकचित्ततन्त्रतयैव, तदा तत् वस्तु अप्रमाणकमगृहीतस्वभावं प्रमाणचित्तनिरोधादेव तदानीं किं तत् स्यात् । न हि किंचिदपि स्यात् । चित्तप्रमाणकं तत्, तदभावे न तेन भवितव्यम् ॥

ननु च यथा तत्प्रमाणचित्तं निरुध्यते, तथैव तदपि क्षणिकत्वान्निरुद्धमेव । किं तत्राभिधानीयं स्यात् । उच्यते—न-व्यवहारविलोपान्नियमानुपपत्तेश्च । अग्निरयं मास्प्राक्षीः, इमं गृहाण, अदः प्रदेहीति व्यवहारो विलुप्येत । एकचित्तसहक्षयत्वाद्वस्तुनः ॥

तत्सन्ततिजमत्यन्तसदृशं व्यवहारप्रतिपत्तये भवेदिति चेत्—अत्रापि तत्सन्तानादेव तत्समानेनान्येनानुभवनीयं परप्रमाणस्य च तद्विषयभूतमिति को नियच्छेत् । न हि नियमहेतुरस्ति ॥

अपि च एकचित्ततन्त्रत्वाद्व्यवहारवेलायामन्यत(न)रेदंप्रत्ययविषयालम्बनो नान्यत(न)रप्रत्ययो युज्यते । न हि खल्वपि वहुचित्ततन्त्रं वस्तु । ततश्च गृहाणेदं प्रयच्छाद इति कथं व्यवहरेमहि ॥

नाप्येवंदर्शनशालिनः शिष्याचार्योपदेशप्रदानादिभिरन्योन्यं व्यवहरेरन् । तस्मान्न चैकचित्ततन्त्रं वस्तु । प्रमाणचित्तविनाशे तद्वयप्रभावे वा अनवधृतस्वभावत्वाद्वस्तुनः ॥

संबध्यमानं वा वस्तु पुनश्चित्तेन कुत उत्पद्येत । न कुतश्चिदुत्पत्तिरुपपद्यते तत्सन्तानादिति हि प्रत्यवोचाम ॥

किंच, अस्य वस्तुनः अनुपस्थिताः एकस्य प्रत्ययस्याविषयीभूता[ ये ] भागास्तेचास्य न स्युः । एको हि वस्तुभागो विषयीभूतश्चित्ततन्त्रो नान्यः इति । नास्ति पृष्ठमिति उदरमपि अभिमुखीभूतं न स्यादेव ॥

---

1. च
2. न गृह्येत ।

[ भाष्यम् ]

तस्मात् स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्तन्ते। तयोः संबन्धादुपलब्धिः पुरुषस्य भोग इति ॥ १६ ॥

[ सूत्रम् ]

**तदुपरागापे[1]क्षत्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥**

[ भाष्यम् ]

अयस्कान्तमणिकल्पा विषया अयःसधर्मकं चित्तमभिसंबध्योपरञ्जयन्ति। येन च विषयेणोपरक्तं चित्तं स विषयो ज्ञातः ततोऽन्यः पुनरज्ञातः। वस्तुनो ज्ञाताज्ञातस्वरूपत्वात् परिणामि चित्तम् ॥ १७ ॥

[ विवरणम् ]

अथापि काकतालीयन्यायेन भूयांसि चित्तानि युगपदुत्पद्येरन् तद्विषयं च वस्तु तत्समानकालमुन्मज्जतीति, तदेतेनैव पृष्ठोदराभावनिदर्शनेन प्रत्याख्यायि। नापि काकतालीयवृत्तान्तेनानादिसमयाधीनो व्यवहारसागर उत्तीर्यते। सर्वे च विज्ञानदर्शनश्लाघिषु दोषा इहापि समाना एव ॥

तस्मात् आह—स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः यस्मिन्नवस्थिते समस्तलोकव्यवहार उपकल्पिष्यते। स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्तन्ते। तयोश्च अर्थचित्तयोः सम्बन्धादुपलब्धिः पुरुषस्य भोगः। तस्माद्भोक्ता पुरुषः चित्तं करणम् अर्थो विषयः कर्मभूत इत्येतेषां भोक्तृकरणकर्मणां विविक्तः पन्थाः ॥ १६ ॥

कथं चित्ततद्विषययोः सम्बन्धात् पुरुषस्य भोग इत्याह—यद्वा, यस्य चित्तव्यतिरेकेण वस्तु नास्ति, चित्ततन्त्रमेव वा वस्तु, तस्य ज्ञाताज्ञातविषयत्वमनुपपन्नमित्याह—तदुपरागापेक्षत्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम्। तेन विषयेण चित्तस्योपरागः तं प्रति अपेक्षा यस्य [तत्] चित्तं तदुपरागापेक्षम्, तस्य भावः तदुपरागापेक्षत्वं तस्मात् तदुपरागापेक्षत्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥

---

1. -क्षित्वा-

[ भाष्यम् ]

यस्य तु तदेव चित्तं विषयस्तस्य—

[ सूत्रम् ]

**सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥ १८ ॥**

[ विवरणम् ]

येन वस्तुना चित्तमुपरज्यते तत् ज्ञातं, येन च नोपरज्यते तत् अज्ञातम् । स चोपरागश्चित्तपरिणामापेक्षः । इन्द्रियमार्गेण चित्तं बाह्याकारेण परिणममानं हि सम्बध्यते ॥

किं पुनश्चित्तपरिणामनिमित्तमित्याह—**अयस्कान्तमणिकल्पा** अयस्कान्तसमानाः विषयाः, **अयस्सधर्मकं चित्तम्**—अयस्सधर्मकत्वं च विषयसन्निधाने विक्रियत इति । विषयाणामप्ययस्कान्तमणिकल्पत्वं सन्निधिमात्रेण चित्तविक्रियापादनसामर्थ्यात् । अतो विषया आत्माकारेण परिणतं **चित्तम् अभिसंबध्योपरञ्जयन्ति** ॥

**येन च विषयेणोपरक्तं चित्तं स विषयो ज्ञातः** । **ततोऽन्यः(ऽन्ये) पुनः अनुपरञ्जको (का) विषयः (या) अज्ञातः (ताः)** । तस्मात् **वस्तुनो ज्ञाताज्ञातस्वरूप(विषय)त्वात् परिणामि चित्तम्** । अथ पुनश्चित्ततन्त्र एव विषयश्चित्तमेव वा विषयः, तस्य वादिनः सर्वविषयज्ञत्वमविषयज्ञत्वं वा भवेत् । अज्ञातस्य चित्तस्याभावात् । न चेदं दृश्यते । किं तर्हि ? ज्ञाताज्ञातविषयत्वमेव चित्तस्य प्रतिपद्यामहे । तच्चैतत् स्थिरावस्थानानां विषयाणां प्राप्त्यभावादन्यथा च संबन्धानवकल्पनाच्चित्तपरिणामापेक्षमेवेति परिणामित्वम् ॥ १७ ॥

**यस्य तु** स्वामिनो भोक्तुः **तदेव** ज्ञाताज्ञातविषयं **चित्तं** वृत्तिरूपेण **विषयः** न हि निरुद्धवृत्तिनश्चेतसो विषयत्वमिति, **तस्य** पुरुषस्य **सदा ज्ञाताश्चित्तवृत्तयः[तत्प्रभोः पुरुषस्यापरिणामित्वात्]** । तासां प्रत्यक्षत्वात् सदा ज्ञातविषयत्वमप्रसाध्यम् ॥

यद्वा प्रत्यक्षगम्याश्चित्तवृत्तयः, उपलब्धत्वेन शब्दलिङ्गानपेक्षं स्मर्यमाणत्वात्, प्रत्यक्षोपलब्धघटवत् । निश्चितरूपत्वाच्च तथैव । संशयाविषयत्वाच्च । यदि हि सदैवाप्रत्यक्षाश्चित्तवृत्तयः, ता बाह्यविषयवत् संशयिता अपि कदाचित् काश्चन भवेयुः । न हि काश्चन कदाचन संशयमार्गसंपातिन्यो दृष्टाः ॥

[ भाष्यम् ]

यदि चित्तवत्प्रभुरपि पुरुषः परिणमेत् ततस्तद्विषयाश्चित्तवृत्तयः शब्दादिविषयवज्ज्ञाताज्ञाताः स्युः । सदाज्ञातत्वं तु मनसस्तत्प्रभोः पुरुषस्यापरिणामित्वमनुमापयति ॥ १८ ॥

[ विवरणम् ]

अपि च, भवति हि कदाचिज्ज्ञातः सन्नर्थो ज्ञात इति [प्रतीयमानः] । चित्तवृत्तिप्रत्यक्षाग्राह्यत्वे [तत्] नोपपद्यते । न च फलद्वारेणानुमातुं तत्र शक्यते । फलस्यानवधारणात् ॥

तस्मात् संशयस्य चाविषयत्वात्, पृथक् च विषयाच्चित्तवृत्तीनां स्वरूपमात्रेणैव स्मर्यमाणत्वात्, सर्वदा सर्वाः प्रत्यक्षाश्चित्तवृत्तयः । तथा प्रतिपत्तुरवभासकत्वात्, करणत्वात्, अभिव्यञ्जकत्वाच्च, प्रदीपादिवत् । न तु चक्षुरादिभिरनैकान्तिकत्वम् । तत्रापि प्रत्यक्षग्राह्यत्वात् । यथा प्रदीपाद्या-लोकविशिष्टा घटादयो गृह्यन्ते, तथा श्रोत्रादिस्वालोकविशिष्टा एव शब्दादयो गृह्यन्ते ॥

न च विविच्याग्रहणादप्रत्यक्षत्वमिति शक्यं वक्तुम् । यथा प्रदीपयोः परस्परव्यतिभिन्ना रश्मयः, न चास्यायं रश्मिरस्य चायमिति विविच्यते, न च तावता तेषामप्रत्यक्षत्वम्, [एवं] इहापि चक्षुरादीनां तुल्यजातीयबाह्यालोकादि-व्यतिषङ्गाद्विविच्याग्रहणम् । न च तावन्मात्रेण तेषामप्रत्यक्षत्वम् । यो हि प्रत्यक्षा-वसीयमानचित्तवृत्त्यपलापं करोति, नूनमसावात्मानमप्यपलपेदिति सर्वोपलब्धे-श्चित्तवृत्त्यधीनत्वात् रूपोपलब्धेरिवालोक(प्रत्यायकं तत्त्वम्) प्रत्ययाधीनत्वम् । तस्मादाह—सदा ज्ञाताश्चित्तवृत्तयः पुरुषस्येति ॥

यच्चैतत् सदा ज्ञातविषयत्वम्, तत्प्रभोः पुरुषस्यापरिणामित्वात् । नित्योपलब्धृस्वरूपप्रयुक्तं हि तदिति । यदि चित्तवत् प्रभुरपि पुरुषः परिणमेत, ततस्तद्विषयाश्चित्तवृत्तयः चित्तस्येव शब्दादिविषयाः, ज्ञाता अज्ञाता अपि स्युः ॥

यत्तु ज्ञाताज्ञातं शब्दादिविषयजातं, तत् परिणामिनश्चित्तस्य परिणामा-पेक्षं द्रष्टव्यम् । तथैवेन्द्रियाणामपि परिणामापेक्षमेव ज्ञाताज्ञातविषयत्वं दृश्यते । न च तथा चित्तवृत्तीनामन्यतमासामपि ज्ञातत्वमज्ञातत्वं च । नित्यत-स्तज्ज्ञाता एव चित्तवृत्तयः । तस्माद्यद्वृत्तिरूपेण सदा ज्ञातत्वं मनसः तत् प्रभोः पुरुषस्यापरिणामित्वमनुमापयति ॥

[ भाष्यम् ]

स्यादाशङ्का—चित्तमेव स्वाभासं विषयाभासं च भविष्यतीत्यग्निवत्—

[ सूत्रम् ]

**न तत्स्वाभासं दृश्यत्वात् ॥ १९ ॥**

[ भाष्यम् ]

यथेतराणीन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वाभासानि, तथा मनोऽपि प्रत्येतव्यम् ।

[ विवरणम् ]

अपरिणामी पुरुष इति प्रतिज्ञा । सदा ज्ञातविषयत्वादिति हेतुः । वैधर्म्येण चित्तमिन्द्रियाणि च दृष्टान्तः । उपलब्धुश्च विषयिणः प्रकृतत्वात् सदा ज्ञातविषयत्वप्रतिषेधाय मुक्तात्मवदिति दृष्टान्तो नोपपद्यते । मुक्तस्याविषयित्वात् ॥ १८ ॥

स्यादाशङ्का—चित्तमेव स्वाभासं विषयाभासं च भविष्यतीति । ग्राह्यं ग्राहकं चेति । स्वसंविदिताकारा एव हि वृत्तयः । यथा प्रदीपः प्रकाशयति घटादीनात्मानं च । किं पुरुषेण चित्तवृत्त्युपलम्भिना चित्तव्यतिरिक्तेन कल्पितेनेति ॥

अत्रोच्यते-न तत् स्वाभासं दृश्यत्वात् । यथेतराणीन्द्रियाणि श्रोत्रादीनि विषयाश्च शब्दादयः । न स्वाभासानि इन्द्रियाणि । नापि स्वाभासाः शब्दादयः । दृश्यत्वात् । तथा मनोऽपि प्रत्येतव्यम् । न स्वाभासं चित्तं दृश्यत्वादिति प्रतिपत्तव्यम् ॥

ननु च अग्निवदेव स्वाभासत्वं विषयाभासत्वं च भवतु, यथैव घटादयः प्रकाश्याः स्वरूपोपलम्भनार्थमालोकान्तरमपेक्षन्ते, न तथा प्रदीपः । यथा प्रदीपः स्वाभासो विषयाभासश्च । तथा मनोऽप्यवभासकत्वादेवं भवतु किमात्मना? न हि प्रदीपप्रतिपत्तये प्रदीपान्तरमाददते लौकिकाः ॥

यदि चोपादीयेरन् अनवस्थैव स्यात् । एवं विज्ञानस्यापि व्यतिरिक्तेन ग्राह्यत्वे तस्य चान्येन ग्रहणं तस्य चान्येनेत्येवं प्रसज्येत । किं च विज्ञानस्यावभासात्मकत्वात् ग्राहकस्याप्यवभासरूपत्वात् न परस्परोपकार्योपकारकभावः । तद्यथा प्रदीपयोर्द्वयोः । तस्मात् कल्पितोऽपि विज्ञानस्य ग्रहीता अनर्थक इति, भवतु ज्ञानं स्वाभासं पराभासं चेति ॥

[ भाष्यम् ]

न चाग्निरत्र दृष्टान्तः । न ह्यग्निरात्मस्वरूपमप्रकाशं प्रकाशयति । प्रकाशश्चायं प्रकाश्यप्रकाशकसंयोगे दृष्टः । न च स्वरूपमात्रेऽस्ति संयोगः ।

[ विवरणम् ]

अत्रोच्यते—तदेतद्दृष्टान्तापशदावष्टम्भेन सकललोकप्रसिद्धमार्गोपारोहिण आत्मनो निराकरणमशक्यम् । कस्मात्? न चाग्निरत्र दृष्टान्तः । न ह्यग्निरात्मस्वरूपमप्रकाशं प्रकाशयति, यदि चाग्निरप्रकाशः सन् आत्मनैव घटादिवत् प्राकाशयिष्यत, तत उपापत्स्यत दृष्टान्तः । न त्वेवम् । न हि कदाचिदग्निरप्रकाशः ॥

प्रकाशश्चायम् । स च प्रकाश्यप्रकाशकसंयोगे दृष्टः । न च स्वरूपमात्रेऽस्ति संयोगः । द्वयोर्हि संयोगः । नासति संयोगे स्वरूपावभासकत्वम् ॥

यदप्युच्यते—घटादिवत् प्रकाशान्तरं नाग्निरपेक्षत इति । तत् प्रकाश्यरूपाभावात् । न तु तस्य घटादिवत् प्रकाश्यं रूपमस्ति । न तावता व्यतिरिक्ताग्राह्यत्वम् । चक्षुषा तुल्यव्यतिरिक्तेन गृह्यत एव ॥

प्रकाश्यस्य घटादेरवतमसतिरस्काराय प्रकाश उपादायिष्यते । न त्वप्रकाश्यरूपत्वात् । अग्नेरालोकान्तरानाकाङ्क्षणं तु भवतैवाभिहितं—द्वयोः प्रदीपयोर्नास्ति परस्परोपकार इति । यत्र नाम भेदेऽपि द्वयोः प्रदीपयोर्नास्त्यप्रकाश्यरूपत्वादन्योन्योपकारः, किमुत असति भेदेऽत्र प्रकाशान्तरमेव नापेक्षते इति ॥

न तु व्यतिरिक्तग्राह्यत्वं व्यभिचरति, प्रदीपयोर्दृश्यत्वाद्घटादिवत् । एतेन व्यतिरिक्तग्राह्यत्वं ज्ञानस्य दृश्यत्वात् प्रदीपादिवत् सिद्धं भवति । प्रदीपादिवच्च ज्ञानस्य प्रकाशस्वरूपत्वात् करणान्तरानपेक्षापि सिद्धा । तथा च अनवस्थादोषगन्धो न विद्यते ॥

यदप्युच्यते—ज्ञानस्यावभासात्मकत्वात् तद्ग्राहकस्याप्यवभासरूपत्वात् न परस्परोपकार्योपकारकभावः प्रदीपयोरिव द्वयोरिति । नासौ दोषः । चक्षुःप्रदीपवदात्मज्ञानयोर्जात्यन्तरत्वात् ॥

ननु चाहंप्रत्ययेन चित्तं प्रत्ययि गृह्यत इति विषयविषयित्वमेकस्यैव । नैष दोषः । त्रिगुणत्वाच्चित्तस्य । यत्तत्र तमःप्रधानं चित्तं तदन्यया

[ भाष्यम् ]

किं च स्वाभासं चित्तमित्यग्राह्यमेव [1]चित्तं स्यादिति शब्दार्थः । तद्यथा स्वात्मप्रतिष्ठमाकाशम् [2]अप्रतिष्ठम् इत्यर्थः । स्वबुद्धिप्रचारप्रतिसंवेदनात् सत्त्वानां प्रवृत्तिर्दृश्यते—क्रुद्धोऽहं भीतोऽहममुत्र मे रागोऽमुत्र मे क्रोध इति । एतत्स्वबुद्धेरग्रहणे न युक्तमिति ॥ १९ ॥

[ सूत्रम् ]

## एकसमये चोभयानवधारणम् ॥ २० ॥

[ विवरणम् ]

सस्वात्मिकया वृत्त्या समालम्भ्यते, हस्तेनेव शरीरं कण्डूयमानम् । तत्राप्युपलब्धा विषयी भिन्न एव पुरुषः । एतेन जात्यन्तरग्राह्यग्राहकत्वेन निरवयवत्वेन पुरुषश्च स्वयमेव ग्राह्यः ग्राहकश्चेत्येतत् प्रत्यवोचाम ॥

किं च—स्वाभासं चित्तमिति उच्यमाने च अग्राह्यमेव चित्तं स्यादिति । एवं शब्दार्थः । स्वाभासमिति ह्युक्ते अन्येन नावभास्यते न गृह्यत इत्यर्थः । न तु स्वयमात्मानं गृह्णातीत्युच्यते । एवमादिशब्दप्रयोगेषु शब्दस्य विपरीतार्थत्वम् ॥

तद्यथा—स्वात्मप्रतिष्ठमाकाशम्, अप्रतिष्ठमिति शब्दार्थः । तथा स्वस्थो देवदत्त इति, नीरोग इत्यर्थः, न तु स्वात्मनि स्थित इति । तत्र दृश्यत्वादिति हेतोरसिद्धिमाचक्षाणस्य प्रत्यक्षविरोधो लोकविरोधो व्यवहारविलोपश्चेत्याह—स्वबुद्धिप्रचारप्रतिसंवेदनात् सत्त्वानां प्राणिनां प्रवृत्तिर्दृश्यते ॥

क्रुद्धोऽहं भीतोऽहममुत्र मे रागोऽमुत्र मे क्रोध इति स्वां स्वां बुद्धिमेवं चरन्तीं प्रतिसंवेद्य दृष्ट्वा क्रोधलोभादिपरिहाराय विवेकवतां प्रवृत्तिरुपलभ्यते । तथा प्रसन्नं मे चित्तं कलुषितं मूढमिति च । तत् एतत् स्वबुद्धेरग्रहणे, न युक्तमिति । न हि निशाम्य परिस्पन्दिनीं बुद्धिरदयेति युक्तं वक्तुम् ॥ १९ ॥

अभ्युपगम्य वादोऽयम्—यद्यपि स्वाभासं विषयाभासं च मनो भवतु । तत्र दूषणम् एकसमये चोभयानवधारणम् । विषयपरिच्छेदकत्वे, नानाक्षणत्वादात्मपरिच्छेदो न युज्यते । अथ पुनरात्मानमवधारयति, न तदा विषयाभिमुखं, स्वात्मपरिच्छेदकत्वे नानाक्षणत्वात् ॥

1. कस्यचिदि-
2. न परप्रति-

[ भाष्यम् ]

न चैकस्मिन् क्षणे [1]स्वपरोभयावधारणं युक्तं, [2]क्षणवादिनो यद्भवनं सैव क्रिया, तदेव च कारकमित्यभ्युपगमः ॥ २० ॥

स्यान्मतिः—स्वरसनिरुद्धं चित्तं चित्तान्तरेण समनन्तरेण गृह्यत इति—

[ सूत्रम् ]

चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसंकरश्च ॥ २१ ॥

[ भाष्यम् ]

अथ चित्तं चेच्चित्तान्तरेण गृह्येत, बुद्धिबुद्धिः केन गृह्यते, साऽप्यन्यया साऽप्यन्ययेत्यतिप्रसङ्गः । स्मृतिसंकरश्च, यावन्तो बुद्धिबुद्धी-

[ विवरणम् ]

अथोभयपरिच्छित्तिरेकैवेति चेन्न, निरवयवत्वात् परिच्छित्तेः । न हि निरवयवायाश्चित्तवृत्तेः प्रदीपवदनेकावभासकत्वं युक्तम् । अवयवभेदात्तु प्रदीपस्यानेकप्रकाशकत्वं संभवति । न तु ज्ञानस्य सावयवत्वं परैरभ्युपेयते ॥

किं च, ज्ञानमेकमेकस्मिन् क्षणे उभयमवधारयतीति चाभ्युपगमे क्रियाकारकभेदप्रसङ्गः । यदुभयावधारणं सा क्रिया । यदवधारयति तत् कारकम् । न चैकस्मिन् क्षणे स्वपरोभयावधारणं क्षणवादिनो युक्तम् । कस्मात्? उक्तं हि क्षणिकत्वसिद्धये यद्भवनम् उत्पत्तिः सैव क्रिया तदेव च कारकमित्यभ्युपगमः । क्रियाकारकभेदे च क्षणभङ्गभङ्गः स्यात् । कारकेण हि क्रियाक्षणमवस्थानीयम् ॥ २० ॥

स्यान्मतिः कस्यापि—स्वरससन्निरुद्धं चित्तं चित्तान्तरेण गृह्यते इति भावेन विनष्टं भङ्गुरतरं चित्तं चित्तान्तरेण समनन्तरेण संजायमानेन गृह्यत इति, अथापि नित्यावस्थितपुरुषपरिकल्पना निरर्थिकैव । अत्रोच्यते—चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥

यदि चित्तं चित्तान्तरेण स्वरसनिरुद्धं पौरस्त्यं पाश्चात्येन जायमानेन समनन्तरेण गृह्येत, बुद्धिबुद्धिः घटविषया बुद्धिः बुद्धिरुच्यते, तद्विषया तु बुद्धिबुद्धिः, सा केन गृह्यते व्यवस्थितग्राहकाभावात् । साऽप्यन्यया ग्रहीतव्या साऽप्यन्ययेत्यतिप्रसङ्गः ॥

---

1. स्वपररूपा
2. क्षणिक

[ भाष्यम् ]

नामनुभवास्तावत्यः स्मृतयः प्राप्नुवन्ति । तत्संकराच्चैकस्मृत्यनवधारणं च स्यादित्येवं बुद्धिप्रतिसंवेदिनं पुरुषमपलपद्भिर्वैनाशिकैः सर्वमेवाऽऽकुलीकृतम् । ते तु भोक्तृस्वरूपं यत्र क्वचन कल्पयन्तो न न्यायेन संगच्छन्ते । केचित्तु सत्त्वमात्रमपि परिकल्प्य, अस्ति स सत्त्वो य एतान् पञ्च स्कन्धान् निक्षिप्यान्यांश्च प्रतिसंदधातीत्युक्त्वा, तत एव पुनस्त्रस्यन्ति ।

[ विवरणम् ]

न चागृहीतासु बुद्धिबुद्धिषु संव्यवहारो घटते स्मृतिसंस्कारानुपपत्तेः । तत्रैकजातीयानामेव घटबुद्धिबुद्धीनां दाशतयी माला स्यादनवस्थिता, न घटबुद्धिः । परिसमाप्तौ च घटबुद्धिबुद्धीनां असत्यां कथं घटादिबुद्धिरुपतिष्ठेत ॥

अयं चापरो दोषः स्मृतिसंकरश्च इति । बुद्धिबुद्धीनां तत्संस्काराणां चैकरूपत्वात् स्मृतिसंकरः प्राप्नोति । यावन्तो बुद्धिबुद्धीनामनुभवास्तावत्यः स्मृतयः संकीर्णाः प्राप्नुवन्ति । तत्सङ्करात् स्मृतिसङ्करात् स्मृत्यनवधारणं इयमस्या बुद्धेः स्मृतिरित्यनवधारयन्तः कथं व्यवहरेमहि । तथा च सरूपत्वात् स्मृतिसंकरः प्राप्नोति ॥

यावन्तो बुद्धिबुद्धीनां विदानाः स्वबुद्धिस्मृतिपूर्वव्यवहारासम्भवात् सर्वे संमोहेन सङ्गच्छेमहि । यदि चानवस्थापरिजिहासया क्वचित् बुद्ध्यन्तरे समवतिष्ठेमहि, तमेव बुद्धिप्रतिसंवेदिनं बुद्धिप्रतिसंवेदनलिङ्गेन स्पष्टतरमपि पुरुषमपलपद्भिर्वैनाशिकैराकुलीकृतं जगदिति ॥

ननु चालयविज्ञानकल्पनयाऽनवस्थादोषं परिहरेमहि । तथा चात्मकल्पनामपलपेमहीत्येवं ते भोक्तृस्वरूपं यत्र क्वचन कल्पयन्तो न न्यायेन सङ्गच्छन्ते । तस्याप्यालयविज्ञानस्य ग्राह्यत्वादनवस्थितत्वाच्चाभिहितसकलदोषानुषङ्गः ॥

केचित् वैनाशिकविशेषाः सत्त्वमात्रमपि शब्दान्तरेण सत्त्वमात्रं भोक्तृस्वरूपं परिकल्प्य अस्ति स सत्त्वो य एतान् पञ्च स्कन्धान् रूपवेदनासंज्ञासंस्कारविज्ञानलक्षणान् निक्षिप्य परित्यज्य अन्यांश्च स्कन्धान् प्रतिसन्दधाति गृह्णाति इत्युक्त्वा तत एव भूतानागतस्कन्धप्रतिसन्धात्रेकसत्त्वपरिकल्पनातः त्रस्यन्ति ॥

[ भाष्यम् ]

तथा स्कन्धानां महानिर्वेदाय विरागायानुत्पादाय प्रशान्तये गुरोरन्तिके ब्रह्मचर्यं चरिष्यामीत्युक्त्वा सत्त्वस्य पुनः सत्त्वमेवापह्नुवते । साङ्ख्ययोगादयस्तु प्रवादाः स्वशब्देन पुरुषमेव स्वामिनं चित्तस्य भोक्तारमुपयन्तीति॥ २१ ॥

कथम्—

[ सूत्रम् ]

**चितेरप्रतिसंक्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥**

[ भाष्यम् ]

अपरिणामिनी हि भोक्तृशक्तिरप्रतिसंक्रमा च परिणामिन्यर्थे प्रतिसंक्रान्तेव तद्वृत्तिमनुपतन्ती[1] ।

[ विवरणम् ]

तथा तेषामन्या विरुद्धकल्पना—स्कन्धानां महानिर्वेदाय विरागायानुत्पादाय प्रशान्तये गुरोरन्तिके ब्रह्मचर्यं चरामीत्युक्त्वा पुनस्तमेवाभ्युगतं सत्त्वस्य सत्त्व(साध्यसाधनसम्बन्ध)मपह्नुवते । विज्ञानमात्रं क्षणिकं शून्यं चेति आत्मानमपलपन्ति । (नमभिसन्दधीमहि । तदेवं) साङ्ख्ययोगादयस्तु प्रवादाः । स्वशब्देन पुरुषमेव स्वामिनं चित्तस्य भोक्तारमभ्युपयन्ति इति ॥ २१ ॥

कथं भोक्तारं स्वशब्देनैवाभ्युपयन्ति ? यतः चितेरप्रतिसंक्रमायास्तदाकारापत्तौ सत्यां स्वबुद्धिसंवेदनं भवति । चितिः चैतन्यं पुरुष इत्यर्थः । सा चापरिणामित्वात् अप्रतिसंक्रमा । तस्याः अप्रतिसंक्रमायाः अपि सत्याश्चितेः तदाकारापत्तिः । तदिति प्रकृतं चित्तं प्रत्याम्नायते तस्याकारापत्तिस्तदाकारापत्तिः । तस्याश्चितेस्तदाकारापत्तौ सत्यां स्वबुद्धिसंवेदनं भवति । स्वस्य बौद्धस्य प्रत्ययस्योपलब्धिर्भवति । तदर्थमेव हि सा बुद्धिः शब्दादिप्रत्ययरूपेण परिणमते ॥

तदेतत् प्रतिपादयति(प्रतीत्य)—अपरिणामिनी हि भोक्तृशक्तिः दृक्शक्तिः यथाव्याख्याता । अप्रतिसंक्रमा च सती परिणामिन्यर्थे बौद्धप्रत्यये प्रतिसंक्रान्तेव प्रत्ययिविषयत्वात् तद्वृत्तिमनुपतन्तीवानुपतन्ती द्रष्टृत्वादुपलभमाना । बौद्धः प्रत्ययो जायमान एव तस्याः कर्मतामापद्यते । तं बौद्धं प्रत्ययं वृत्तिमनुपतन्त्युपलभमाना भोक्तृशक्तिः ॥

---

1. -तति ।

[ भाष्यम् ]

तस्याश्च प्राप्तचैतन्योपग्रहस्वरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि [1]ज्ञवृत्ति[2]रित्याख्यायते । तथा चोक्तम्—

"न पातालं नो[3] विवरं गिरीणां
नैवान्ध[4]कारः कुक्षयो नोदधीनाम् ।
गुहा, यस्यां निहितं ब्रह्म शाश्वतं
बुद्धिवृत्तिमविशिष्टां कवयो वेदयन्ते ॥" इति ॥ २२ ॥

अतश्चैतदभ्युपगम्यते—

[ सूत्रम् ]

## द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम् ॥ २३ ॥

[ विवरणम् ]

तस्याश्च प्राप्तचैतन्योपग्रह[स्व]रूपायाः प्राप्तं चैतन्योपग्रहरूपं पुरुषोपग्रहरूपं यया बुद्धिवृत्त्या समासादितपावकोपग्रहरूपतप्तलोहपिण्डवत् दर्शिकर्मत्वादेव **अनुकारमात्रतया**, बुद्धिवृत्तिसारूप्यमात्रतया । **बुद्धिवृत्त्यविशिष्टा ज्ञवृत्तिरिति** । ज्ञ एवोपलब्धिरेव वृत्तिरिति आख्यायते । '[5]वृत्तिसारूप्यमितरत्र' इति हि व्याख्यातम् । तथा '[6]प्रत्ययाविशेषो भोगः' इति प्रख्यापितम् ॥

भोक्तृभोग्यभेदे च सति चित्ताकारापत्तिरूपपद्यते । न चासति व्यतिरिक्ते भोक्तरि चित्तस्यैव दृष्टृदृश्योभयाभासत्वमकस्मादुपकल्पते । तस्मात् सुष्ठूच्यते—'साङ्ख्ययोगादय एव पुरुषं स्वशब्देनाभ्युपयन्ति' इति । अन्ये तु शब्दान्तरेणोपयन्तोऽपि तत एव बिभ्यति ॥

**तथा चोक्तम्**—बुद्धिवृत्त्यनुकारमात्रतया बुद्धावेव ज्ञवृत्तिरुपलभ्यते, नान्यत्रेति । **न पातालं नो विवरं गिरीणां नैवान्धकारः कुक्षयो नोदधीनाम्**, एवमादीनि न **गुहा** । **यस्यां** गुहायां **निहितं ब्रह्म शाश्वतं** सा **गुहा**, न पाताळादीनि । कस्यां पुनर्गुहायां निहितमित्याह—बुद्धावेव गुहायां **वृत्तिम्** आत्माख्यां ब्रह्माख्याम् **अविशिष्टाम्** अपृथग्भूतां बुद्धिवृत्त्यविशिष्टां **वेदयन्ते** विवेकिनः ॥ २२ ॥

---

1. ज्ञान
2. राख्या
3. न च
4. कारं
5. यो. सू. 1-4.
6. यो. सू. 3-35.

[ भाष्यम् ]

[1]मनोऽभिमन्तव्येनार्थेनोपरक्तं, स्वयं[2] च विषयत्वाद्विषयिणा पुरुषेणाऽऽत्मीयया वृत्त्याऽभिसंबद्धं, तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्म[3]कमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्वार्थमित्युच्यते ॥

तदनेन चित्तसारूप्येण भ्रान्ताः केचित् तदेव चेतनमित्याहुः ।

[ विवरणम् ]

कस्मात् पुनः कारणात् पुरुषस्य चित्ताकारापत्तिः । तस्यां वा सत्यां स्वबुद्धिसंवेदनम् । कुतो वैनाशिकानां चित्तमेव ग्राह्यं ग्राहकं चेति भ्रान्तिरित्याह—**द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्** । द्रष्टा पुरुषो दृश्यं शब्दादि ताभ्याम् **उपरक्तं चित्तं सर्वार्थं** पुरुषस्य भोगापवर्गार्थं भवति । **मनोऽभिमन्तव्येनार्थेन** अयस्कान्तमणिदेशीयेन विषयेण **उपरक्तं स्वयं च विषयत्वात्** पुरुषस्य **विषयिणा पुरुषेण** सन्निहितेन **आत्मीयया वृत्त्या** मानसेन प्रत्ययेन विषयतया **अभिसम्बद्धम्** ॥

**तदेतच्चित्तम्** आत्मवृत्तिद्वारेण पुरुषेण सम्बन्धाद्द्रष्टुः स्वरूपोपरक्तं शब्दादिना च मन्तव्येनोपरक्तमिति **द्रष्टृदृश्योपरक्तं चित्तमेव** न पुरुषः । **द्रष्टृदृश्योपरक्तम्** इत्यस्य व्याख्यानं करोति—**विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नम्** ॥

कथं पुनः स्वयमचेतनं सच्चेतनस्वरूपापन्नमिति ? नैष दोषः—पुरुषेण नित्यसन्निधानाच्चेतनमिव । तदेवाविवेकिभिश्चेतनमित्युच्यते । न तथा विषयाः । नित्यमचेतनात्मका हि ते । स्वतस्तु चित्तमचेतनमेवेति **चेतनाचेतनस्वरूपापन्नं** इत्युच्यते ॥

**विषयात्मकमिव** शब्दादिस्वरूपमात्रमिव चेत्यर्थः । **अचेतनं चेतनमिव** पुरुषस्वरूपापन्नमिव चेत्यर्थः । **स्फटिकमणिकल्पं** यथा स्फटिकमणिरलक्तकादि-सन्निधौ तदाकारतां बिभर्ति, तथैव **तत् सर्वार्थं** चित्तम् **उच्यते** ॥

तस्मात् **अनेन चित्तसारूप्येण भ्रान्ताः केचित्** । एतत्तु चित्तसारूप्यं वैशेषिकाणां प्रमोहकारणम् । वैशेषिकादयस्तु चित्तसारूप्यमाहेन्द्रजालव्यामोहित-चेतसः **तदेव** चित्तं **चेतनमित्याहुः** । कथम् ? यस्मान्मनःपुरुषसंयोगजं चैतन्यं गुणः उच्छेदनीय इति मन्यन्ते । वैनाशिकेभ्यस्त्वयं विशेषः—स्थिरमेकं धर्मिणमिच्छन्तीति ॥

1. मनो हि म- 2. तत्स्वयं 3. कमप्यविषयात्मकमि

[ भाष्यम् ]

अपरे चित्तमात्रमेवेदं सर्वं नास्ति खल्वयं गवादिर्घटादिश्च [1]स्वाकारेण लोक इति । अनुकम्पनीयास्ते । कस्मात्? अस्ति हि तेषां भ्रान्तिबीजं सर्वरूपाकारनिर्भासं चित्तमिति । समाधिप्रज्ञायां प्रज्ञेयोऽर्थः प्रतिबिम्बीभूतः [2]तस्यामालम्बनीभूतत्वादन्यः । स चेदर्थश्चित्तमात्रं स्यात्, कथं प्रज्ञयैव प्रज्ञारूपमवधार्येत । तस्मात् प्रतिबिम्बीभूतोऽर्थः प्रज्ञायां येनावधार्यते, स पुरुषः । इत्येवं ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदात् त्रयमप्येतज्जातितः प्रविभजन्ते ते सम्यग्दर्शिनस्तैरधिगतः पुरुषः ॥ २३ ॥

[ विवरणम् ]

अपरे बौद्धाः चित्तमात्रमेवेदं सर्वम्, नास्ति गवादिर्घटादिश्च स्वाकारेण विशिष्टः सर्वेषां प्रत्ययस्य साधारणो लोकः इति स्वानुभवमप्यपलपन्ति । ते एवं भ्रान्ताः सुकुमारतरबुद्धयो वैनाशिका अनुकम्पनीयाः ॥

कस्मात्? अस्ति हि तेषां भ्रान्तिबीजं सर्वरूपाकारनिर्भासं चित्तमिति । सनिमित्ता हि तेषां भ्रान्तिः न लोकायतिकानां शून्यवादिनामिव निर्बीजा । केवलजगद्वञ्चनार्थप्रवृत्तत्वात्तु नैतेष्वनुकम्पा कर्तव्या । तस्माद्युक्तमुक्तं तेषां वराकाणां सबीजभ्रान्तचेतसामनुकम्पनीयमिति ॥

के पुनरभ्रान्ता इत्याह—समाधिप्रज्ञायामिति । समाधिप्रज्ञाग्रहणमभ्रान्तचित्तग्रहणार्थम् । विक्षिप्तचेतसो हि भ्रान्ताः । समाधिप्रज्ञायाम् अभ्रान्तायां विशुद्धायां विवेकवत्यां प्रसन्नगम्भीरतरायां प्रज्ञेयोऽर्थः प्रतिबिम्बीभूतः निर्मलदर्पणमण्डल इव तस्यां समाधिप्रज्ञायां करणभूतायाम् आलम्बनीभूतत्वादन्यः प्रज्ञातः सकाशाज्जातिस्वरूपक्रियादिभिरन्यः ॥

स चेत् अन्यः चित्तमात्रं स्यात् कथं प्रज्ञयैव प्रज्ञारूपमवधार्येत । स्वात्मनि क्रियाविरोधात् न हि कथञ्चिदवधार्येत । तस्मात् प्रज्ञायाः अन्योऽसावर्थः सः, यस्यां प्रज्ञायां प्रतिबिम्बीभूतोऽर्थो येनावधार्यते सः तस्याः प्रज्ञाया आलम्बनीभूताच्चार्थादन्यः कर्तृकारकभूतः । स पुरुषः ॥

इत्येवं ये ग्रहीतृग्रहणग्राह्यस्वरूपभेदात् कर्तृकरणकर्मभेदोपपत्तेः, न हि निरवयवमेकमेवैकस्मिन् क्षणे वस्तु कर्तृ च कर्म च भवति, ततो ये त्रयमप्येतत् जातितः प्रविभजन्ते, ते सम्यग्दर्शिनः तैरधिगतः पुरुषः, प्राप्त इत्यर्थः । सामर्थ्यात्तु ज्ञात इति गम्यते ॥ २३ ॥

---

1. सकारणो 2. तस्याऽऽल

[ भाष्यम् ]

कुतश्च—

[ सूत्रम् ]

## तदसङ्ख्येयवास[1]नाचित्रमपि परार्थं संहत्यकारित्वात् ॥२४॥

[ भाष्यम् ]

तदेतच्चित्तमसङ्ख्येयाभिर्वासनाभिरेव चित्रीकृतमपि परार्थं परस्य भोगापवर्गार्थं, न स्वार्थं संहत्यकारित्वाद्गृहवत् । संहत्यकारिणा चित्तेन न स्वार्थेन भवितव्यम् । न हि सुखचित्तं सुखार्थं, न ज्ञानचित्तं [2]ज्ञानार्थं, उभयमप्येतत्परार्थम् । यश्च भोगेनापवर्गेण चार्थेनार्थवान् पुरुषः, स एव परो न परसामान्यमात्रम् ।

[ विवरणम् ]

कुतश्च अस्ति पुरुषश्चित्तव्यतिरिक्तः ? पूर्वं चित्तस्य दृश्यत्वेन व्यतिरिक्तपुरुषसिद्धिरापादिता । तस्यैव तु चित्तस्य संहत्यकारित्वेनाधुना स्वामिसिद्ध्यर्थमाह—तदसङ्ख्येयवासनाचित्रमपि परार्थं संहत्यकारित्वात् ॥

यद्यपि तदेव चित्तमसंख्येयाभिर्वासनाभिः अनादिसमयाभिः चित्रीकृतं भ्रान्तिकारणमुक्तं, तथापि परार्थं परस्य भोगार्थमेवेति प्रतिज्ञायते । संहत्यकारित्वात् कार्यकरणविषयादिव्यापारापेक्षमर्थसाधकत्वात् संहत्यकारित्वम् , अतः संहत्यकारित्वात् गृहादिवत् इति पारार्थ्यं चित्तस्य । न हि किंचन लोके संहत्यकारि दृष्टं स्वार्थम् ॥

तस्मात् संहत्यकारिणा चित्तेन न स्वार्थेन भवितव्यम् । न हि सुखचित्तं सुखार्थं सुखचित्तार्थं वा । नापि ज्ञानचित्तं ज्ञानार्थं वा ज्ञानचित्तार्थं वा । किं तर्हि ? सुखचित्तं ज्ञानचित्तमपि एतदुभयं परार्थम् ॥

यश्च भोगेन सुखचित्तेन ज्ञानचित्तेन च अपवर्गेणार्थेनार्थवान् पुरुषः स एव परः । न परसामान्यमात्रं शरीरमिन्द्रियाणि विषया वा । नहि वैनाशिकः सुखचित्तं शरीरेन्द्रियविषयार्थमिच्छति । तथा चेच्छन्नभ्युपगतं विरुन्धीत । विज्ञानस्यैव हि सुखापवर्गाभ्यामर्थित्वमभिमन्यते । तस्मात् य एव शरीरेन्द्रियविषयव्यतिरिक्तः पुरुषो भोगापवर्गाभ्यामर्थवानन्यो विज्ञानादभ्युपगमनीयः ॥

---

1. नाभिश्चि 2. ज्ञानं

यदि यत्किंचित् परसामान्यमात्रम् उदाहरेद्वैनाशिकः, यदि तु वैनाशिकः संहत्यकारिणां गृहादीनां देवदत्तादिसंहतपरार्थत्वमिति व्यामोहादभिमन्यमानः कंचन विशिष्टं न परमिच्छेत्, एवं चेन्मन्वीत, स इदं वक्तव्यः—यः परः शरीरेन्द्रियविषयप्रत्ययानां सामान्यम्, उत सर्व एवेति, किमेषामन्यतमः, किं वा कश्चिदेवैतेभ्यो भिन्नजातीय इति ॥

न तावत् सामान्यम् । न हि भोगापवर्गार्थेनार्थि सामान्यवस्तु वैनाशिकोऽभ्युपैति, स्वसमयविरोधात् । नापि शरीरादीनि समस्तानि भोगापवर्गाभ्यामर्थीनीति वाञ्छति । विज्ञानसन्ततेरेव भोगापवर्गार्थित्वाभिमानात् ॥

न चापि ज्ञानसन्ततिरित्येकं वस्तु(सन्ततेः क्षणिकत्वम् ।) न चापि सन्तानस्यावस्तुतया शशविषाणकल्पस्य भोगापवर्गाभ्यामर्थित्वम् । नापि शरीरेन्द्रियादीनामन्यतमत्वमिच्छति । विज्ञानव्यतिरिक्तानाम् आत्मीयसमये भोगापवर्गार्थित्वानभ्युपगमात् ॥

नापि शरीरेन्द्रियाणां सङ्घातो नाम वस्तुतो भवतो विद्यते, येन चित्तं संहतपरार्थं प्रार्थयेथाः । अवस्तुनो हि कथमर्थित्वम् । नापि शरिरेन्द्रियादिभ्योऽन्यं संहृतभिन्नजातीयं प्रतिजानीषे । यदि भिन्नजातीयं भोगापवर्गाभ्यामर्थवन्तमदृष्टं परिकल्पयेथाः, स एवास्माभिरुक्तः पर इति । तस्य च संहतत्वे परत्वं दृष्टानात्मवन्नोपकल्पते । परिशेषात्तु असंहतो भोगापवर्गाभ्यामर्थी पर इति ॥

किं चान्यत्—संहतपरार्थं चित्तमिति साधयतोऽर्थिनः संहतस्यान्यस्यानुपपत्तेः स्वार्थमेव चित्तमित्युक्तं भवति । तथा च सति भवतो दृष्टान्ताभावोऽभ्युपगमविरोधश्च । तथा मन्वानस्यान्यद्वाचि हृदये चान्यदनिशम्यकारित्वं चापतति । येन चक्षुरादिपरार्थत्वसाधनेन विरुद्धतादोषः प्रत्याख्यायि । तेषां विज्ञानपरार्थत्वमिति चेद्विज्ञानस्यापि संहतत्वात् परार्थत्वं प्रसाधितम् । अथ विज्ञानस्यापि क्षणिकत्वादसंहतत्वमिति चेत् न—तस्य व्यतिरिक्तदृश्यत्वात् , धर्ममात्रानभ्युपगमाच्च क्षणिकत्वानभ्युपगमाच्चेत्येतदपि प्रत्यवोचाम ॥

[ भाष्यम् ]

यत्तु किंचित्परसामान्यमात्रं स्वरूपेणोदाहरेद्वैनाशिकः[1]स सर्वः संहत्यकारित्वात् परार्थ [2]एव स्यात्, यस्त्वसौ परो विशेषः स न संहत्यकारी पुरुष इति ॥ २४ ॥

[ सूत्रम् ]

**विशेषदर्शिन आत्मभावभावनानिवृत्तिः ॥ २५ ॥**

[ भाष्यम् ]

यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्ताऽनुमीयते, तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातो दृश्यते, तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्माभिनिर्वर्तितमित्यनुमीयते । तस्याऽऽत्मभावभावना

[ विवरणम् ]

तस्मादुच्यते--यत्किंचित् परसामान्यमात्रं स्वरूपेणोदाहरेद्वैनाशिकः स सर्वः संहत्यकारित्वात् परार्थ एव स्यात् । न देवदत्तादिसंहतार्थत्वम् । उभाभ्यामावाभ्यामनभ्युपगमात् । त्वमपि विज्ञानव्यतिरेकेण नान्यमभ्युपैषि । वयमपि पुरुषव्यतिरेकेण नान्यार्थत्वमभिवाञ्छामः । विज्ञानमात्रत्वं च नोपपद्यत इत्युक्तम् । अतो यस्त्वसौ परो विशेषः स न संहत्यकारी पुरुषः स्वार्थ इति सिद्धः । तस्मादस्ति भोक्ता तस्य स्वार्थस्य स्वेन दृश्येन परार्थेन यन्निमित्तः संयोगः । तद्वियोगात् कैवल्यमुपकल्पते ॥ २४ ॥

गुणपुरुषयोगस्याविद्या निमित्तमुक्तम् । सा च विशेषदर्शिन आत्मानं विजिज्ञासमानस्य विनिवर्तते । तन्निवृत्तौ च लिङ्गमाह—**विशेषदर्शिन आत्मभावभावनानिवृत्तिः** । व्यक्ताव्यक्तसामान्याद्विशिष्टः (पुरुषः) असाधारणो **विशेषः** । तं विशेषं व्यक्ताव्यक्तसामान्यात् प्रविविच्य द्रष्टुं शीलं यस्य स **विशेषदर्शी** । तस्य आत्मभावभावना निवर्तते । सा च सम्यग्दर्शनाभिमुखा कैवल्यप्राप्तिकर्मनिमित्ता ॥

कथं पुनरात्मभावभावना अस्यास्तीति विज्ञायत इत्याह--यथा प्रावृषि तृणस्याङ्कुरोद्भेदेन लिङ्गेन तद्बीजसद्भावोऽनुमीय(गम्य)ते, तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातो दृश्यते, तत्राप्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्माभिनिर्वर्तितमिति रोमहर्षाश्रुपातादिलिङ्गेन अनुमीयते ॥

---

1. तत्सर्वं　　2. -मेव

[ भाष्यम् ]

स्वाभाविकी प्रवर्तते । [1]तस्याभावादिदमुक्तं [2]स्वभावदोषादेषां पूर्वपक्षे रुचिर्भवत्यरुचिश्च निर्णये भवति । तत्राऽऽत्मभावभावना 'कोऽहमासं कथमहमासं किंस्विदिदं कथंस्विदिदं के भविष्यामः कथं वा भविष्यामः' इति । सा तु विशेषदर्शिनो निवर्तते । कुतः? चित्तस्यैवैष विचित्रः परिणामः, पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति । [3]तस्याऽऽत्मभावभावना कुशलस्य निवर्तत इति ॥ २५ ॥

[ सूत्रम् ]

तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥ २६ ॥

[ भाष्यम् ]

तदानीं यदस्य चित्तं [4]अज्ञानप्राग्भारं [5]विषयनिम्नमासीत्तदस्यान्यथा भवति कैवल्यप्राग्भारं विवेक [6]निम्नमिति ॥ २६ ॥

[ विवरणम् ]

तस्य विशेषदर्शिनः आत्मभावभावना कैवल्यभागीयकर्मनिमित्ता स्वाभाविकी जन्मान्तरकर्मनिमित्ता इहजन्मापरिग्रहस्थैर्यकारणा वा । सा ह्याचार्योपदेशानपेक्षा स्वाभाविकी प्रवर्तते । तस्य कर्मणस्तादृशस्य अभावात् इदमुक्तम्—स्वभावदोषात् अशुद्धकर्मयोगात् एषां पूर्वपक्षे सम्यग्दर्शनतदुपायविपर्यये रुचिर्भवति, अरुचिश्च निर्णये सम्यग्दर्शने ॥

तत्रात्मभावभावना का पुनरित्याह—कोऽहमासं, कथमहमासं, किंस्विदिदं, कथंस्विदिदं, के भविष्यामः, कथं भविष्यामः, इति । सा तु विशेषदर्शिनो निवर्तते । यद्विषया हि जिज्ञासा, तस्मिन्नधिगते तद्विषया जिज्ञासा विनिवर्तते । कुतः एतदेवम्? यतः चित्तस्यैवैषः के भविष्याम इत्यादिः चित्रः परिणामः न पुरुषस्य । पुरुषस्त्वसत्यामविद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति । यस्मादेवमत एवं विशेषदर्शिनः तस्यात्मभावभावना कुशलस्य निवर्तते ॥ २५ ॥

यदा च विशेषदर्शनमुदपादि, तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् । यदस्य चित्तं विषयनिम्नं विषयप्रवणम् अज्ञानप्राग्भारम् अज्ञाननिष्ठं संसाराभिमुखम् आसीत्, तदस्य विशेषदर्शिनः तदानीमन्यथा भवति, कैवल्यप्राग्भारं विवेकनिम्नम् इति प्रतिस्रोतोवृत्तिर्ज्ञायते ॥ २६ ॥

---

1. यस्या-
2. स्वभावं मुक्त्वा दोषाद्येषां
3. ततोऽस्याऽऽ
4. विषय
5. अज्ञान
6. विवेकजज्ञान

[ सूत्रम् ]

## तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥ २७ ॥

[ भाष्यम् ]

[1]विवेकनिम्नस्य सत्त्वपुरुषान्यताख्याति[2]प्रवाहाधिरोहिणश्चित्तस्य तच्छिद्रेषु प्रत्ययान्तराण्यस्मीति वा ममेति[3] वा। कुतः ? क्षियमाणबीजस्य[4] पूर्वसंस्कारेभ्य इति ॥ २७ ॥

[ सूत्रम् ]

## हानमेषां क्लेशवदुक्तम् ॥ २८ ॥

[ भाष्यम् ]

यथा क्लेशा दग्धबीजभावा न प्ररोहसमर्था भवन्ति, तथा ज्ञानाग्निना दग्धबीजभावः पूर्वसंस्कारो न प्रत्ययप्रसूर्भवति । ज्ञानसंस्कारास्तु चित्ताधिकारसमाप्तिमनु शेरत इति न चिन्त्यन्ते ॥ २८ ॥

[ विवरणम् ]

तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः । विवेकनिम्नस्य उत्तरोत्तरविवेकप्रवणचेतसः पुरुषस्य ज्ञानिनः अन्यताख्यातिप्रवाहाधिरोहिणः सत्त्वपुरुषान्यतास्रोतःप्लाविनः चित्तस्य तच्छिद्रेषु विवेकप्रत्ययप्रवाहान्तरालेषु प्रत्ययान्तराणि विपर्ययलक्षणानि अस्मीति वा ममेति वा । कुतः तानि भवन्तीत्याह––क्षीयमाणक्लेशादिबीजस्य चित्तस्य पूर्वोपचितविपरीतसंस्कारेभ्यः प्रत्ययान्तराणि जायन्ते ॥ २७ ॥

हानमेषां क्लेशवदुक्तम् । यथा क्लेशा दग्धबीजभावा न प्ररोहसमर्था भवन्ति इति '[5]ते प्रतिप्रसवहेयाः सूक्ष्माः' इत्यत्रोक्तम्, एवं ज्ञानाग्निदग्धबीजभावाः अस्मि ममेत्यादिप्रत्ययसंस्कारा न प्ररोहसमर्था भवन्ति । दग्धशालिबीजवत् पूर्वसंस्कारो न प्रत्ययप्रसूर्भवतीत्यर्थः ॥

ज्ञानसंस्कारास्तु कथमप्रतिपक्षाः सन्तश्चित्तमधिकारे न(विज)योजयिष्यन्तीति ? ते तु सम्यग्दर्शनसंस्काराश्चित्ताधिकारपरिसमाप्तिमनुशेरते । सहैवाश्रयेणावसितप्रयोजनेन चित्तेन प्रलीयन्ते । न पुनश्चित्तमधिकारप्रवणं कुर्वन्ति । अधिकारहेतोरविद्यायाः प्रतिपक्षत्वाज्ज्ञानस्य । तत्र निष्फलत्वात् न चिन्त्यन्ते । न हि स्वयं पततः पतनहेतुरन्वेषणीयः ॥ २८ ॥

---

1. प्रत्ययविवेक
2. मात्रप्रवाहिणः
3. वा जानामीति वा न जानामीति वा ।
4. बीजेभ्यः
5. यो. सू. 2-10.

[ सूत्रम् ]

प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथाविवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥

[ भाष्यम् ]

यदाऽयं ब्राह्मणः प्रसङ्ख्यानेऽप्यकुसीदस्ततोऽपि न किंचित् प्रार्थयते । तत्रापि विरक्तः[1] सर्वथाविवेकख्यातिरेव भवतीति संस्कारबीजक्षयान्नास्य प्रत्ययान्तराण्युत्पद्यन्ते । तदाऽस्य धर्ममेघो नाम समाधिर्भवति ॥ २९ ॥

[ सूत्रम ]

ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥

[ भाष्यम् ]

तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति । कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति ।

[ विवरणम् ]

विवेकख्यातिप्रवणान्तःकरणस्य ब्राह्मणस्य प्रसंख्यानेऽप्यकुसीदस्य सर्वथाविवेकख्यातेर्धर्ममेघः समाधिः । स यदा अयं ब्राह्मणः प्रसंख्याने विवेकदर्शनशीलितेऽप्यकुसीदः अवृद्धिको भवति, ततोऽपि प्रसंख्यानप्रसादविशेषादधिकं न किंचित् प्रार्थयते । अपिशब्दात् प्रसंख्यानेऽपि न प्रार्थना । तत्रापि प्रसंख्याने विरक्तः । सर्वथा सर्वेण प्रकारेण विवेकख्यातिर्यस्य स सर्वथाविवेकख्यातिरेव भवति ॥

क्लेशसंस्कारबीजक्षयात् नास्य शरीरादौ शून्यवेश्मनीव अस्मि ममेति वा ज्ञानप्रसादमात्रैकायतनस्य प्रत्ययान्तराण्युत्पद्यन्ते । तदाऽस्य ब्राह्मणस्य सर्वथाविवेकख्यातेः धर्ममेघो नाम समाधिर्भवति । कैवल्याख्यं परं धर्मं वर्षतीति धर्ममेघः इति संज्ञा ॥ २९ ॥

ततः क्लेशकर्मनिवृत्तिः । तस्य धर्ममेघनाम्नः समाधेः सम्यग्दर्शनपाकाभिरूपस्य [ लाभात् ] भावात् अविद्यादयः क्लेशाः समूलकाषं कषिताः वासनाभिः सह समस्ताः प्रलीनाः भवन्ति । कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति । मूलैः क्लेशैः सहोच्छिन्ना भवन्ति ॥

---

1. क्तस्य

[ भाष्यम् ]

क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति । कस्मात्? यस्माद्विपर्ययो भवस्य कारणम् । न हि क्षीणविपर्ययः कश्चित् केनचित्क्वचिज्जातो दृश्यत इति ॥ ३० ॥

[ सूत्रम् ]

**तदा सर्वावरणमलापेतस्य ज्ञानस्याऽऽनन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥**

[ भाष्यम् ]

सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्याऽऽनन्त्यं भवति । आवरकेण तमसाऽभिभूतमावृतमनन्तं ज्ञानसत्त्वं क्वचिदेव रजसा प्रवर्तितमुद्घाटितं ग्रहणसमर्थं भवति । तत्र यदा सर्वैरावरणमलैरपगतं भवति, तदा भवत्यस्याऽऽनन्त्यम् । ज्ञानस्याऽऽनन्त्याज्ज्ञेयमल्पं संपद्यते । यथाऽऽकाशे खद्योतः ।

[ विवरणम् ]

क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान् मुक्तो भवति । कस्मात् एवम्? यतो विपर्ययः मिथ्याज्ञानं भवस्य जन्मनः कारणम् । न हि क्षीणविपर्ययः कश्चित् क्वचिज्जातो दृश्यते ॥ ३० ॥

**तदा सर्वावरणमलापेतस्य ज्ञानस्याऽऽनन्त्यात् ज्ञेयमल्पम् ।** तदा धर्ममेघसमाधिसमये, सर्वैः क्लेशकर्मावरणैः रजस्तमोजन्मभिः विमुक्तस्य, ज्ञानस्य सत्त्वपुरुषान्यताख्यातिमात्रस्य भवत्यानन्त्यम् । तत् कथमिति? तमसा(न)ऽभिभूतमनन्तं ज्ञानसत्त्वं, तस्य तिरस्कृतरजोमलस्यानन्तस्य निस्तरङ्गमहोदधिदेशीयस्य निरहितस्याविक्रियस्य कथं तद्ग्रहणसामर्थ्यमित्याह—क्वचिद्रजसा प्रवर्तितं चित्तसत्त्वम् उद्घाटितं वायुनेव महापयोदमण्डलगाहृतं सूचितं ग्रहणसमर्थं भवति । स्वतः सत्त्वस्याप्रवर्तनात् रजसो हि प्रवृत्तिसामर्थ्यमिति ॥

तदाऽस्य चित्तस्य भवत्यानन्त्यम्, अशेषज्ञेयविषयत्वमम्बरतलमध्यवर्तिनो जलधरनिरोधनिर्गतस्य रवेरिव । तस्य ज्ञानस्यानन्त्यात् अशेषविषयत्वात् ज्ञेयमल्पं सम्पद्यते । यथा आकाशे खद्योतः इति । यथा आकाशापेक्षया खद्योतो न किंचिदेवमेतज्ज्ञानाभिसमीक्षया ज्ञेयं न किंचिदिति ॥

[ भाष्यम् ]

यत्रेदमुक्तम्—

"अन्धो मणिमविध्यत्तमनङ्गुलिरावयत् ।
अग्रीवस्तं प्रत्यमुञ्चत्तमजिह्वोऽभ्यपूजयत् ॥" इति ॥ ३१ ॥

[ सूत्रम् ]

**ततः कृतार्थानां परिणाम[1]क्रमपरिसमाप्तिर्गुणानाम् ॥ ३२ ॥**

[ भाष्यम् ]

तस्य धर्ममेघस्योदयात् कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते । न हि कृतभोगाप[2]वर्गार्थाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते ३२ ॥

अथ कोऽयं क्रमो नामेति—

[ सूत्रम् ]

**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥**

[ विवरणम् ]

परमार्थज्ञानावस्थायामशेषविपर्ययतिरोधाने सर्वपुरुषार्थशून्यता चेत्येतत्प्रदर्शनार्थमुदाहरणमाह—**यत्रेदमुक्तम्—अन्धो मणिमविन्दत् (ध्यत्) तमनङ्गुलिरावयत् । अग्रीवः[तं]प्रत्यमुञ्चत् तमजिह्वोऽभ्यपूजयत् ॥ इति ।** यथा अन्धादीनां मणिवेधादिकमसम्भवदपि विपर्ययेणान्धो मणिमविध्यदिति व्यवह्रियते, तथा ज्ञानज्ञेयसंव्यवहारोऽपि विपर्ययावस्थायामेव । विपर्ययाभावे तु सर्वपुरुषार्थशून्या एव गुणाः सम्पद्यन्त इति ॥ ३१ ॥

**ततः कृतार्थानां परिणामक्रमपरिसमाप्तिर्गुणानाम् ।** ततः धर्ममेघसमाधिसमुदयात् कृतार्थाश्चित्तगुणाः सम्पद्यन्ते । चित्ताधीनत्वाच्च कार्यकरणारम्भिणोऽपि सत्त्वादयः कृतार्था भवन्ति । समस्तस्य पुरुषार्थस्य कृतत्वात् । एषां **कृतार्थानां गुणानां** जन्ममरणप्र(भाव)वाहरूपः **परिणामक्रमः परिसमाप्यते । न हि कृतभोगापवर्गार्थाः** क्षणमपि प्रयोजनाभावात् **अवस्थातुमुत्सहन्ते ॥ ३२ ॥**

परिणामक्रमपरिसमाप्तिरित्युक्तम् । **अथ कोऽयं गुणक्रमो नाम?** यस्य परिसमाप्तिरुपवर्णिता । तस्यायमधिगमोपाय उच्यते—**क्षणप्रतियोगी परिणामापरान्तनिर्ग्राह्यः क्रमः ।** क्षणं प्रति युज्यत इति **क्षणप्रतियोगी ।**

---

1. क्रमसमा- 2. -वर्गाः

[ भाष्यम् ]

क्षणानन्तर्यात्मा परिणामस्यापरान्तेनावसानेन निगृह्यते[1] क्रमः । न ह्यननुभूतक्रमा[2] पुराणता वस्त्रस्यान्ते भवति । नित्येषु च क्रमो दृष्टः ॥

द्वयी चेयं नित्यता कूटस्थनित्यता परिणामनित्यता च । तत्र कूटस्थनित्यता पुरुषस्य । परिणामनित्यता गुणानाम् । यस्मिन् परिणममाने तत्त्वं न विहन्यते तन्नित्यम् । उभयत्र[3] च [4]तत्त्वस्याविघातान्नित्यत्वम् ।

[ विवरणम् ]

क्षणानन्तर्यात्मा क्षणस्यानन्तरता क्षणानन्तर्यं तदात्मा तत्स्वभावः । क्षणानन्तर्यमेव '[5]क्षणतत्क्रमयोः' इति व्याख्यातम् ॥

किं पुनरस्य ग्रहणे लिङ्गमित्याह—परिणामस्यापरान्तेन विनाशावस्थारूपेण अवसानेन लिङ्गेन निगृह्यते सः क्रमः । कथमपरान्तेन निर्ग्रहणमिति? उच्यते--न ह्यननुभूतक्रमा क्रममनवलम्बमाना क्षणे क्षणे पुराणता वस्त्रस्यान्ते विनाशकाले भवति इति । न हि कदाचिद्भूतमात्रस्यैव वस्त्रस्य पुराणता दृश्यते । तस्मात् पुराणताभिव्यक्तिलिङ्गेनाभ्यूह्यते--येनेयं पुराणता वस्त्रस्याभिव्यक्तिमुपसंप्रापिता स क्रमः ॥

तत्र यदि लब्धावसानत्वमलब्धावसानत्वं च क्रमस्य स्यात्, ततो युक्तं कृतार्थानां परिणामक्रमपरिसमाप्तिर्गुणानाम् इति वक्तुम्। तच्च लब्धालब्धावसानत्वं क्रमस्य नित्यानित्यत्वे घटते । तत्रानित्येषु वस्त्रादिषु क्रमो दृष्टः, न तु नित्येषु । ततश्च गुणानां नित्यानां परिणामक्रमपरिसमाप्तिरयुक्ता स्यादित्याशङ्कमान आह—नित्येषु च क्रमो दृष्टः । किं सर्वत्र? नेत्याह—द्विविधेयं नित्यता, परिणामनित्यता गुणानां, कूटस्थनित्यता पुरुषस्येति ॥

ननु परिणामिनां गुणानां कथं नित्यता स्यादिति ब्रवीति—यस्मिन् परिणममाने तत्त्वं न विहन्यते । यस्य यद्रूपं प्रमाणेनोपलब्धं, तस्य तत् तत्त्वम्। तद्यस्मिन् न विहन्यते न व्यभिचरति, तदपि नित्यम्। गुणानामपि सुखदुःखमोहात्मता प्रकाशक्रियास्थितिशीलता च तत्त्वं न विहन्यते। तस्मादेतेऽपि परिणामनित्याः । उभयत्र च गुणपुरुषेषु तत्त्वस्याविघातान्नित्यत्वम् । ततो गुणेष्वपि नित्येषु परिणामो दृष्ट इति लब्धालब्धपर्यवसानत्वं स्थितम् ॥

---

1. गृह्यते
2. मक्षणा
3. स्य च
4. तत्त्वानभि
5. यो. सू. 3-52.

[ भाष्यम् ]

तत्र गुणधर्मेषु [1]महदादिषु परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्यवसानो नित्येषु धर्मिषु गुणेष्वलब्धपर्यवसानः। कूटस्थनित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तिता क्रमेणैवानुभूयत इति तत्राप्यलब्धपर्यवसानः शब्दपृष्ठेनास्तिक्रियामुपादाय विकल्पित इति ॥

अथाऽस्य संसारस्य स्थित्या गत्या च गुणेषु वर्तमानस्यास्ति क्रमसमाप्तिर्न वेति ?। अवचनीयमेतत्। कथम्? अस्ति प्रश्न एकान्तवचनीयः सर्वो जातो मरिष्यतीति। ॐ भो इति॥

अथ सर्वो मृत्वा जनिष्यत इति ? विभज्यवचनीयमेतत्। प्रत्युदितख्यातिः क्षीणतृष्णः कुशलो न जनिष्यते, इतरस्तु जनिष्यते। तथा,

[ विवरणम ]

तत्र गुणधर्मेषु महदादिषु परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्यवसानः शरीरादिष्विव । नित्येषु तु गुणेषु धर्मिष्वलब्धपर्यवसानः नित्यत्वादेषाम्। कूटस्थनित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तिता क्रमेणैवानुभूयते । तेन मुक्तपुरुषेष्वसत्यप्यनुभवद्वारेण, शब्दपृष्ठेनास्तिक्रियामुपादाय विकल्पितः इति अलब्धपर्यवसान एव । परमार्थतः पुरुषेष्वपरिणामित्वान्नास्ति क्रम इत्यर्थः ॥

अथास्य संसारस्य स्थित्या प्रधानरूपेण, गत्या विकारात्मना, द्वयं च गुणात्मकमिति गुणेषु च वर्तमानस्य अस्ति क्रमपरिसमाप्तिः न वेति? अवचनीयमेतत्। अस्त्येवेत्यवधारणं न शक्यं कर्तुम् । नापि नास्त्येवेति । किं तु विभज्य, कस्यचिदस्ति कस्यापि नास्तीति वचनीयमेव ॥

कथम्? अस्ति प्रश्न एकान्तवचनीयः अप्रविभज्यापि । यथा सर्वो जातो मरिष्यति अज्ञानी इति। ननु ज्ञानवानपि मरिष्यत्येव । उच्यते— अज्ञस्य हि मरणमित्यभिमानः, न ज्ञानिनः। तथा चोक्तम्—'मिथ्यैतदाहुर्म्रियतीति मूढाः' इति ॥

अथ सर्वो मृत्वा जनिष्यत इति? विभज्य वचनीयमेतत् एकान्तानुपपत्तेः । कथम्? प्रत्युदितख्यातिः क्षीणतृष्णः कुशलो न जनिष्यते, इतरः अज्ञः जनिष्यते ॥

---

1. बुद्ध्या

[ भाष्यम् ]

मनुष्यजातिः श्रेयसी न वा श्रेयसीत्येवं परिपृष्टे, विभज्य वचनीयः प्रश्नः—पशूनधिकृत्य श्रेयसी, देवानृषींश्चाधिकृत्य नेति । अयं त्ववचनीयः प्रश्नः—संसारोऽयमन्तवानथानन्तः? इति । कुशलस्यास्ति संसार[1]चक्रसमाप्तिर्नेतरस्येति अन्यतरावधारणे दोषः । तस्मा[2]द्व्याकरणीय एवायं प्रश्न इति ॥ ३३ ॥

गुणाधिकार[3]परिसमाप्तौ कैवल्यमुक्तम् । तत्स्वरूपमवधार्यते—

[ सूत्रम् ]

**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥**

## ॥ इति श्रीमहर्षिपतञ्जलिविरचिते योगसूत्रे चतुर्थः कैवल्यपादः ॥

[ विवरणम् ]

तथा मनुष्यजातिः श्रेयसी एव नैव वेत्यवचनीयः प्रश्नः । प्रविभज्य तु वचनीय एव । कथम्? पशूनुद्दिश्य श्रेयसी भवति । देवानृषींश्चाधिकृत्य न श्रेयसी भवति ॥

अयं त्ववचनीय एव अप्रविभज्य सामान्येन प्रश्नः—यथा संसारोऽयमन्तवानेवेति अनन्त एवेति वा । बन्धमोक्षानुपपत्तेः । प्रविभज्य तु वचनीय एव । यथा कुशलस्यास्ति संसारचक्रपरिसमाप्तिर्नेतरस्येति ॥

अन्यतरावधारणे दोषः । संसारोऽन्तवानेवानन्त एवेति वान्यतरावधारणे दोषः । तस्माद्व्याकरणीय एवायं सामान्येनाप्रविभज्य प्रश्नः, यथा—सर्वो मृत्वा जनिष्यते इति, एवं मनुष्यजातिः श्रेयस्येवेति च । तस्मात् सुष्ठूक्तं कृतार्थानां परिणामक्रमपरिसमाप्तिर्गुणानामिति विशेषणम् ॥ ३३ ॥

गुणाधिकारपरिसमाप्तौ कैवल्यमुक्तम् । तत्स्वरूपमवधार्यते । कैवल्यं प्रति विप्रतिपत्तेः । केषांचिद्विज्ञानसन्तानस्यात्यन्तोपशमः कैवल्यम् । केषांचित्तु नवानामात्मगुणानां बुद्धीच्छाद्वेषप्रयत्नसुखदुःखधर्माधर्मसंस्काराणामुच्छेदेनाचेतनस्य द्रव्यमात्रस्य पुरुषस्यावस्थानम् । केषांचिदीश्वरसायुज्यम् । केषांचित् सर्वज्ञत्वादीश्वरतुल्यधर्मत्वप्राप्तिः कैवल्यमिति भिन्ना मतिः ॥

1. क्रमस- 2. द्व्याक 3. क्रमस

[ भाष्यम् ]

कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्यकरणात्मकानां गुणानां तत् कैवल्यं, स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वानभि-[1]संबन्धिनी पुरुषस्य चितिशक्तिरेव केवला, तस्याः सदा तथैवावस्थानं कैवल्यम् ओमिति ॥ ३४ ॥

इति श्रीपातञ्जलयोगसूत्रभाष्ये श्रीमद्वेदव्यासकृते
॥ चतुर्थः कैवल्यपादः ॥

[ विवरणम् ]

इहापि विप्रतिपत्तिप्रणोदाय कैवल्यस्वरूपमवधार्यते–पुरुषार्थशून्यानां गुणानां यः प्रतिप्रसवः प्रतिसंसर्गः स्वकारणे प्रत्यस्तमय इत्यर्थः, कार्यकरणात्मकतया परिणतानाम्, तत् कैवल्यं पुरुषस्य केवलत्वं गुणैरमिश्रीभाव इत्यर्थः ॥

स्वरूपप्रतिष्ठा वा चितिशक्तिरिति । बुद्धिसत्त्वानभिसंबन्धिनी या पुरुषस्य चितिशक्तिः अमिश्रा केवला तस्याः सदा तथैव अवस्थानं केवलायाः भावः कैवल्यम् ॥

ननु कैवल्यस्यैकत्वे कथं विकल्पः? क्रियायां हि विकल्पो न तु वस्तुनि । वस्तुस्वरूपस्य भेदानुपपत्तेः । कैवल्यमपि वस्तु, कथं तद्विकल्प्यत इति । नैष दोषः । निमित्तनैमित्तिकयोः प्रभेदोपपत्तेः । निमित्तनैमित्तिकभेदोपचरितोऽपि विकल्पो न वस्तुस्वरूपभेदकृतः । या तु गुणानां परिणामिता पुरुषस्य विमिश्रता वृत्तिसरूपता, सा कार्यकरणात्मकानां पुरुषार्थशून्यानां गुणानां प्रतिसंसर्गान्निमित्तादपगच्छतीति निमित्तमेव प्रतिप्रसवाख्यं कैवल्यशब्देनोपचरितं पूर्वम् ॥

द्वितीयं तु गुणप्रतिप्रसवनिमित्तभावि यत् स्वरूपावस्थानं पुरुषस्य गुणैरमिश्रिततया, तत् कैवल्यमिति विशेषः । गुणपुरुषान्तरस्वरूपतत्त्वनिर्धारणेन तन्त्रान्तरीयतत्त्वस्वरूपनिराकरणेन च कैवल्यान्तराणि निवेदितव्यानि ॥

तत्रोङ्कारो मङ्गलार्थः प्रयुक्तः परमेश्वरनामाङ्कितमस्तकतया तन्त्रप्रचयार्थं शान्त्यर्थं वा वेदारण्यकवदिति ओम् इति ॥

---

1. संबन्धात्पु-

ओङ्कारो यस्य वक्ता समचरत फलैः कर्म यस्मादशेषं
निष्कर्मक्लेशपाको घटयति सकलं यः फलेन क्रियाणाम् ।
ईशानामीश्वरो यः स्थितिभवनिधनप्रक्रियाणां विधाता
ध्यायन्नः शुक्लिमानं व्यपनुदतु तरां कृष्णिमानं स कृष्णः ॥

यात्राकृतस्त्रिजगतां यदचिन्त्यशक्ति-
लेशान् दशाहुरिह मीनमुखावतारान् ।
क्लेशोद्भवत्रिविधतापपरम्परार्ताः
तं नागनाथशयनं शरणं व्रजामः ॥

फणरत्नौघविद्योति [ पृथिवी ]युनभोदिशे ।
योगीन्द्राय फणीन्द्राय तत्पतञ्जलये नमः ॥

योगेन चित्तस्य पदेन वाचां मलं शरीरस्य तु वैद्यकेन ।
योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि ॥

स जयति पतञ्जलिमुनिः येन श्रेयोऽर्थिसार्थसस्यानाम् ।
विहितो हर्षस्तापत्रितयहृता धर्ममेघेन ॥

यस्ततान भवमार्गलङ्घिनां क्लेशकर्ममयघर्मनुत्तये ।
धर्ममेघमुखयोगतोयदम् [तं पतञ्जलिमृषिं प्रणतोऽस्मि] ॥

[1]वदनाहितपूर्णचन्द्रकं गुरुमीशानमभूतिभूषणम् ।
प्रणमाम्यभुजङ्गसङ्ग्रहं भगवत्पादमपूर्वशङ्करम् ॥

इति श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य परमहंसपरिव्राजकाचार्यस्य
श्रीशङ्करभगवतः कृतौ
पातञ्जलयोगसूत्र(शास्त्र)भाष्यविवरणे
चतुर्थः कैवल्यपादः ॥

॥ समाप्तं चेदं विवरणम् ॥

---

1. अयं कस्यचित् भगवत्पादशिष्यस्य गुरुप्रणामरूपः श्लोकः अन्ते निवेशितः लेखकेन । अथवा शिष्यप्रार्थनया तत्प्रीत्यर्थं भगवत्पादैरेव शिष्यकृतस्वस्तुतिरूपोऽयं श्लोकः ग्रन्थान्ते निबद्धः स्यात् । यथा भामत्यां मिश्रशिष्यस्य सनातननाम्नः कृतेः मिश्रस्तुतिरूपपद्यस्य ग्रन्थे निवेश इति, वेदान्तकल्पतरौ चतुर्थाध्यायारम्भे "आचार्यस्य शिष्यः सनातननामा, तत्कृतां स्तुतिं तत्प्रीत्यर्थं प्रबन्धमधिरोपयति-'शङ्के' इति ।" इति वाक्येनोक्तम् । श्रीवैष्णवग्रन्थेषु ग्रन्थोपक्रम एव ईदृशी रीतिः बहुलं दरीदृश्यते । तदवलोकिनां नैतद्विस्मयकरम्—कथं स्वस्यैव स्वेनैव स्तुतिः क्रियेत ? इति ॥

## ॥ अथ पातञ्जलयोगसूत्राणां वर्णानुक्रमसूची ॥

